१०८ श्रीविश्वप्रियमध्वनाथ श्रीचरणविरचिता

# शास्त्रभूषासाहस्री

(श्रीन्यायामृत सारसङ्ग्रहः)




**पण्डितराज श्री जालिहाळ श्रीनिवासाचार्याणां**

प्रियान्तेवासिना, **श्री कोयमत्तूरू शेषगिरीशाचार्य** सूनुना,

**ताम्रपर्णी श्रीनिवासाचार्येण** विरचितया

मञ्जूषाख्यव्याख्यया संवलिता ।

१०८ श्रीविश्वप्रियमध्वनाथश्रीचरणविरचिता

# सत्पद्यभूषासाहस्री

श्रीन्यायामृतसारसङ्ग्रहः

(अद्वैतसिद्धिब्रह्मानन्दिखण्डनरूपा)।


श्रीमदुत्तरादिमठाधीशानां, प्रातःस्मरणीय

**१००८ श्री श्री सत्यध्यानतीर्थ श्रीचरणानां**

प्रियशिष्याणां पण्डितराज।

**श्री जालिहाळ श्रीनिवासाचार्याणां**

प्रियान्तेवासिना

श्रीकोयमत्तूरू शेषगिरीशाचार्य सूनना

**ताम्रपर्णी श्रीनिवासाचार्येण विरचितया**


मञ्जूषाख्यव्याख्यया सवालता


प्रकाशनम्

**श्रीन्यायामृत प्रकाशन सेवा समितिः**

**(प्रथमो भागः)**

१९९२

108 SRI VISHWAPRIYA MADHWANATHA

SRI CHARANA VIRACHITA

# SATPADYA BOOSHA SAHASRI

## (SRINYAYAMRITHA SARASAMGRAHA)

(A CRITICISM ON ADVAITASIDDHI & BRAMHANANDI)

WITH THE COMMENTARY

## MANJOOSHA

OF


**TAMRAPARNI SRINIVASACHARYA**

Son of C.H. Sheshagirisacharya, FCA

A BELOVED DISCIPLE OF PANDIT RAJ

**SRINIVASACHARYA , Jalihal.**



Published by

NYAYAMRITA PRAKASHNA SEVA SAMITI

VOL I

1992

|| श्रीः ||

# विषयानुक्रमणिका

|| श्री गुरुराजो विजयते ||

# || भूमिका ||

आनन्दतीर्थसरसागमभावसारं
मायावितन्त्रविषहारि पर बुधानां
आमोदमेदुरमुदं विदध (वितर) न्नितान्तं
न्यायामृतं वितरतात्सकलेप्सितानि ||

इह खलु जगति सर्वमपि जन्तुजात दुःखवदेवेति विदो विदन्त्येव । दुःख परिजिहीर्षया सुखानुभवाविर्भावाय तनोति प्रयत्न , परन्तु नैव प्राप्नोति सुख वा दुःखोपरमम् । एव तत्सङ्कल्पवैफल्यमपि साक्षिविषयी भवति सर्वेषाम् । एव प्रियाप्रियवियोगसुयोगजन्मना शोकाग्निना दन्दह्यमाना सुखलेशमप्यलभमाना संसारकान्तारे परिभ्रमन्तो दरीदृश्यन्ते भूता[illegible] नेवापूर्वोय विषयः विवेकशालिना वेदविदुषाम् ।

एवं जीवानां दुःखोपरमस्य शाश्वतसुखाविर्भावस्य च उपायावगमनाय सर्वेषामाम्नायाना प्रवृत्तिः ।स्वयं श्रुतिरेवास्मिन्विषये

अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ।

इति स्वाशयमाविष्कुर्वन्ती वरीवर्ति । भगवान् बादरायणोपि एतदर्थमेव गौतमशापादिना समुत्सन्नं सज्ज्ञानसाधनमपि श्रुतिजात अभिव्यजयामास । शाखाभेदेन च विबभाज । तदर्थविनिर्णायकब्रह्मसूत्राणि प्रणिनाय ।

तदेतेषु सर्वशास्त्रेषु इयानेव विषयः प्रधानतयोपवर्णितः , यत् ससारकारागारविमोचनाय कारुण्याद्यगण्यगुणगणसंपूर्णो नारायण एव शरणीकरणीयः। स एव खलु परमस्वतन्त्रः सर्वप्रवृत्तिहेतुश्च । स्वाधीनया चेतनया प्रकृत्या स्वेच्छारूपया अविद्यया च जीवाना चिदनादिस्वरूप आच्छाद्य स्थूलादिशरीरादिना तान् संयोज्य तत्तदुचि-

तानि कर्माणि कारयन् वैषयिकसुखदुःखादीननुभावयति । ततो बन्धकोयमेव भगवान् नारायणः श्रवणाद्युपासनाजनितसाक्षात्कारसंजातपरमभक्त्या प्रसन्नो भवपाशैर्विमोच्य जीवानां स्वस्वरूपानन्दानुभवरूपां मुक्तिं ददातीति ।

बन्धको भवपाशेन भवपाशाच्च मोचकः ।
यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण ।

इत्याद्यागमा अत्र प्रमाणम् । तथा तादृशप्रसादहेतुरपि भक्तिः तत्साक्षात्कारमन्तरेण नैवोपजायत इति जानन्त्येव ज्ञानिनः । विवृतं चैतत् टीकाकृत्पादैः "यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया "॥

जिज्ञासोत्थज्ञानजातप्रसादादेव मुच्यते ।

इत्याद्यनुव्याख्यानव्याख्यानप्रस्तावे । एव भगवत्साक्षात्कारोपि तदुपासनयैव स्वयोग्यतातदुपासनापि श्रवणादिजिज्ञासयैवेति सर्वमुपपादितम् । तत्र सर्ववेदेतिहासपुराणाना महातात्पर्यभगवतो नारायणस्य परब्रह्मणः सर्वोत्तमत्व एव । तत्स्वातन्त्र्याद्यनन्तकल्याणगुणपरिपूर्णत्वादिमीमासाया एव सूत्रादिषु विधानात् ।तादर्थमेव जन्मादिसूत्रे जिज्ञास्यब्रह्मणो जीवादिवैलक्षण्याय जगज्जन्मादिलक्षणमुदीरितं भगवता बादरायणेन सूत्रकारेण । तदेव परमप्रमाणभूतैरशेषैराम्नायैः सूत्रजातैश्च सेतिहासपुराणैश्च निराद्यमान जगज्जन्मादिकर्तृत्वं ब्रह्मलक्षण, जगतः, पारमार्थिकसत्यतां जीवब्रह्मणोः परमार्थतः भेदं च विना वास्तवं न संभवति । जगतो मिथ्यात्वे च तज्जन्मादिकर्तृत्वमपि अवास्तवमापद्येत । ततश्च अवास्तवलक्षणप्रतिपादकत्वे च श्रुतिसूत्रपुराणादीना सर्वेषामप्रामाण्य प्रसज्येत । तस्मात् प्रपञ्चसत्यता ब्रह्मणो गुणपूर्णता चेति द्वय समस्तस्य प्रपञ्चस्य भगवदेकाधीनता चेत्यादिप्रमेयजातं श्रीपूर्णप्रज्ञभगवत्पादैः सिद्धान्तित सर्वमपि अवश्य वेदितव्यम् । उक्तं च श्रीमदानन्दतीर्थभगवत्पादैः ।

य एतत्परतन्त्रं तु सर्वमेव हरेः सद
वशमित्येव जानाति संसारान्मुच्यतेञ्जसा (हि सः) ॥

इत्यादि तत्र तत्र । सर्वज्ञकल्पाः टीकाकृत्पूज्यचरणा अपि व्याख्येयमूलग्रन्थानुसारेण समर्थयन्ति भगवद्गुणपूर्णतां ,निरस्यन्ति जीवादिविश्वाभेद ब्रह्मणः । सोपपत्तिकं समुपपादयन्ति विश्वसत्यतां ।निराकुर्वन्ति च परोदीरित नैर्गुण्याभेदविश्वमिथ्यात्ववादान् सुनिपुणतरमिति विदितमेव सर्वेषां विदुषाम् ।

एव वेदान्तदर्शनसंप्रदाये च द्वैताद्वैतवादः प्रभूतो वरीवर्ति । इतरे वादिनः खलु द्वैतनिरासाय यतन्ते । पञ्चपादिकाविवरण ,अद्वैतदीपिका ,नयचन्द्रिका ,प्रमाणामालादिग्रन्थाः अद्वैतिग्रथिता वर्तन्ते । तत्र दूषणाभासैः अविचाररमणीयैः वचनैः युक्तिभिश्च ब्रह्मसगुणत्व विश्वभेदः विश्वपारमार्थिकसत्त्वादिप्रमेयजात दूषितमिव दृश्यते । तदेतद्ग्रन्थजात अवलोकयता सज्जनानां चेतांसि सन्देहावस्कन्दितानि खेदमुपयन्ति । श्रीमदानन्दतीर्थीयदर्शने सदृढप्रामाण्यनिर्णयं नैव प्राप्नुवन्ति सामान्यसज्जनाः प्रौढन्यायमीमांसादि दर्शनान्तरप्रक्रियापरिभाषाकर्कशणा परकीयप्रबन्धाना सुलभावगाहे वा निवेशने वा निराकरणे वा साधारणाः पण्डिताः अपि यत्र न पारयन्ति किमुत तत्र वक्तव्य सामान्यसज्जनाना तादृशी योग्यता नास्तीति ।

अतो वृन्दारकवरैरपि समादरणीये रमणीयेस्मिन् माध्वद्वैतवेदान्तदर्शने सुदृढप्रामाण्यनिर्णय समुपजनयितु तत्सिद्धान्तप्रमेयनिकुरुम्बस्य प्रमाणारूढतां प्रदर्शयितु तत्प्रतीपाना अद्वैतिप्रौढप्रबन्धोदीरितवादान् समूलमुन्मूलयितुं सप्रमाण निराकर्तु च व्यासबिन्दुरसाचार्या इति विश्रुताः दिगन्तविश्रुतयशसो व्यासतीर्थाश्चन्द्रिकाकारा इत्येवमपि वसुधातलविख्याताः न्यायामृतनामान प्रबन्धराजं विनिर्ममिरे । तत्र सानुवादं परोदीरिताक्षेपान् दूषणाभासांश्च दूरीचक्रुः । सप्रमाणं स्वमतीयप्रमेयजातं समर्थयामासुः । सर्वस्यापि स्वकृतपरकीयदूषणस्य मूलटीकारूढतामपि प्रदर्शयामासुः। प्रतिजानते च न्यायामृते श्रीमद्व्यासतीर्थाः विक्षिप्तसङ्ग्रहात्क्वापि क्वाप्युक्तस्योपपादनात् । अनुक्तकथनात्क्वापि सफलोयं श्रमो मम । इति कण्ठतः अनुक्तानपि अर्थतः मूलटीकोक्तानेव अर्थान् कथयन्तीति तद्वचनं समर्थयन्ति श्री श्रीनिवासतीर्थाः । यदि न्यायामृतकारा नैवावतीर्णोभविष्यन् तर्हि माध्वतार्किकविदुषां वैदुष्यश्रियो महिती हानिरभविष्यत् । अत एव व्यासतीर्थकृतप्रबन्धवर्णनपरोयं श्लोको लोकविश्रुतो वरीवर्ति ।

मायातन्त्रामरारि स्मयमपनयतो मध्वसिद्धान्तनाम्नो
नेत्राणीव त्रयोपि त्रिजगति नृहरेरिन्धते यत्प्रबन्धाः ।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढौकते हि
सोयं श्रीव्यासराजः प्रदिशतु सततं भव्यमव्याहतं नः ॥ इति

अनाद्दिकालतो वृत्ताः समया हि प्रवाहतः

इति श्रीमदाचार्यानुव्याख्यानवचनानुसारेण तत्तद्दर्शनविदुषां वादविवादवैखरी पूर्वपूर्वसमयत एव समयानुसारेण नैकप्रकारा वर्तन्ते इत्येवं जानन्त्येव सन्तो विद्वांसः । सर्वोपि तत्तद्दर्शनविद्वत्प्रवराः स्वीयमतोत्कर्षसमर्थनाय यतन्त एव । यतो हि परमतनिराकरणमन्तरेण स्वमतसमर्थन नैव सम्यग्भवति । परमतनिराकरणे च परग्रन्थेषु परोदीरितविषयान् पश्यतामधिकारिणा जिज्ञासूना हृदये सन्देहोवतिष्ठति । अतोत्र तत्वविनिर्णयो नैव जायेत ।

तत्वनिर्णयहीनस्य सशयात्मनः नोपासनं दृढं न वापरोक्षज्ञानादिपुरुषार्थः भवति । अत एव "सशयात्मा विनश्यती" त्युक्तिः । एव विमृश्य पक्षप्रतिपक्षाभ्या निर्णय इति वचनमपि सार्थकं समाहितं भवति । श्रीमदानन्दतीर्थभगवत्पादप्रणीतेषु मूलग्रन्थेषु पूर्वपूर्वतनमतानि पूर्वपक्षतया अनूद्य सयुक्तिकं सप्रमाणं निराक्रियन्ते इति श्रीमदाचार्यसमय एव सिद्धान्त इति व्यवस्थापितं च । जानन्त्येव च सर्वे इतिहासज्ञा स्वसूक्ष्मेक्षिकया समयान् सकलविषयैः विमृशन्तो मध्वसिद्धान्तः एव सिद्धान्तः इति यथोक्त श्रीमद्वादिराजपूज्यचरणैः ।

अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि ।
यस्मादुत्तरपक्षोत्त्योस्मान्नाद्यापि विद्यत इति ॥

एव स्वसिद्धान्तस्य सिद्धान्ततां समर्थयन्तोव्यासराजा अपि न्यायामृतादिग्रन्थरत्नत्रयं प्रणिन्युः। तत्र सूत्र प्रस्थानमधिकृत्य प्रवृत्ता श्रीमद्ब्रह्मसूत्रतात्पर्यचन्द्रिका चन्द्रिका नाम्नैव वसुधा विश्रुता वर्तते । तत्र टीकागाम्भीर्यवर्णनं प्रतिजानन्तो व्यासतीर्थाः स्वीयग्रन्थशैलीमीषत् परिचाययन्ति ।

प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
वान्यपक्षयोः सम्यक् विदां कुर्वन्तु सूरयः ॥ इति
परोक्ते दुष्य एवांशो मिथैः शब्दैरनूद्यते ।

दूषण चापि हनुमत्भाष्यसूचितमुच्यते"॥ इति च तदेतत्सर्व निपुणतरं विमृशन्तो विपश्चितः । स्वकीया वा परमतीया वा सर्वेपि अस्य यथार्थ साक्षात्कुर्वन्त्येव " सूत्रप्रस्थानप्रवृत्ता अपि वादविचारपरंपरा चन्द्रिकातः एव भूयः कृतसमारम्भा दृशयते । शांकररामानुजभाष्य टीकाटिप्पण्यादीन् तत्कालोपलब्धान् प्रायः नान्मा उल्लिख्य तदीयाशयान् सानुवाद विमृश्य चन्द्रिकाकाराः स्वीयचन्द्रिकायां निरस्यन्ति । " एवं परेपि वादिनः तूष्णी नासन् तेपि चान्द्रिकोदाहृतपरमतदूषणानि समुद्धर्तु चन्द्रिकामण्डितसिद्धान्तरीतिं अपाकर्तु प्रायतन्त एव । " पर तेषा विरलप्रचार एवाभूत् । प्राचीनैः परमतीर्थैः पण्डितैः प्रायोनवमृष्टामपि चन्द्रिका अर्वाचीनाः केचन खण्डयितु प्रक्रान्ता विश्वमान्यचन्द्रिकानिरसनापयशोभाजो बभूवुः । अथापि तादृशानामपि दूषणाभासाना असङ्गतानामपि सज्जनमनःसमाधानाय अपि निरसन अवश्यं मन्यमानाः श्रीमत्सत्यध्यानश्रीचरणाः प्रातः स्मरणीयाः स्वीयचन्द्रिकामण्डनग्रन्थेन सज्जनचकोरान् रञ्जयामासुः । परमतीयपण्डितोत्तंसविहितवादान् सभासु तैः समं विचार्य युक्तिभिः तान् पराजित्य निराचक्रुः। एवमेव श्रीचरणसिद्धान्तमण्डनसरणिमनुसरन्तो नैके माध्वविद्वांसो माध्वचन्द्रिकां मण्डयामासुरिति प्रेक्षावतां अपरोक्षोयं विषयः । एवं प्राचीननवीनन्याय वैशेषिकदर्शनप्रक्रियां निराकरोति । श्रीव्यासराजयतिराजः तर्कताण्डवग्रन्थे । "तत्कालोपलब्धप्राचीनन्यायवैशेषिकग्रन्थान् तथा मणिकारदीधितिकारपक्षधरमिश्र सार्वभौमोपाध्यायानां वाक्यजातमनूद्य तन्मत निरस्यन्ति । स्वेनोद्भावितानि परमतदूषणानि स्वमतसाधनानि च मूलटीकावाक्यारूढानि कुर्वन्ति । तर्कपूर्णमप्येतत्तर्कता तार्किकपण्डितमण्डलीं स्वयुक्तिलास्यविलासैरानन्दयन्ती नितरां राराजीतीयं कृतिः ।

न्यायामृतं तु मध्वसिद्धान्तकीर्तिप्रचारमनितरसाधारण वितन्वन् परमतपण्डितप्रपञ्चे स्वयशोराशिभिः विजयशालि विराजते । न्यायामृतप्रणयनानन्तर प्रवृत्ता द्वैताद्वैतवादपरम्परा अतिमहती ऐतिहासिकी च वरीवर्ति । प्रपञ्चमिथ्यात्वादिप-

रप्रक्रियापाकरणपरस्य न्यायामृतस्य विमर्शनाय महान्तं प्रयत्नं समातिष्ठन्मधुसूदन सरस्वतीनामा विपश्चितप्रवरः। तेन खलु "अद्वैतसिद्धिः" इति नाम्नैव सर्वत्र प्रसिद्धिं गतः महान् प्रौढप्रबन्धः व्यरचि ।

तत्र खलु न्यायामृतोपपादितविषयाः सानुवादं तत्र तत्र, क्वचिदर्थात्संगृह्य च विमृश्यन्ते । परतु न्यायामृते परपक्षविमर्शसमये यादृशी समुचितशब्दप्रयोगसरणिः यादृशं विचारौदार्य च दृश्यते, तादृशी सरला प्रामाणिकी विषयोपपादनरीतिः अद्वैतसिद्धौ नोपलभ्यते। क्वचिद्वक्रा, क्वचिदुत्तरन्यायामृतग्रन्थाच्छादनजटिला क्वचित्स्वसिद्धान्तव्याहतिदर्शिनी व्यधिकरणसरणिः दृश्यते पक्षपातदोषास्पृष्टचेतस्कैर्विद्वद्वरैः । अथापि तन्त्रचतुष्टयात्मकोय ग्रन्थः महान्तं प्रचारं लभमानोद्यपि समुद्योतते । ततो न्यायामृतकारानुर्यानो नैके माध्वविद्वत्प्रवराः अद्वैतसिद्धेः नैकान् खण्डनग्रन्थान् रचयामासुः तत्र खलु न्यायामुततरङ्गिणी, न्यायामृतकण्ठकोद्धारः, न्यायामृतआमोदः (लघुः गुरुश्च) इत्यादायः प्रसिद्धाः । अन्येपि ग्रन्थाः माध्वविद्वद्भिरचिताः वर्तन्ते । परन्तु विरलप्रचारास्ते प्रायोप्रसिद्धाः अमुद्रिताश्च सन्ति । एवं न्यायामृतार्थ विषदीकरणप्रधाना श्रीनिवासतीर्थीयटिप्पणी अपि निरतिशयं बुधानामुपकारं समादधती उभयमतीय विद्वन्मान्या वर्तते ।

तत्र "तरंगिणी" वैश्वनाथीयनारायणपण्डितानुजैः रामाचार्यनामकैः पण्डितोत्तंसैः विरचिता प्रायोद्वैतसिद्ध्युक्त दूषणाभासान् सयुक्तिकं दूरीकरोति । एवं न्यायामृतकटकोद्धारादिष्वपि अद्वैतसिद्धिदूषण समुपलभ्यते। तदनन्तरं ब्रह्मानन्दसरस्वतीनामा महान् पण्डितप्रवरःसर्वशास्त्रपारंगतो अद्वैतोसिद्धिमण्डनात्मकं अद्वैतसिद्धिचांद्रिकभिधं ग्रन्थद्वय विनिर्माय अद्वैत विद्वद्वृन्दमानन्दयामास । तत्र खलु अयं पण्डितशिरोमणिः न्यायामृततरगिणीवाक्यार्थान् परमतदूषणस्वमतसाधनपरान् दूषयितु प्रयतते । तत्र च अद्वैतिसिद्धिग्रन्थोक्तार्थविशादीकरणमुपेक्ष्य प्रायः परमतनिरकरणाय वा तदपेक्षया प्रसक्तानुप्रसक्तानुप्रसंगादपि नैकशास्त्रीयवाक्यार्थसमालोचनमुखेन तदसाधरणवैदुष्यातिशयप्रदर्शनां दृश्यते । तदेतन्यायामृततरंगिणीविमर्शप्रयत्नमुखेन द्वैताद्वैतवादप्रपञ्चे प्रचारातिशयेन शोभमाना अद्वैतसिद्धि, (व्याख्यान) चन्द्रिका ब्रह्मानन्दीयकीतिं सर्वत्र विस्तारयन्ती वर्तते । तामिमां अद्वैतसिद्धिचन्द्रिकां सानुवाद निराकुर्वन्ति श्रीमन्यायामृतसौगन्ध्यकाराः उत्तरभारतीया अपि माध्वानु-

यायिनः वनमालिमिश्राः । एवमेव नैके माध्वमतीयबुधवरेण्या मन्नारी आचार्य काशीतिम्मण्णाचार्यप्रभृतयो द्वैतसिद्धिचन्द्रिकाद्यद्वैतप्रबन्धान् निष्पक्षपातं सरसहृदयेन समालोच्य विमृश्य दूषयन्ति । तत्प्रदर्शितन्यायामृतदूषणाभासान् अलग्नकान् अनुक्तोपालंभादिनिग्रहपरिभावितान् प्रदर्शयन्ति । लघुचन्द्रिकाराभिमतान् मिथ्यात्वादिपारिष्कारान् न्यायामृतमाधुरीकारा मन्नारी आचार्यप्रभृतयो नैय्यायिकादिमर्यादयैव दूषितान् व्यवस्थापयन्ति ।एव निरन्तरममितान्तरानन्दतीर्थीयतीर्थपाठप्रवचनैः सफलीकृतजनुषः स्वीयासाधारणोपदेशशिक्ष- णादिभिः अनेकविदुषः निर्माय सद्विद्यासंपदमसदृशीं प्रदाय सदाचारपरम्परा जगति संस्थाप्य, स्वयशोधवलितदिगन्तरा हयास्योपासातपःप्रभावेन समुद्भावितसद्धृदयानन्दसन्दोहाः अस्मदाचार्यपादाः गुरुवरा अस्मद्भ्रातृचरणा जालीहाळ श्रीनिवासाचार्याः अपि प्राचीनसम्प्रदायमनुसृत्य अद्वैतसिद्धिब्रह्मानन्दीयाद्यद्वैतग्रंथसमूहं तत्कालोपलब्धं सर्वमपि समालोच्य विमृश्य च निष्पक्षपातं अनितरसाधारणंतन्निराकरणमकुर्वम् तथा न्यायामृतमहार्णव प्रीणीय तात्कालिकाद्वैतविद्वद्वराननन्त कृष्णशास्त्रिप्रभृतीन् ग्रथतःप्रत्यक्षतश्च वादेषु पराभावयामासुः। अभिनवशरदागमे विजयीन्द्रविजयवैजयन्तीग्रन्थे च विशिष्टाद्वैतग्रन्थवाक्यार्थान् निराचक्रिरे ।

विद्यापक्षपातिनः प्रेक्षावन्तः सन्तश्च अस्मदाचार्याणा सरसवचोविलासैः हृदयोल्लासमासाद्य तथा माध्वागमपरमोत्तमता साक्षात्कृत्य आचार्यचरणवैदुष्यज्ञानजनितमोदंभरस्वान्ताः सन्ततं यथायोग्य यथामनीष अनुतिष्ठन्तीति विश्वासमाशास्महे।

एवमेव न्यायामृततरंगिणीमंडनाय अद्वैतसिद्धिचंद्रिकादूषणाय प्रवृत्तेषु प्रेक्षावत्प्रवरेषु श्रीविश्वप्रियमध्वनाथतीर्थश्रीचरण इति सुगृहीतनामधेयो यतिवरो न्यायामृतकलाधरनामानं अभिनवकलाधरमिव न्यायामृततरंगिणीवाक्यार्थकुमुदाना ग्रन्थरत्न विनिर्माय सज्जनमनश्चकोरानानन्दामृतपूर्णान् चकार । सोयं पावनचारित आस्तीकमहितो सद्बुधसमतो मुनिवरो मध्वनाथयतिवरः पूर्व किंवश्यः किंदेशीयः-किंवृत्तः इत्यादिक सर्व समधिकृत्य तद्दौहित्रवंशभूषणायमाणाः अस्मत्परमप्रियाः ताम्रपर्णीश्रीनिवासाचार्या परिचयपरं लेखं विलिखन्तीति नात्र वयमस्मल्लेखनीं व्यापारयामाः। परं तेनैव यतिवरेण विरचितं सत्पद्यभूषासाहस्रीनामकं ग्रन्थसमधिकृत्य किंचिदेव वाचकानां मनःसंतोषाय लेखनी व्यापारयामः ॥

पद्यात्मकोयं ग्रंथ इति "सत्पद्यभूषासाहस्त्री" इति नाम्नैव व्यक्तीभवति । न्यायामृत कलाधरः खलु गद्यात्मको वर्तते । तत्र यादृशी अद्वैतसिद्ध्यादिदूषणसरणिरुपलभ्यते प्रायः तादृश्येवास्मिन् सत्पद्यभूषासाहस्त्रीग्रन्थेपि दृश्यते । परंतु अद्वैतसिद्धिसारात्मकस्य सदानन्दनामकपरमतीय पडिन्तकृतस्य ग्रथस्य दूषणं समुपलभ्यते । तत्र शास्त्रीयपारिभाषिकपदनिबद्धानां पद्यानां सुलभावगाहायतदीयवाक्यार्थविशदीकरणाय तत्रत्य परोक्तदूषणसरणिप्रदर्शनाय च श्रीमध्वनाथयतींन्द्रदौहित्रपौत्रः ताम्रपर्णी श्रानिवासाचार्यः मंजूषाख्यया सत्पद्यभूषासाहस्त्रीव्युत्पादितयुक्तिरत्नपेटिकायमानया स्वकृतव्याख्यया सहैव सत्पद्यभूषाद्यभूषासाहस्त्रीरूपं ग्रन्थं मुद्राप्य प्रथमतः संप्रकाश्य सहृदुयहृदयविदुषां उपहारीकुर्वन्तीति महदिदं प्रमोदस्थानम् ।

एष श्रीनिवासाचार्यः प्रातस्मरणीयसुनामधेयाना सर्वतन्त्रस्वतन्त्राणा श्रीमत्सत्यध्यानश्रीचरणानां परमप्रियतमान्तेवासिनां पण्डितप्रकाण्डनां तन्त्रचतुष्टयपारावारपारीणानां पण्डितराज पण्डितरत्नेत्याद्यनेकपदवीभूषायमाणवैदुष्यातिशययशोधवलितदिगन्तराणां अभिनवशारदागमविजयीन्द्रविजयवैजयन्ती न्यायासुधाकटकोद्धारन्यायसुधामण्डनकटकोद्धार, न्यायामृतमहार्णवादिविद्वद्वरप्रशस्यमानप्रौढानेकप्रबन्धप्रणेतॄणां गुरुवैभवाद्यनेकसरसमधुरमहाकाव्यकर्तॄणां जगद्विख्यातोपन्यासप्रवक्तॄणां अस्मत्परमपूज्यगुरुवराणां अस्मद्भ्रातृचरणानां श्रीमतां जालीहाळोपाभिध श्रीनिवासाचार्याणां अन्तेवासी तच्चरणनलिनसेवासमासादितसद्विद्यः । बालोप्ययं अबालासध्यप्रबन्धमेनं प्रणीय श्रीमध्वनाथमुनीन्द्रसत्कीर्तिदर्पण विमलीचकार सद्वैष्णवविदुषां प्रमोद समतीतनत् । स्वगुरूसेवासत्फल साधुसमसाधयत्, अनेन खलु व्याख्यानकारेण नवीनेन बहूपकृतं माध्वसमाजस्येति वचनं नातिवचनतां गच्छति ।

प्रबन्धस्यास्य प्रणेत्रा अस्मात्प्रियमहाभागेन पंश्रीनिवासाचार्येण अवलोकनाय प्रोषितो ग्रथः अस्माभिःसाद्यान्त अवालोकि तत्रोल्लिखिता अनेके विषया परिशीलिताः । यथास्वमनीषं परीक्षिताः विचारिताश्च । अनेक सरसशास्त्रार्थगर्भितविचारधारा न्यायाशास्त्रपरिभाषापरिशोभितपरिष्कारचनासरणिं अस्य विज्ञाय महान् प्रमोदातिशयोस्माकं समभवत् । बुधहृदयविनोदाय सत्पद्यभूषासाहस्त्रीकृता व्याख्याकारस्यास्य च विषयविवेचनशैलीं परमतदूषणसरणिं च स्थालीपुलाकान्यायेन कांश्चित् संदर्भान् वाक्यार्थाश्च विपश्चित्पुरतः उपहरामः ।

निन्दां भगवतः शृण्वन् तत्परस्य जनस्य च ।
ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः ॥

अन्यथोपासका ये तु तमोन्ध यान्त्यसंशयम् ।
ततोधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः ॥

इत्यादिप्रमाणोदाहरण कुर्वन्ति सत्पद्यभूषासाहस्त्रीकारा यतीन्द्राः। अनेन खलु परमतनिराकरणस्यावश्यकर्तव्यतासमर्थनेन "विना कारण अद्वैतमतनिराकरणं माध्वाना, "शुष्कवादकलहकुशलाः खलु माध्वाः" इति ब्रुवन्तो वादिनो निरस्ता भवन्ति । अद्वैतिना द्वैतमिथ्यात्वोपपादनमिव तत्सत्यत्वोपपादन प्रपंचमिथ्यात्वखडनं च नावकाशमासादयतीति तेषा दुराशयाः दूषिता भवन्तीति प्रेक्षावन्तो विभावयन्तु॥

एव न्यायामृते विप्रतिपत्तिविचारानवश्यकता प्रोक्ता साधु समर्थिता च सा तद्व्याख्यानेषु । अद्वैतसिद्धिकारोक्त तत्सार्थक्यस्य निपुणतरं निराकरणेन । तथापि परमतीया विद्वासः तत्र विप्रतिपत्तिप्रदर्शनसार्थक्य आग्रहेण वदन्ति । तान् प्रत्यपि अय व्याख्याकारः लघुटिप्पण्यां ।" विप्रतिपत्तेः विचारपूर्वभावित्वेन अवश्यप्रवर्तनीयत्वे भवतापि भवत्पूर्वाचार्यैरपि विंप्रतिपत्तिः प्रादर्शयिष्यत । विचारे विप्रतिपत्तेः प्रदर्शनीयत्वावश्यकत्ववादिना अनावश्यकत्वसमर्थकाना अस्माकं च प्रवृत्तेस्मिन् विचारेपि प्रदर्शनीया वा न वेति सशयस्य अङ्गत्वेन तज्जनकविप्रतिपत्त्यन्तरं प्रदर्शनीयम् एतद्विचारपूर्वभावित्वेनेति, तत्रापि, विवादे विप्रतिपत्त्यन्तरमित्यनवस्थापत्तेः विप्रतिपत्त्यप्रदर्शकत्वन्मूलग्रन्थादपि तस्याप्यूह्यमानत्वावश्यकताजल्पिना त्वया अत्रैव विवादे कुतो वा विप्रतिपत्त्यन्तर न प्रादर्शि? यद्यत्रानावश्यकता तर्हि कुतो वा विवादान्तरे इति पृच्छति ।

एव व्युदसनीयतया संशयस्य विचारांगत्वे मायावादिभिरुदिते "तथा सति द्रव्योश्यकजल्पादि विचारसध्याभावप्रतियोगिदारिद्र्यस्यपि विचाराङ्गत्वापत्तिः । तथा चादरिद्रस्य कथायामप्रवृत्त्यापत्तिः । एव अज्ञानविपर्ययोरपि विचाराङ्गत्वप्राप्त्या तज्जनकवाक्यस्यापि प्रदर्शनीयत्वापत्तिः इति" अनिष्टापत्तिपरंपरैव व्याख्याकृतोदीरिता

दरीदृश्यते। विचारचेतसां सचेतसां चेतसि चरीकरीति चमत्काराविर्भावरीतिरियमिति च न तिरोभवति प्रज्ञावताम्।

एव परमपूज्यैरस्मदुरुचरणैर्भ्रातृचरणैः जालीहाळाचार्यैः प्रणीतन्यायामृतमहार्णवोल्लिखिता बहवो विषयाः सवाक्यार्थाः अत्रास्य ग्रन्थे समुपलभ्यन्ते। एवमेवद्वैतद्युमण्यादिप्राचीनार्योक्तयोपि शब्दतो वा अर्थतो वा सगृह्यन्ते। मुद्रान्तरेण वा प्रकारान्तरेण् वा तान्विन्यस्य व्याख्यायन्ते।तेनास्यायुष्मतः श्रीनिवासाचार्यस्य अभिव्यक्तीभवति बहुग्रन्थदर्शितापुरःसरं व्याख्यानलेखनकलाकौशलम्।

**अत्रापि दीयतां दृष्टिः**

विद्वाद्भिः मिथ्यात्वानुमाने पक्षतावच्छेदकविचारे ब्रह्मप्रमापदेन ब्रह्मान्याविषयक ब्रह्मविषयकप्रमाया एव विवक्षिततया नेदं रूप्यमिति प्रमाया ब्रह्मप्रमात्वेपि तदन्याविषयकप्रमात्वाभावात् शुक्तिरूप्ये विवक्षितब्रह्मप्रमान्याबाध्यत्व नास्तीति न सिद्धसाधनदूषणमिति प्रतिवादिभिरुदिते अत्र सत्पद्यभूषासाहस्रीकाराः।

"इति न युक्त तथात्वे अहं ब्रह्म, घटो विनाशी इति समूहालबनज्ञानस्य प्रपञ्चबाधकत्वे बाधकाभावेन प्रपञ्चे पक्षे ब्रह्मान्याविषयकब्रह्मविषयकप्रमान्याबाध्यत्वं नास्तीति आश्रयासिद्धिः स्यादिंति आपादयन्ति। व्याख्यातं चात्र व्याख्यात्रा।अधिकन्तु प्रविष्टं न तद्धानिकर इति न्यायेन उक्तसमूहालंबनज्ञानस्य प्रपञ्चबाधकत्व उपपादितं दृश्यते। तदुपरि तमेवं विदित्वेति श्रुतिविरोधापातेन उक्तसमूहालंबनज्ञानस्य प्रपञ्चबाधकत्वाभावेन नाश्रयासिद्धिरिति परेण आश्रयासिद्धिपरिहारप्रयत्नः कृतः तदा सत्पद्यभूषासाहस्रीकारैः - अन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोतीति इत्यादाविव तमेवेत्यत्रापि ब्रह्मान्यविषयकत्वानवच्छिन्नब्रह्मविषयकत्वाविच्छन्न जनकताकमुक्तिमानिति बोधसंभवेन पूर्वक्तसमूहलबनज्ञानस्य प्रपञ्चबाधकत्वेपि उक्तश्रुतिविरोधाभावादिति आश्रयासिद्धिर्दुर्वारैवेति आश्रयासिद्धिः समर्थिता। तत्र ब्रह्मविषयकत्वस्यैव बाधकतावच्छेदकत्वं सुष्टु समर्थितं एवकारार्थोपि सम्यगुपपादितश्चेति, विदित भवति एतद्ग्रन्थपरिशीलनावकाशजुषा निष्पक्षपातशेमुषीमतां धीमताम्।

एव अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वविचारे व्याख्यानकारः द्वैताभावरू-पैक्यज्ञान प्रति (प्रतियोगिभूत) द्वैतज्ञानस्यैव प्रयोजकत्वेन तन्मिथ्यात्वज्ञानानवश्य-कत्व सोदाहरण उपपाद्य तार्किरीत्या अभावबोधाभावापत्तिः द्वैताभावबुद्धेः द्वैत-मिथ्यात्वपूर्वकत्वे अन्योन्याश्रयः , द्वैतमिथ्यात्वसिद्धेः ब्रह्मात्मैक्यसिद्धिपूर्वकत्वापातः इत्या दीन् दोषानाविष्करोति । एवमेव मिथ्यात्वलक्षणपरिष्कारादिक निष्कृष्य निरा-करोति । एवद्ग्रन्थ समालोकयता सर्वमपरोक्षित भवतीति ग्रन्थविस्तरभिया केवल काश्चन मूलटीकाकारप्रदर्शीतान् वाक्यार्थान् सक्षेपतः सप्रदश्र्य विरमामः । अतिक-रालोय कालः वेदवेदान्तविद्याव्यासङ्गस्य नैकविधं नैकसख्य प्रत्यूहव्यूहमाकलयति । सदाचारसप्रदाय परम्परागत विनाशयति । धर्ममूला सनातनी सस्कृति समुन्मूलयति समूलम् । करालेस्मिन् कलिकाले क्व वा गुरुसप्रदायाः कुत्र गुरुभक्तिः कस्मिन्देशे न्यायगहनतर्ककर्कशसामान्यजनमतिदुखगाह प्रोढप्रमेयभरितशास्त्रीयग्रन्थाध्ययनं तज्ज्ञानसमर्जन वा विलोपमेवोपयातीति दरीदृश्यते सर्वापीय प्राचीना शास्त्राध्ययन-परपरा । वादग्रन्थाध्ययन तु स्वप्नेपि नोद्भासते इति भासते ।एव संस्कृते ग्रथरचन, तत्रापि शास्त्रीयप्रबन्धप्रणयन, पुनस्तत्रापि खडनमडनपरवादग्रन्थनिर्माण चेत्यादि-सर्वमूषरे वर्षितमिवास्मिन् समयेवभासते । एतादृशेपि समये ननु सन्ति सौम्यपुरुषा गुणोचिता "इति प्राचीनार्यभणिति यथार्थयन्निव अयं अतीवाल्पवया अपि अनल्पप्र-ज्ञाप्रतिभासमान्वितः, महता परिश्रमेण महती प्रत्यूहपरम्परामपि अविगणय्य, ग्रंथमेनं निर्ममे । मुद्राप्य प्रकाशायतीति च महानस्माकं प्रमोदः । गुणाग्रहग्रहिलाः सदाग्रहशीलालाः विद्वासः सर्वे व्याख्यानकारस्य ग्रंथप्रकाशकस्य च साहसाशं च गुणाश स्वीकृत्य एन श्रीनिवासाचार्य प्रोत्साहयन्तीति विश्वसिमः। अन्ते एतद्ग्रन्थ-कर्तृतातपादान् अस्मत्परमप्रियसुहृदः शेषगिराशाचार्यान् सार्थकजनुषःसमभिनन्द्य, सर्वमेतदस्मद्भ्रातृचरणसेवासमधिगतफलमिति मुहुराम्रेडयन्तो वय आयुष्ममते स्वस्तिवचनपुरःसराशीराशीर्वितीर्य सुदीर्घायुरारोग्यादिना एन आचार्यमणिं अनुगृह्य, अन्यानत्येवंविधान् प्रबन्धान् प्रणेतुं शक्तिं दास्यतु इति अस्मदुपास्यव्यासध्वन्वन्तरि-हयास्यरूप हरिं संप्रार्थ्य विरमाम इति ।

**जाळिहाळ केशवाचार्यः**

**गदग नगरतः**

**मार्गशीर्ष कृष्ण पञ्चमी ।**

# ॥ प्रस्तावना ॥

अहो सहर्षमाश्चर्यमेतत् । यदस्मिन् कराले कलिकाले केवलं भाषामयप्रबन्धप्रणयनानुवादनसंकलन प्रकटनप्रभृतिकोलाहलाकलिते, मरुधन्वायिते च सस्कृतभाषामयशास्त्रीयप्रबन्धनिर्माणनिर्वचनादेः, समुत्पन्नेयं किल "सत्पद्यभूषासाहस्त्री" तथातद्व्याख्या "मञ्जूषा" ख्या कृतिकल्पलता इति । प्राचीनक्रमानुसारिशास्त्रीयपाठप्रवचनवैधुर्येण शुष्कायितेस्मिन्नतिमहति वेदान्तवृक्षे एतत्कृतिपल्लव दर्शनेन समुत्पन्नैः हर्षाश्रुबिन्दुभिः केषां नाम विदुषा चक्षूषि नाद्रीकृतानि भवेयुः ।

मधुमधुरापि सुरगीरेव प्रथम न सर्वसुलभा । ततोपि दुश्शका किल काव्यकलासम्पत्तिः। दार्शनिकग्रन्थजात तु सर्वविद्वद्भयावहं सुप्रसिद्धम् । तत्रापि वेदान्तदर्शनं सर्वैस्समाराध्यमपि न सुलभ विबुधधीवशमिति विदितमेव निश्चप्रच । अङ्गिनोस्य वेदान्तदर्शनस्य षडङ्गशास्त्रानुसारेण सयुकिकं सप्रमाण च हृद्यहार्दानुवर्णने नेतरेषां मताना सामर्थ्यम् । परन्तु केवल श्रीमन्मध्वमतस्यैव, इत्येत् सर्वत्र सुविचारान्ते सहृदयैः विबुधैःहृदयंगमं विभाव्यते । अत एव सुप्रसिद्धेय प्राज्ञोक्तिः

अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि इति।

बहुसुलभसरलपदगुम्फितोपि माध्वागमः अर्थतो युक्तितश्च गम्भीररत्नाकर इति विशदीकुर्वन्ति खलु प्रथिताः श्रीजयार्थटीकाराशयः । परोदीरितेषु सपरिकरप्रक्रियापरिष्कारादिषु सर्वत्र सर्वात्मना असामञ्जस्यं प्रदर्श्य श्रीमट्टीकाकारीयपरिष्करणादिषु परिशुद्धता प्रदर्शने समर्थने च निकषायितं ग्रन्थजातं श्रीव्यासतीर्थीयमिति सर्वविद्वत्प्रसिद्धम् । विशेषतो ऽद्वैतदर्शनासारता प्रदर्शनपुरस्सरं द्वैतदर्शनस्य मध्वसिद्धान्तस्य सार्वकालिकाबाध्यत्वोपपादनाय प्रवृतं "श्रीमन्न्यायामृतं" परमतीयसमस्त विद्वत्स्तोमस्य हालाहलायितमिति च खण्डनमण्डनप्रबन्धपरम्परैव परिचाययति । न्यायामृतोक्त युक्तिमुष्टिबन्धनं मोचयितुं प्रवृत्तानां अद्वैतसिद्धिब्रह्मानन्द्यादीना च अभेद्यतद्युक्तिबन्धितत्वं व्यवस्थापयन्ति तरङ्गिणी कण्टकोद्धार सौगन्ध्यादयः प्रबन्धाः ।

नातिचिरन्तनाः विद्वत्पञ्चाननाः श्रीमत्सत्यध्यानश्रीचरणास्तु विद्वत्सभायां श्रीन्यायामृत वाक्यार्थविनोदस्यविशिष्टं स्थानमुपकल्पयन्तः विजायिणां विदुषा कनकमयीं विजयश्रृङ्खलां निबन्धयन्तः सर्वदिक्षु समुदधोषयन् न्यायामृतपारम्यम् । प्राकाशयंश्च स्वीयैः "संयमनीपुरनिर्णय (सिविल्सूठ) प्रभृतिग्रन्थैः लौकिकालौकिक विद्वच्छेकरहृदयाम्बरेषु श्रीन्यायामृतवाक्यार्थवैखरीवातुर्यम् । अर्वाचीनं च अनन्तकृष्णशास्त्रिकृतं "सौगन्ध्यविमर्शात्मकं खण्डनप्रबन्धं सम्यग्विमृश्य तद्दौर्बल्य प्रकटनेन न्यायामृत वाक्यार्थपरम्परायाः निर्बाधत्वव्यवस्थापने पटुतरमिदं विराजते ग्रन्थरत्नं " श्रीमन्यायामृतार्णवौभिधं श्रीमत्सत्यध्यानतीर्थप्रियशिष्यैः पण्डितराजैः परमपूज्यैः अस्मद्गुरुवरैः श्रीजालिहाळार्यवर्यैः प्रणीतम् । अत्र सर्वत्राध्येतारः प्रमाणम्

एवं विद्वन्मणिमनीषानिकषायितेस्मिन्न्यायामृतीयोत्तर प्रत्युत्तरपरम्पराप्रवाहे अधुना प्राकाश्यं नीयमाना " सत्पद्यभूषासाहृ "अशीत्यधिकवर्षीय चिरन्तनापि ष्टविषयधारया नित्यनूतनतरा विराजते । एतदुत्पत्तिस्थानभूताः विद्वत्तिमिंगिलाः प्रथितयशसः परमपूज्याः महानुभावाः श्री विश्वप्रियमध्वनाथमुनयः विनयविवेकशालिभिः विद्वाद्भिः नित्यं भक्त्या स्तुत्या बहुल समनुनेय इति न पृथक्कव्यमवशीष्यते । श्रीन्यायामृतकलाधर मधुधारा द्वात्रिशंत्कोटिभूषा चतुर्दशविलासीत्यादि नैकप्रौढप्रबन्धप्रणेतृणां विद्वत्कुलशिरोमणीनां एतेषा साधनबोधनपरवादिबाधनप्रमुखजीवनचरितं विशेषतो भूमिकादिलेखनतः विज्ञेयम् । एतेषां पुण्यपुत्रा एव प्रथिताः सुगृहीतनामधेयाः"गीताभावचद्रिका"दि नैककृतिकाराः लौकिका लौकिकविद्वद्धुरीणाःचतुस्तन्त्र पारावारपारीणाः श्री ताम्रपर्णी सि एम् पद्म नाभाचार्याः । एतादृश पितृपुत्रसंयोजनं बहुजन्मार्जित पुण्यफलायमानं केवलं हरिगुरुकृपालभ्यम् ।

एतस्मिन् सुप्रसिद्धे ताम्रणीवंशे पूर्वोकाभूषासाहस्त्रीप्रणेतृदौहितृपौत्रतया प्राप्तजनुषः )अस्मदाचार्यवर्यश्रीजालिहाळार्य संसेवनसंल्लब्धसद्विद्यायशसः चिरायुषःताम्रपर्णी श्रीनिवासाचार्यस्य नूत्नविदुषः निशितया शस्तया अतिप्रशस्तया प्रतिभाप्रभासम्भूषया मनीषया सम्प्राप्तसम्भूतिरियं "मञ्जूषा " भूषासाहस्त्रीसंयोजितानां सिद्धान्तयुक्तिरत्नानां संग्रहण, संरक्षण., संवरणादिषु अतिदक्षा परदुरुक्तिशिक्षा

नूत्नापि प्रत्नोक्तिरत्नैरनूत्ना व्याख्यारत्नमित्यस्मिन्विषये विबुधधिषणाप्रमाणे नाधिक वक्तव्यमपतिष्ठते ।

व्यासविन्नामकस्य अद्वैतिनो विदुषः "अद्वैतसिद्धिसारा" भिधस्य श्लोकात्मक प्रबन्धस्य असारतासहस्रप्रदर्शिनी श्लोकरूपा इयं सत्पद्य भूषासाहस्री "स्वशिरोनाम्नैव संसूचितस्वविषयस्वरूपगात्राविराजते । तद्व्याख्याचेयं "मञ्जूषा । श्लोकात्मकस्य स्वव्याख्येयस्य खण्ड्यग्रन्थभागसम्बन्धप्रदर्शने, पदसयोजने,दार्शनिकार्थविवरणे, भावसग्रहणे, न्यायामृतार्थोद्धरणे, प्राचीनवाक्यार्थोद्बोधने ग्रन्थान्तरविषयपरिशीलने, परवादिपरिष्कारपर्यालोचने, सिद्धान्तपरिष्करणे, क्वचिद्व्याकरणप्रक्रियाप्रकटने, कुत्रचित् मीमांसासमालोचने, पौनःपुन्येन न्यायमृतसमालोडने, सर्वत्रस्वसमालोचितस्य मूलारुढकरणे, प्रमाणपरिदर्शने एवमादौ सर्वस्मिन् व्यख्यानक्षेत्रेसमर्थ स्वकार्य निर्वहन्ती एकत्रैव सर्वदर्शिनी विराजते । व्याख्यानमिद यावत्प्रकाश्यमानं साधिक च समवलोकितमस्माभिः सानन्द च चर्चित क्वचित् । कुत्रचित् विनिमयीकृतश्च स्वाशयः अनेन सहृदयेन विदुषा । सर्वत्र च काचन सोपज्ञता विनिधापिता अनेन व्याख्यात्रेति सर्व हृदयङ्गमम् । रमणीयातदीयविचारधारा एतत्कृत्यवलोकनैक समाधेयापि रुच्यर्थ हर्षोद्रैकाच्च किञ्चित् प्रदश्र्यते।

**विप्रतिपत्तेरनावश्यकत्वं**

ब्रह्मप्रमान्येन वा सप्रकारेण वा अबाध्यत्वे सति असद्विलक्षणत्वे सति ब्रह्मान्यत् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा, पारमार्थिकत्वाकारेण निषेधप्रतियोगि न वा —— इत्यादिक्रमेण विप्रतिपत्ति प्रदश्र्य " इदं च विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैव, न तु वस्तुतः " इत्यादिना भागेन बहुधा वैय्यर्थ्यमुपपाद्य विप्रतिपत्तेरनावश्यकत्वे स्वाशयः प्रकटितः श्रीन्यायामृतकारैः।

एतदसहमानेन अद्वैतसिद्धिकारेण न्यायामृतोक्तवैय्यर्थ्य स्वीकृत्य अनुमित्यनङ्गत्वेपि व्युदसनीयतया विचाराङ्गत्वं संशयस्य वर्तत इति तत्प्रयोजिकायाः विप्रतिपत्तेः प्रदर्शन आवश्यकमिति समर्थितम् । व्युदसनीयतयापि संशयस्य सर्वत्र विचाराङ्गत्व नास्तीति अनेकधा विकल्पपूर्वकं तरङ्गिणी कण्टकोकोद्धारादौ विप्रतिपत्तेरनावश्यकत्व समर्थितम् । समग्रं च प्रविचारितं श्रीन्यायामृतार्णवे । यद्यपि

इय "भूषासाहस्त्री" आस्मिन्ननावश्यकत्वविषये स्वाशयवर्णने कण्ठतः न प्रवृत्ता। तथापि विप्रतिपत्त्यप्रदर्शनपूर्वक अनुमानविचारणे प्रवर्तनेनैव साहस्त्र्या सूचितायाः अनावस्यकतायाः समर्थनं परमतपर्यालोचनं च समर्पकं करोतीयं "मञ्जूषा"।विचक्षणाः पश्यन्त्विद वाक्यम् "विप्रतिपत्तेः विचारपूर्वभावित्वेन अवश्यप्रवर्तनीयत्वे भवत्पूर्वाचार्यैरपि विप्रतिपत्तिः प्रादर्शयिष्यत । विचारे विप्रतिपत्तेः प्रदर्शनीयत्वावश्यकत्ववादिना त्वया अनावश्यकतासमर्थकानामस्माकं च प्रवृत्तेस्मिन्विचारेपि "प्रदर्शनीया वा न वा" इति संशयस्य अगत्वेन तज्जनकविप्रतिपत्यन्तर प्रदर्शनीय स्यात् एतद्विचारपूर्वभावित्वेनेति ।"तथा"आवश्यकताजल्पिना त्वया तत्रैव विवादे कुतो वा विप्रतिपत्त्यन्तरं न प्रादर्शि यद्यत्रानावश्यकता तर्ही कुतो वा विवादान्तरे? " इत्यादि । इत्थं दूषणगणप्रदर्शनं भद्र मुद्रयति आवश्यकतावादिनां विचारदरिद्राणां वदनच्छिद्रं उद्रेचयति च भद्रं सिद्धान्त समुद्र ।

**अत्रेदमप्यालोचनीयम् ।**

अस्मिन् विप्रतिपत्तिविचारे आवश्यकतावादिनः तार्किकाः। तदुक्तं स्पष्टं न्यायामृते" तार्किकरीत्यैव । न तु वस्तुतः इति । तथा च आवश्यकतावादखण्डनं अद्वैतवादिनामपि परमेष्टमेव । सति ति चैवं कुतोय आवश्यकतावादे दुराग्रहः सिद्धिकारादीनाम् ? तार्किकाभिमतं सार्थक्यं मूले बहुधा निराकृतम् । व्युदसनीयतयेति स्वाभिप्रायनिवेशनं तु अद्वैतसिद्धिकारस्य परिहासास्पदम् । तुष्यतु न्यायेन संशयस्य व्युदसनीयत्वांगीकारेपि विप्रतिपत्तेरनावश्यकत्वं अकामेनाप्यंगीकार्यम् । विप्रतिपत्तीतरकारणकसंशयस्यापि व्युदसनीयत्वं वर्तत एव । संशयः विप्रतिपत्तिमात्रजन्यः इति वा? विप्रतिपत्तिजन्यसंशयमात्रस्य व्युदसनीयत्वमिति वा?क्वास्ति नियमः ?पक्षपरिग्रहादेरिव संशयस्यापि " कथाबाह्येन लौकिकरीत्यनुसारिणा इत्यादिना सूचितक्रमेण कारणान्तरेणापि सम्भवात् तादृशसंशयस्य त्वद्रीत्या व्युदसनीयत्वमस्तु । विप्रमत्तिवाक्यस्य कथं कथाङ्गत्वं ?इत्यादिः अर्णवकाराद्युकवाग्वज्रप्रहारः आवश्यकतावादे नैर्भर्यधारिणां दुर्वादिनां दुर्गर्वगिरिदुर्गं विदलयतीत्यलं ।

**पक्षतावच्छेकशरीरे**

अद्वैतमतरीत्या "सर्वप्रत्ययवेद्ये च इति नियमानुसारतः नेदं रूप्यमित्यादिप्रमाया अपि ब्रह्मप्रमात्वात् तद्बाध्ये शुक्तिरूप्ये ब्रह्मप्रमान्याबाध्यत्वं अस्त्यैवेति दत्तेपि तद्विशेषणे न सिद्धसाधनदूषणोद्धरणमिति "भूषासाहस्री" ब्रह्मान्याविषयकब्रह्माविषयकप्रमान्याबाध्यत्वाभिप्रायेण सिद्धसाधनवारणं च " अहं ब्रह्म घटो विनाशी" इति समूहालम्बनज्ञानमादाय तद्बाध्यत्वेन अद्वैतिभिरंगीकृते जगति उक्तपक्षतावच्छेदकाभावात् आश्रयासिद्धिकारणम् । तादृशसमूहालम्बनज्ञानस्य आहार्यत्वव्यवस्थापनेन स्वपूर्ववचसां अन्यथा योजनेन च उक्तदोषपरिहाराय प्रयतते ब्रह्मानन्दीयभावप्रकाशकारः । अत्र च अद्वैतमतरीत्यैव तादृशसमूहालम्बनज्ञानस्य अनाहार्यताव्यवस्थापनेन भावप्रकाशाशयवितथीकरणक्रमं "मञ्जूषा"समाश्रितं पश्यत ।" व्यावहारिक द्वैतवति ब्रह्माणि पारमार्थिकस्य द्वितीयाभावस्य विषयतया विषमसत्ताकयोः भावाभावाविरोधस्य वा, दृश्यत्वेनोद्देष्यतावच्छेदकीकृतस्य द्वैतस्य आत्मभिन्नत्वावच्छिन्न प्रतियोगिताकद्वितीयाभावेन विरोधाभावस्य वा त्वया वक्तव्यतया इहापि पारमार्थिकघटाभावव्याप्यस्यापि शुद्धस्य व्यावहारिकेण घटेन विरोधाभावेन उक्तसमूहालम्बनज्ञानस्य आहार्यत्वानुपपत्ते इत्यादिः ।

**इदं चात्र द्रष्टव्यम्**

बाधकालीनेच्छाजन्यस्यैव ज्ञानस्य आहार्यत्वात् प्रारब्धदैवाद्यधीनत्वेन तदंगीकृतस्य "अहं ब्रह्म घटो विनाशीति " समूहालम्बनज्ञानस्य आहार्यत्वं न घटते । स्वविरुद्धधर्मधर्मितावच्छेदककस्वप्रकारकत्व आहार्यत्वमिति परिष्करणं च 'इदं रजत' मित्यादिभ्रमेतिव्याप्तम् । अतो भासमानस्वविरोधवद्धर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वं आहार्यत्वमिति वक्तव्यम् । तथा च प्रारब्धदैवाद्यधीने उक्तसमूहालम्बनज्ञाने धर्मितावच्छेदक प्रकारयोः विरोधभाननियमाभावात् अनाहार्यत्वं , त्वद्रीत्या जगत्बाधकत्वं च अक्षुण्णमित्यादयो विचारविशेषाः अस्मदीये "न्यायामृतवाक्यार्थसरणिप्रबन्धे ब्रह्मानन्दीयभावप्रकाशखण्डनात्मके कालतोनतिदूरतः प्राकाश्यं नीयमाने कुतूहलिभिरवलोकनीयाः ।

**प्रथममिथ्यात्वे**

सत्वात्यन्ताभाव असत्वात्यन्ताभाव धर्मद्वयपक्षे, विशिष्टपक्षे च व्याहतिः प्रदर्शिता न्यायामृते । सत्वासत्वयोः परस्परविरहरूपत्वाद्यनंगीकारेण क्वचिदप्युपाधौ सत्वेन प्रतीत्यनर्हत्वरूपासत्त्वपरिष्करणेन व न व्याहतिरिति अद्वैतसिद्धिः । सर्वत्र त्रैकालिकनिषेधाप्रतियोगित्वरूपमबाध्यत्व सत्व । तदभावरूपस्यैव त्रैकालिकनिषेध प्रतियोगित्वस्य असत्वरूपत्वं अङ्गीकार्यम् । नान्यस्य । नञः स्वसमभिव्याहृतपदार्थ, तदवच्छेतकान्यतर प्रतियोगिकनिषेधबोधकत्व स्वभावस्य अनुभूतत्वेन, पारिभाषिकस्यान्यस्य असत्पदार्थत्वायोगात् इत्यादिना "मञ्जूषा" परस्परविरहरूपत्वं सत्वासत्वयोःसशाब्दमर्यादं सयुक्ति च व्यवस्थापयति । खण्डयति च सिद्धयाद्युक्तं । द्रढयति मूलोक्ता व्याहतिम् । संगृह्णाति च प्राचां विषयनिचयम् ।

किंच निर्धर्मकत्वात् ब्रह्मणि सत्वाभाव, असत्वाभावोभयरूपमिथ्यात्वं अतिव्याप्तमिति "भूषासाहस्री" अत्र सर्वाभावांगीकारेण उक्तमिथ्यात्वस्याप्यभावात् न ब्रह्मणि अतिव्याप्तिः इति वादस्य अनवस्थादूषणं मञ्जूषायामुक्तम् । इद च जातेर्जातिमत्वे जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मवत्वं न स्यादिति तर्कविरोधेन अनवस्थायाः दूषणत्वमिव अत्रापि - "ब्रह्मणी सत्वस्याभावः, तस्याप्यभावः तस्याप्यभावः इत्यंगीकारे क्वचिद्विश्रांतेरभावेन निर्विधेयका अनुमतिः स्यात् इति उद्दिष्टानुमित्युत्पत्तिविच्छित्तिरूपबाधकप्रदर्शनसद्भावाभिप्रायेण अनवस्थायाः दूषणत्वं ज्ञेयम् ।

**अत्रापि दीयतां दृष्टिः**

सत्वासत्वयोः परस्परविरहरूपत्व प्रदर्शनक्रमः मूले व्याख्यानपरम्परासु च वस्तुस्थित्या बहुधा प्रपंचितः ।

सत्वासत्वयोः परस्परविरहात्मकत्वानंगीकारे यदि कथंचिदाग्रहः तदापि व्याहतिरपरिहार्यैव । तथाहि । सत्वासत्वयोः परस्परविरहात्मकत्वाभावेपि सत्व-सत्वाभावयोः असत्व असत्वाभावयोः परस्परविरहरूपता अवश्यमंगीकार्यैव । तथा च सत्वाभाव असत्वाभावोभयसाधने, सत्वाभावस्य अबाध्यत्वाभावरूपतया

ब्रह्मप्रमान्याबाध्यत्वरूपाबाध्यत्वविशेषमगीकृत्य, अबाध्यत्वसामा न्याभावसाधने कथं न व्याहतिः । सार्वदेशिकसार्वकालिक निषेधाप्रतियोगित्वरूपाबाध्यत्वविशेषाभावस्यैव साध्यघटकत्वेन न व्याहतिः इत्यपि न साधु । तादृश सत्वाभावस्यापि अद्वैतमते बाध्यतया सत्वाभावाभावागीकारे सत्वप्रसक्त्याएव असत्वाभावाभावांगीकारे असत्वाप्रसक्त्या - सत्वासत्वोभयस्य साध्यत्वेन व्याहतिः स्पष्टैवा । एवं सत्व - तदभाव असत्व - तदभाव एतच्चतुष्टयाभावे साध्ये व्याहतिरादृतैव । किंच असत्वाभावस्यापि उक्तरीत्या बाध्यत्वेन असत्वाभावाभावात्मकासत्वस्यैव प्राप्त्या, असद्विलक्षणत्वरूप पक्षतावच्छेदकेन असत्वाभावप्राप्त्या - असत्वाभाववत् विश्वं असत्ववत् इति वक्तव्यत्वापातात् स्पष्टैव किंचिद्विष्टरूपा व्याहतिः । वैशिष्ट्य च स्वघटितत्व स्वप्रतिपाद्यार्थविरुद्धार्थप्रतिपादकपदघटितत्वोभयसबन्धेन इत्यादयो दोषाः "व्याहते रिति सामान्यवचनेन न्यायामृते सूचिताः विचक्षणैरन्वेषणीयाः इति अस्मद्गुरुचरणाः ॥

**द्वितीय मिथ्यात्वविचारे**

प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य व्यावहारिकत्वपक्षे प्रपंचनिषेधस्य निषेधे प्रतियोगिनः प्रपचस्य सत्त्व संभवतीति अर्थातरता न्यायामृते प्रतिपादिता । न्यायामृतवचोहार्दानभिज्ञेन सिद्धिकारेण " प्रतियोगि - तदभाव उभयनिफेधे - न प्रतियोगिप्रपंचसत्वमतो नार्थातरता इत्युक्तम् । ध्वंसकालीनः प्रतियोगि - तदत्यताभावोभयनिषेधः दृष्टांतीकृतश्च । तन्न समीचीनम् । यतोहिनिषेधस्य निषेधे तद्विरोधिनः कस्यचन सत्वं इति नियमः । यत्र प्रतियोगीविरोधी तत्र तस्यैव सत्वम् । घटध्वंसकाले घटात्यंताभावानंगीकर्तृमते - घट - तदत्यताभावैतदुभयविरोधिनः ध्वंसस्य सत्वं वर्तत एव ।

एवं च ब्रह्मणि प्रपंचत्तदभावोभयनिषेधे तद्विरोधिनः कस्यचन वस्तुनः सत्वं अगीकार्यमेव । शुद्धब्रह्मणः अविरुद्धत्वात् । तद्भिन्नस्य यत्किंचित् विरोधिनः सत्वांगीकारेपि अर्थातरता सुस्थैव इत्यादि न्यामृतकलाधरे द्रष्टव्यम् ।

अत्र अद्वैतसिद्धिकारादीनां न्यूनसत्ताकत्व समसत्ताकत्वादिविचारधारायाः निराधारत्वादिव्यवस्थापनप्रकारः "भूषासाहस्री" मञ्जूषा" प्रबन्धाभ्यां निपुणतरं

कृतः । अस्मिन् सदर्भे "इत्युक्त तदसबद्धम्" इत्यादिकारिकाभागस्य " साहस्त्रीघटकस्य, प्रश्नासबद्धत्व - अवच्छेदकासबद्धत्व - पूर्वपक्षयुकृत्यसबद्धत्व, अद्वैतमतासबद्धत्व, तदुकृत्यसबद्धत्व, उपलक्षितत्वाद्यसबद्धत्व, विशेषणासंबद्धत्वादिरूपैर्विविधै प्रकारैः विवरणसयोजननिरूपण शैलीविलसितवेषा इय "मञ्जूषा" विद्वन्मनीषा प्राचीनव्याख्यानवैखरीसंस्मृत्या सश्लेषयति ।

## अहो इमं च पश्यत विचारम्

अद्वैतसिद्धौ द्वितीयमिथ्यात्वविचारे तदीयद्वितीयपरिष्करणसदर्भे इदमुक्तम् । " सन्मात्रनिष्ठात्सताभावप्रतियोगित्वमेव मिथ्यात्वम् । न चैवं सति भावाभावयोरविरोधात् त ज्ज्ञानयोर्बाध्य बाधकभावो न स्यात् इति वाच्यम् । भिन्नसत्ताकयोरविरोधेपि समसत्ताकयोर्विरोधात् । यत्र भूतले यस्य घटस्य अत्यंताभावः व्यावहारिकः तत्र स घटः न व्यावहारिकः इति नियमात् "इत्यादि । एव व्यावहारिक घटाधिकरणे व्यावहारिकः तदभावः नास्तीति कण्ठतः कथयतानेन सिद्धिकारेण "पूर्व प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य व्यावहारिकत्वांगीकारपक्षे, व्यावहारिकप्रपचाधिकरण एव व्यावहारिकः प्रपचाभावः स्वीकृतः ।अहो पश्यत अस्य विचारविपर्यासस्य पराकाष्ठाम् । तथा तुल्यसत्ताकत्वेन अन्यूनसत्ताकत्वेन वा निषेधप्रतियोगिनो र्विरोधः इति वदद्भिः मायावादिभिः तुच्छतदभावयोः विरोधः कथ व्यवस्थाप्यते? तुच्छे सत्तावार्ताया एवाभावात् । एवं " अखण्डब्रह्मसाक्षात्कारात् पूर्व परोक्षबोधेन प्रपंचस्य व्यावहारिकत्वापहारेपि प्रतीतिरनुवर्तत एव , अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तिष्यत "इत्यादि वदता सिद्धिकारेण अधिष्ठानाज्ञाननिवृत्तेः पूर्वं व्यावहारिकत्वापहारकाले तदंगीकृते प्रपचस्य कीदृशी सत्ता स्वीकृता? व्यावहारिकसत्तायाः अपहारात् । इतरयोरस्वीकाराच्च दुस्थितिरेव तन्मते । अलमनेन सर्वत्रासंगतभाषणदूषणपरिगणनेन ।

प्रस्तुता चैषा मंञ्जूषा संभूषिता भूषासाहसी दृश्यत्वादीर्युक्तीः सहस्त्रशः दूषयंती सोपाधिकत्वविचारे विशिष्टस्थानमधिरोहति । स्वबाधकाभिमताबाध्यत्वविशेषणस्य व्यभिचारवारकतया च सार्थक्यव्यवस्थापनप्रकारः "मंजूषा"यां नूतनतरोनुवर्तितः । एतदाद्याः मनोहरविचारधाराः तत्र तत्र विचक्षणानां मनांसि समाराधयन्ति ॥

### वाचकत्वं हि तात्पर्यं

वचनवृत्या लब्धार्थ एव तात्पर्यार्थ इति सिद्धान्तः। सा च वचनवृत्तिः चतुर्विधा। योगः रूढिः गौणी लक्षणा चेति । तत्र योगरूढयोः प्राथम्यस्वभावत्वेन मुख्यत्वम् । आनन्तर्यात् अमुख्यत्वं गौणीलक्षणयोः । सर्वत्र मुख्यार्थपरित्यागे प्रत्यक्षादिप्रमाणान्तराविरोधसम्पादनमेव बीजम् । तथा च अद्वैतागमस्यापि तत्वमसीत्यादेः लाक्षणिकार्थत्वे प्रत्यक्षादेः प्राबल्यमनुसरणीयमेव । तस्मात् प्रपञ्चसत्वग्राहिप्रत्यक्षं तन्मूलमनुमान वा मिथ्यात्वग्राहकागमबाधक भवत्येयेव । अत्र अद्वैती तात्पर्य वाचनिकत्वादतिरिक्तं मन्यते । मुख्यार्थत्वे अनन्यशेषत्वं तन्त्र , अमुख्यार्थत्वे च अन्यशेषत्वं बीजमिति मनुते । उभयोरपि बहुषु स्थलेषु व्यभिचाराप्रयोजकत्वादिसमर्थनपूर्व तात्पर्यस्यातिरिक्तत्वे प्रमाणाभावप्रदर्शनं मञ्जूषायां अतिविस्तृतं, तथा तलस्पर्शिविमर्शरूपं च विराजते । अस्मिन् सन्दर्भे वार्तिकशाबरादितात्पर्यपर्यालोचनं तथा स्वोक्तार्थे कौस्तभादिसंवादन च मीमांसाशास्त्रपरिणतानां विदुषा कर्णौ चक्षुषी च विशेषत उन्मेषयति इयं मञ्जूषा । हृद्यं च तत्सर्व सहृदयैः प्रत्यक्षस्य अनुमानागमबाध्यत्वे बाधकविवरणे अवलोक्यैव चतुस्तन्त्रपरामर्शनानन्दः सम्पादनीयः । अन्वयानुपपत्तितात्पर्यानुपपत्तीनां मुख्यार्थानुपपत्तिरूपत्वात् मुख्यार्थानुपपत्तिरेव हि लक्षणाबीजमिति स्वोयमुष्टिबन्धनेन सर्वानद्वैतसिद्धिकारादीन् पातयन् मञ्जूषाकारः अद्वैतागमस्य प्रत्यक्षबाध्यत्वमिव अद्वैतिविद्वद्वरविचारधारायाः सर्वविधबाध्यत्वं प्रात्यक्षिकं कृतवान् । समुदजीवयंश्च सर्वत्र सिद्धान्ताशयम् ।

### अहो सुहज्जनाः

बहुधा सिद्धान्तसेवनकर्तायं मञ्जूषाकारः धन्यः । एतत्सुपुत्रकौ मातापितरौ च धन्यौ । धन्यस्तद्वशः माध्वसमाजश्च । एतद्ग्रन्थावलोकनेन वस्तुतो मुख्यतः परमानन्दतुन्दिलौ सातन्दाश्रुपूर्णौ महापुरूषौ द्वावेवेति निश्चितं मन्यामहे । एकः महत्तमो एतद्वंशीयपूर्वपुरुषः सत्पद्यभूषासाहस्रीकारः । अपरः पूज्यतमः एतद्विद्याप्रदानपूर्व एतस्मै परमानुग्रहकर्त्ता श्रीजालिहाळाचार्यनामा गुरुवर्यः । कालतो देशतश्चअनतिदूरावत्पेतौ महापुरुषौ विद्यावपुः संहननहरिगुरुभक्तयादिरूपतः

सिद्धान्ततश्चरित्रतश्च समानाकारौ पूज्यवरौ एकत्र मिलितौ कथं विभासेते इत्युहनायाः समुत्तररूप एवायं मञ्जूषाकारः। एतयोर्महानुभावयोः परमानुग्रहद्वारा श्रीमत्सत्यध्यानतीर्थश्रीमद्राघवेन्द्रतीर्थ श्रीव्यासतीर्थार्यादिसर्वगुरूणां तथा श्रीमज्जयार्याणां परमानुग्रहसारपात्ररूपः श्रीमन्मध्वाचार्य सन्निधानविशेषाकारभूतः अयं मञ्जूषाकारः लक्ष्मीजानेः श्रीवेदव्यासदेवस्य परमानुग्रहपात्रभूत इति न पृथग्वक्तव्यमस्ति । तथापि कल्याणगुणाकरः कुलदेवताश्रीलक्ष्मी वेंकटेशरूपी श्रीलक्ष्मीहयकन्धरः सपुत्रकलत्रपरिवाराय अस्मै विदुषे विदुषे चिरायुरारोग्यभाग्यादि सप्रदानपूर्व सर्वदा सर्वतः सरक्षतु इति स्वकीयकर्तव्यतया एतं सतीर्थं विद्वास प्रीत्यादरेण च आशीर्भिर्वर्धयामहे । कर्तव्यलनं च एकं भगव त्पूजनं किल । अस्मदांचार्यकृपाकल्पलता एतस्मित विदुषि श्री ताम्रपर्णी श्रीनिवासाचार्ये प्रतिष्ठिता समभिवृद्धा च नैकानि अपूर्वाणि सिद्धान्तसारफलानि सुजनेभ्यो ददात्विति पुनराशंसनपूर्वकं श्रीहरिगुरुपदानुस्मरणपूर्व एतल्लेखनं परिगुरुचरणयोरर्पयामः । विरमामश्च विस्तरात् ॥

**॥ श्रीनिवासाचार्यः बाळगार् ॥**

# ॥ प्रकाशकीयम् ॥

करोतु मम कल्याणं हरिर्हयमुखाभिधः ॥
गुरुश्च मध्वनामा मे वरदोस्तु निरन्तरम् ॥

भोः विपश्चित्प्रवराः । वरीयः श्रीमदानन्दतीर्थभगवत्पादाचार्यसिद्धान्तविजयप्रकाशकं दुर्मतध्वातविदूरकं सुहृदयविद्वज्जनपरितोषक "न्यायामृत"नाम ग्रन्थरत्न राराजीतीर्ति नापूर्व भवताम् । तत्खण्डनमण्डनपरा बह्वो ग्रन्थाः पश्चात्तना जनिमलत्सतकालक्रमेणेत्येतदपि नापश्चिमम् । तादृशेष्यन्यतमः अद्वैतसिद्धिसिद्धान्तसारो नाम सदानन्दव्यासाख्यप्रणीतः नान्नैव स्वोद्देश निर्दिशन् ग्रन्थः श्लोकात्मकः बहुवर्षेभ्यः प्रागेव प्राकाश्य नीतः ।

तामेव सरणिमनुसृत्य श्रीन्यायामृत मिमण्डयिषवः १०८ श्री श्री विश्वप्रियमध्वनाथश्रीचरणाः" सत्पद्यभूषा साहस्री नाम प्रबन्धोत्तम व्यरचयन् । स एष प्रबन्धः अस्मत्प्रियतनूजेन चिरञ्जीविना, परमपूज्य पण्डितराज श्रीजालिहाळ श्रीनिवासाचार्याणा प्रियान्तेवासिना प ताम्रपर्णी श्रीनिवासाचार्येण विरचितया "मञ्जूषा"ख्य व्याख्यया संवलितः प्रत्यक्षस्यानुमानागमबाध्यत्वे बाधकविवरणान्तो भागः इद प्रथमतया मुद्राप्य प्राकाश्यं नीयत इति महदिद प्रमोदस्थानम् ।

ग्रन्थस्यास्य विषये तदवलोकयितारो विद्वांसः एव प्रमाणमिति न तद्विचारेस्मल्लेखनी व्यापारयामः।

**एतद्ग्रन्थकर्तारः**

ग्रन्थरत्नस्यास्य प्रणेतृणां पवित्रयशस्कानां श्रीचरणानां विषये अस्मद्वाक्शुद्ध्यर्थं किञ्चिद्वक्तुमिच्छामः इदानीम् । अस्ति खलु दक्षिणदेशे ताम्रपर्णी नाम पवित्रा नदी, या स्वनाम गृह्णतोपि पवित्रयति । तत्तीरे आस्थिततपसो विद्वच्छिखामणयः श्रीमदाचार्यशास्त्रप्रवचनचतुराः संप्रदायप्रवर्तकाः संसाधितसिद्धान्तप्रतिष्ठापनाः न्यवसन्निति इति ह्यासविदोवदन्ति । तत्रैतद्वंशस्य मूलपुरुष इति विख्यातः श्री ताम्रपर्णी नाराय-

णाचार्यः आसीत्, यस्य गाचत्रयपरोक्षमासीदित्यपि श्रूयते । तत्तनूजः श्री ताम्रपर्णी विठलाचार्यः, यदात्मजः श्री ताम्रपर्णी आनन्दतीर्थाचार्य इति ख्यातींगतः सत्तत्व-रत्नमालाख्य ग्रन्थरत्नं रचयामास । यस्य चेतरेपि षट्सुता आसन्निति श्रूयते, येष्वनयतमः श्रीताम्रपर्णी श्रीनिवासाचार्य इति प्रसिद्धः स्वाग्रजान्तेवासी अनेकान् टिप्पणीग्रन्थान् प्रणिनाय । एव श्रीमदानन्दतीर्थशास्त्रचिन्तनैकदीक्षा परमतदूषणधुर-धराः श्रीताम्रपर्ण्यार्याः बहवो विख्याताः । इमे च हरिकथामृतसाराख्यप्राकृतग्रन्थस्-यापि सस्कृतव्याख्यान व्यरचयन्येषां नाम न विदित दौर्भाग्यपूर्णैरस्माभिः ।

श्री ताम्रपर्णीवंशे श्रीवेकटरमणाचार्या इति प्रथांगताः महान्तो विद्वासः कृतभू-रितपस्का आसन् । तेषां तनयः तत्स्तोत्रपरितुष्टस्य भगवतः श्री वेंकटेशस्य कृपया लब्धजनिः श्री ताम्रपर्णी श्रीनिवासाचार्यनामा कोयमत्तूरप्रदेशे स्ववासमकृत । एष चाचार्यः परमात्मनः श्रीरमारमणस्य वेंकटाचलेशस्य तथा श्री श्रीमदाचार्यस्य महतीं सेवा विधाय तदनुग्रहेण तनयद्वयमलभत । तत्र प्रथमः श्रीवेंकटरमणाचार्यः । द्वितीयः श्री मध्वाचार्यः, यस्य हि अप्रतिमप्रतिभा तत्कालीनान् जनान् श्चर्यसमुद्रे निमग्नान-कार्षीत् । यत् बाल्यादेव चिकक्काचार्य इति प्रथिताः इमे तृतीयेवर्षे एव सूत्रभाष्याद्य पद्ये "सूत्रार्थ उच्यते " इति वा ? " सूत्रार्थमुच्यते " इति वा ? पाठ इति पप्रच्छुः । त इमे चिक्काचार्याः पञ्जमे वयसि स्वतीर्थरूपैः पितृचरणैरूपनीतिमिता वेदानध्य-गीषत । तथा काव्य व्याकरणादींश्च । यदाअमी ष्टवयस्कास्तदा एका वाक्यार्थ सभा विशिष्टाद्वैतिभिः आयोजिता प्राचालि यत्र स्वभ्रातृचरणैरुपेता जग्मुः। तत्र च सभायां अनुमानलक्षणपरिष्कारसमये नैय्यायिकसरण्या विवदतः प्रतिवादिनः प्रति यथोचितं प्रतिवक्तुमक्षमाः परैः किञ्चिदिवावमानिताः प्रतिनिववर्तिरे । पितृचरणचरणावभिव-वन्दिरे अनुज्ञायै न्यायशास्त्राध्ययनाय नवद्वीपं प्रतिगन्तुम् । सुतयोः शैशवमवलोकयन् जनकः तदा नानुमतिं ददौ । सुतौ च हठमकार्ष्टां । यावन्नलभेवह्यनुज्ञां तावन्न भुनज्व इति । पिता च भगवतःपुरतः उपस्थाय प्रार्थनामकरोदस्याः समस्यायाः परिहाराय । दिनद्वय यावदुपवासतोः सुतयोः विषये पिता भृशमतप्यत । यदृच्छया तत्र तदनीं "तर्क भीमाचार्य" इति प्रथितः वारणसीतः संप्राप्तविद्यः आजगाम । विदितवृत्तान्तः सः विलक्षणप्रतिभावतोरेतौ तर्क पाठायितुं मुदाङ्गीचकार । षड्भिरेवसंवत्सरैःसक्रो-डपत्रं बाधान्तं तर्कं अध्यापयामास । एवं तर्कशास्त्रपारंगताः इमे पुनः तत्रैव सभायां गताः तमेव प्रतिवादिनं वादे सलीलं विजित्य सर्वान् सभास्थान् पण्डितवर्यान्

अश्चर्यसमुद्रनिमग्नान् चक्रुः। ततश्च श्रीपितृचरणानां सविध एव सर्व वेदान्तमध्यैषुः । शास्त्रान्तराणि च । एव चतुःशास्त्रकोविदाः कोयंपुर्या एव कोशवंशीयां वेंकटनरसिंहाख्यां साध्वीं व्यवोदुः । पञ्च पुत्र्यःतत्राभूवन् ।यदन्यतमा तुलसीनामिका मम पितामही । पुत्रश्चाभूद्यः जगद्विख्यातयशस्कः गीतार्थविभूषणशिरोमणिरिति बिरुदभूषितः श्री सि। एम् । पद्मनाभाचार्यः ।

श्री उडुपी क्षेत्रे श्रीमन्मध्वसरोवरे यदृच्छया लब्धां श्री वादिराजकरार्चितां स्वपितृचरणेभ्यः तत्कालीन पर्यायपीठाधीशैर्दत्ता हनुमद्वाहसपुटसहिता श्री हयग्रीवप्रतिमा अप्रतिमां प्रतिदिनमर्चयन्तः अभिवृद्धतपस्काः निरन्तरं शास्त्रचिन्तनमकार्षुरमी श्री ताम्रपर्णीमध्वाचार्याः। परवादिनिग्रहचणाः श्री ताम्रपर्णीमध्वाचार्याः स्वकीयत्रिशत्तमे वयसि जैत्रयात्रां चिकीर्षवः अनन्तशयन प्रति प्रातिष्टन्त । " अनाहुता वयं कथं सभां गच्छेम " इति विचारयतां एषां कुत्रचित् देवालये स्वापंगतानां स्वन्प एको बभूव । स्वप्ने श्रीमदानन्तपद्मनाभस्वामी विप्रवेषेणागत्य " रे मध्व नाथ" इत्याकारयत् । बाल्यादप्यश्रुत स्वनामग्रहणपूर्वकाभाषणाना एतेषा महदिदमभूदाश्चर्यम् । बाह्मणरूपी भगवान् इमान् आचार्यान् दृष्ट्वा "अह भोः पद्मनाभः नारायणः । मा बिभेहि "आयाह्यरे तव समञ्जसमत्र कुर्या "इत्युवाच । झटित्यन्तर्दधे च स्वप्नादुत्थिताः भगवतः श्रीश्रीमदनन्तपद्मनाभस्य कृपा गद्गदकण्ठाः स्वकीयेषु निरूपयन्तः स्मरन्तः श्री आचार्या अनन्तशायनं प्राप्नुवन् । तत्र श्रीमदनन्तपद्मनाभदेवदर्शनादि कृत्वा पाठप्रवचननिरता अभवन् । तस्मिन्नेव समये भगवद्दर्शनार्थमागतानां सभानिर्वाहकाणां दृष्टिः एनान् समलक्ष्यत । पुस्तकाद्यनपेक्षयैव निरर्गल पाठक्रममेषां दृष्टवा आश्चर्ययुतास्ते सभायै एतान् आमन्त्रयामासुः । अङ्गीकृत्य सभागतेषु आचार्येषु महदोजः संप्रेक्ष्य सर्वेपि नितरां मुमुदिरे । सभायां प्रथमदिवसे आरंभणाधिकरणे कश्चन अद्वैतवादी शाकरभाष्यानुवादमारेभे । मध्ये यत्र कुत्रचिद्दत्तदृष्टिभ्य एभ्यः श्री आचार्येभ्यः स वादी भृशमकुप्यत् । तदा श्री आचार्याः "कुतो वा इयान् कोपः? नास्मि भवदनुवादे अनवहितः " इत्यूचुः । सोपि वादी"यद्यवधानां स्यात्तर्हि अनूद्यतां इति प्रत्यवतिष्ठत् । तदा आचार्यः अपृच्छन् । "किं भवान् मत्तः शब्दानुवादमपेक्षते आहोस्विदर्थानुवादमिति । वादी तु बहुकुपितः परीक्षणाय शब्दतोनुवादमेवापैक्षत । वादिनः मुखकरसंचलनाद्यनुकुर्वन् समग्रं तत्प्रयुक्तशब्दानेव नुजगदुः। सभावादी, तथा मध्यस्थश्च सर्वे आश्चर्यचकिता मूकीभावमभजन् । ततः शांकर-

सिद्धान्तान् अनूदितान् एकैकशो निरस्य मधुरसुन्दरवाग्विन्यासैः तद्वादस्याग्राह्यतां न्यरूरुपन् । तदसहमानः वादी पप्रच्छ तर्हि माध्वभाष्यरीत्या कः सूत्रार्थः ? इति । तदा मध्यस्थः प्रश्नस्यासाङ्गत्यमवगम्य तद्रीत्या सूत्रार्थ एव नास्ति भोः । त्वार्थः अलग्न इति तु सिद्धान्तितः खलु ? मोहनराग इव (संगीतमिव) सर्वजनमनोरञ्जयतां एषां भाषणं केवलं श्रोतव्यम् इत्यवोच । ततो लब्धावसराः श्री आचार्याः श्रीमन्मध्वभाष्यरीत्या सूत्रार्थ, तस्य वेदाद्युपारूढत्व, युक्तिसिद्धत्व प्रत्यक्षादिप्रबलप्रमाणान्तराविरोधं च सम्यगुपपादयामासुः । ततश्च तस्मिन् दिने द्वैतवादिना विजयशालितामुद्घोषयामास राजा । अपरेद्युरपि एव भावरूपअज्ञानसाधकविवरणकृदनुमानविषये वाक्यार्थविमर्शे महान्विजयोभूदाचार्याणाम् । अन्तिमे दिने सभायामागतानां विदुषां संमाननसभावनादि वितरणप्रस्तावे किमपि संभावनं नाङ्गीचक्रुरिमे अप्रतिग्रहवृत्त्या भगवत्तोषमारचयितारः । कथञ्चिदेषां मनः परिवर्तनीयमिति कृतः सर्वोपि प्रयत्नः विफल एवाभवत् । ततः कृतस्य वादिविजयस्य संकेतरूपां सौवर्णीं वीरशृङ्खलांदानायानि न्युःते सर्वेसभापत्या दयो "येषामीदृशा न दृष्टपूर्वाः । तस्या वीरशृङ्खलाया अपि स्वीकारो नादृत आचार्यैः । तदानीं भृशं तातप्यमानहृदयास्त इमा शृङ्खलां भगवतः श्रीमदनन्तपद्मनाभस्य करे निवेश्य आज्ञायै प्रतीक्षांबभूवुः । तदनु भगवद्दर्शनोत्सुका श्री आचार्या पाददर्शनं कृत्वा यदा मध्यद्वार प्रापुस्तदा श्रीहरेः करांबोजात् निःसृता सा वीरश्रुंखला अमीषां आचार्याणां समीपे एवागच्छत् । पश्यतामिदं जनानां रोमाञ्चनमभूत् । विदितभगवत्संकल्पाः श्री आचार्याः तूष्णीं बभूवुः । तदा तत्र प्रधानार्चकः पुरतः आगत्य तां श्रुङ्कलां आचार्याणां करे निधाय कृतकृत्योभवत् । आचार्याश्च हरेरिमं परमानुग्रह मत्वा भगवन्तं नेमुः । प्रतिनिववर्तिरे च स्वदेशम् । कोयंपुरं प्रत्यागतानां गृहे पुत्ररत्नस्य नामकरणमहोत्सवः निश्चित आसीत् । तदपि सुतरत्नं भगवतः पद्मनाभस्य विशेषानुग्रहं मन्वाना तस्य "पद्मनाभ" इत्येव नामाकार्षित् । यः श्रीमध्वसिद्धान्तवैजयन्ती दिक्षु प्रसारयन् पितृचरण चरणसेवामचर्करीत् । निरन्तरपाठप्रवचनैः सार्थकीकृतनिजायुषः श्री आचार्याः अनेकानि ग्रन्थरत्नानि रचयामासुः । १ न्यायामृतकलाधरः २ द्वात्रिंशत्कोटिभूषा ३ चतुर्दशविलासी ४ भागवतरसोद्धारः ५ पञ्च भङ्गीप्रकाशः ६ तार्किकयुक्तिसूचिनीत्यादि तत्र प्रमुखानि

**न्यायामृतकलाधरः**

अयं ग्रन्थः अद्वैतसिद्धिब्रह्मानन्दीग्रन्थ निरसनपरः मधुरपदविन्यासैः सुलभया सरण्या न्यायामृतसिद्धान्तमण्डन विदधाति । अयं च ग्रन्थः श्री सि एम पद्मनाभाचार्यैरेव मुद्रापितः राराज्यते ।

**द्वात्रिंशत्कोटिभूषा**

इय कृतिः ईश्वरस्य सदागमैकविज्ञेयत्वं नैय्यायिकोक्तानुमाननिरसनपुरः सरं समर्थयति । पूर्वपक्षसिद्धान्तानां क्रमशः कोटिक्रम आरचितः बुधानां मनः प्रसादमासाधयति । गतवर्षेस्माभिः मुद्रापिता वर्तते ।

**चतुर्दशविलासी**

इयमपि वर्णनित्यत्व निरूपयन्तीकोटिक्रमरूपा गते सवत्सरेस्माभिः मुद्राप्य प्रकाशिता ।

**भागवतरसोद्धारः**

अमुद्रितोयं ग्रन्थः । श्रीमद्भागवते केषांचन श्लोकानां विशेषार्थ निरूपयन् विद्वन्मनो रञ्जयति।

**ताकिकायुक्तिसूचिनी**

इयं च श्री ताम्रपर्णी सुब्बाचार्यैः मुद्राप्य प्रकाशिता सार्थनामवती विराजते । "श्रीन्यायसुधामधुधारा" इत्ययं ग्रन्थः जिज्ञासाधिकरणश्रीमन्न्यायसुधाव्याख्यानरूपः निजतनु जन्म श्री सि एम पद्मनाभाचार्यद्वारा, श्रीचरणैरेव लेखितः तन्नामङ्कितः अद्याप्यलब्धमुद्रणेस्ति । श्रीमदाचार्यसेवाधुरन्धराः श्रीचरणाः निरन्तरपाठप्रवचनैकदीक्षाः बहून् स्वशिष्यान् पण्डितान् व्यदधुः। तेष्वन्यतमोस्मत्तीर्थरूपः तातपादः श्री सि के हनुमन्ताचार्यः येन महता परिश्रमेण मूलप्रतिः प्रतिकृता सत्पद्यभूषासाहस्त्री मुद्रणायोपलब्धा । यस्य समग्रः श्रीमन्महाभारततात्पर्यनिर्णयः समग्रं श्रीगीताभाष्यं

च वाचो विहितमासात् । अस्मत्पितृचरणस्य श्रीमत्सुमध्वविजयः श्वास इव आसीदित्येषा नातिशयोक्तिः तद्दर्शनभाजां पुरतः । स्वभावत एव विरक्ताः सौधताम्रपर्णी श्रीमध्वाचार्याः स्वात्मजस्य पैतृककर्माभावं जातरदर्शनेन निश्चित्य क्रिस्तशक १६१० तमे तुर्याश्रम श्रीराघवेन्द्रस्वामिपादानां वृन्दावनात् स्वीचकुः । श्री चरणाः १६१६ तमे क्रैस्ताब्दे निजतनये श्री सि एम् पद्मनाभाचार्ये दिवं गते, विरक्ता अपि अतिशय वैराग्य प्राप्नुवन् । तत्कालीनाधमारुपठाधीशाः सञ्चारक्रमेण श्रीरङ्गक्षेत्रमागताः श्रीचरणानां सौहार्दयुतपाण्डित्यपूर्णसंवादमवलोक्य "विश्वप्रिय" इति बिरुदमदुः । प्रायः क्रैस्ताब्दे १९२५ - २६ तमे वर्षे सत्पद्यभूषासाहस्त्रीनामक इमं ग्रन्थं श्लोकरूपं श्लोकरूपाद्वैतसिद्धि सिद्धान्तसाराख्यग्रन्थस्य सदानन्दव्यासप्रणीतस्य खण्डनपर पर रचयामासुः । यदौन्नत्ये तत्पठितारो भवन्त एव प्रमाणम् । क्रैस्ताब्दे १०३१ तमे प्रायः शततमे वयसि श्रीलक्ष्मीहयग्रीवमूर्तिं स्वोपास्या नितरा स्मरन्तः श्रीरङ्गक्षेत्रे. वृन्दावन प्राविशन् । ग्रन्थतोस्मन्मनः पवित्रीकुर्वतां श्री श्री चरणेषु " भूयिष्ठं ते नम उक्तिं विधेय " इत्यतोन्यद्वक्तु न वयं पारयामः । श्रीसत्पद्यभूषासाहस्त्रीग्रन्थस्य मञ्जूषाभिधां व्याख्या विरच्य स्वकीयमपि सेवा विधित्सते चिरञ्जीविने कुमारायायुष्मते ताम्रपर्णीश्रीनिवासाचार्या यतन्न भवन्तो महान्तो विद्वांसः गुणपक्षपातिनो भूत्वा सतो दोषान् प्रामदिकान् तस्मै निवेद्य अनुगृह्यशिाषो वितरन्त्विति संप्रार्थयामः । पण्डितप्रकाण्डानाम् स्वाशीराशिभिः अस्मदुद्धातृणां , अविच्छिन्नपाठप्रवचनः यावदायुः विनिर्मितपण्डितमण्डलानां न्यायामृतार्णवादिप्रौढप्रबन्धैः विरचितश्रीमध्वसिद्धान्त प्रातिष्ठापनानां अस्मत्तनुजस्य श्रीनिवासाचार्यस्य अस्माकंच गुरूवर्याणां यशः कायानां परम पूज्य पण्डितराज श्री जालिहाळाचार्यणां (श्रीनिवासाचार्याणां) अनुग्रहबलेन तथा तेषां धर्मपत्न्याः अस्मदाचार्याण्याः वैनीति विख्यातायाः साध्व्याः करपरिवेषितान्नप्रभावेन च कृतसाहसेष्वस्मासु सन्तोनुगृह्णन्ति इति अस्ति महान् विश्वासः । केवलं दुराग्रहेण दूषयतोपि दुष्टान् "महत्स्थानं समारूढा खला निन्दन्तु का क्षतिः गजस्य किं स्याद्धषणैः प्रासादारोहिणःशुनः" इति अभियुक्तोक्तिमनुसृत्योपेक्षामहे ।

श्रीमन्मध्वसिद्धान्ते कृतभूरिपरिश्रमेभ्यः ग्रन्थस्यस्य संशोधने समूढपरिश्रमेभ्यः गुणपक्षपातिभ्यो दोषज्ञेभ्यः सादरं सविनयं भूयांसि नमांसि समर्प्य कृतज्ञतां निवेदयामः। भूमिकां विलिख्याभिवर्धितग्रन्थशोभानां अस्मान् आशीर्वादैः परितोषितवतां

मिथ्यात्वानुमानेऽपि साम्यात्। शुक्तिरूप्यस्य मिथ्यात्वं साधनीयमिति नियामकाभावः इति।

**तदुपरि पूर्वपक्षी ॥ सद्भिन्नत्वरूपमिथ्यात्वस्य उभयवादिसिद्धत्वेन शुक्तिरूप्ये सिद्धसाधनं स्यादिति, तद्वारणाय ब्रह्मप्रमान्याबाध्यत्वविशेषणं सार्थकमिति ॥**

सद्भिन्नत्वरूपेति – तन्मात्रस्य मिथ्यात्वाङ्गीकारे इत्यर्थः।

**सिद्धान्ती खण्डयति – इति न युक्तम्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरनुमितिप्रतिबन्धकत्वाभावेन शुक्तिरूप्ये सिद्धसाधनस्य सामानाधिकरण्येन सिद्धिरूपतयाऽदोषत्वात् आद्यं विशेषणं व्यर्थमेव ॥**

पक्षतावच्छेदकावच्छेदेनेति :– पक्षतावच्छेदकावच्छिन्ने सर्वत्रेत्यर्थः। केवलसद्भिन्नत्वरूपमिथ्यात्वस्य वादिरीत्यां असत्यतिव्याप्तत्वात् प्रतिवादिरीत्यासत्यपि संभवेन सति अतिप्रसङ्गात् तदर्तं असद्विलक्षणत्वस्यापिनिवेशे उक्तदोषतादवस्थ्यात् उभयवादिसिद्धत्वस्य अकिञ्चित्करत्वेनोक्तदोषस्यैवाम्रेडनेऽरुच्या दोषान्तरमाहेति बोध्यम्।

**तदुपरि पूर्वपक्षी – तद्धर्मधर्मितावच्छेदककानुमितिं प्रति तद्धर्मिकसिद्धिसामान्यस्य विरोधितावादिनां प्राचीनानां मतरीत्या शुक्तिरूप्ये सिद्धसाधनं दूषणमेवेति तद्वारणायाद्यं विशेषणं सार्थकमिति ॥**

तद्धर्मेति :– तन्द्धर्मः = विश्वत्व, ब्रह्मान्यत्वादिः। धर्मितावच्छेदकः स एव। अनुमितिः विश्वं मिथ्या इति। तां प्रति तद्धर्मिकसिद्धिः = विश्वधर्मिकसिद्धिः = शुक्तिरूप्यधर्मिकसिद्धिरपि विरोधिनी इत्यर्थः। अस्य दूषणस्य अद्वैतसिद्धौ अपि अङ्गीकृतत्वेन प्राचीनानामित्युक्तम्।

**सिद्धान्ती खण्डयति – इति न युक्तम्। तथात्वे "क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत्," "विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते आत्मत्वात् परमात्मवत् इत्याद्यनुमानेष्वपि पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिसंभवात् सिद्धसाधनं दूषणं स्यादिति।**

क्षित्यङ्कुरादिकमिति –इदं अनुमानं तार्किकरीत्या। अद्वैतरीत्या तु द्वितीयमनुमानम्। उभयत्र दृष्टान्तान्तर्भावेनैव सिद्धिसंभवः। तथाचार्वाचीनप्राचीनमतयोरुभयत्र दोषस्य सुस्थत्वं ज्ञेयम्।

**तदुपरि पूर्वपक्षी – तत्र विमतत्वस्यैव पक्षतावच्छेदकत्वात् पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिर्नास्ति इति न सिद्धसाधनं दूषणमिति॥**

**सिद्धान्ती खण्डयति –इति न युक्तम्। प्रकृतेऽपि विमतत्वस्यैव पक्षतावच्छेदकत्वसंभवेन ब्रह्मप्रमान्याबाध्यत्वविशेषणं व्यर्थम्।**

**विमतत्वस्यैवेति।** तथा च विमतत्वं विमतिविषयत्वम् = संशयविषयत्वम्। तत्तु शुक्तिरूप्ये नास्तीति पक्षतावच्छेदकविमतिविषयत्वानवच्छिन्नत्वात् शुक्तिरूप्यस्य, न सिद्धसाधनता। संशयविषयत्वेन निश्चयरूपसिद्धिविषयत्वासंभवात्। एवं पूर्वपक्षेपि आत्मानुमाने परमात्मनः विमतत्वाभावात् न सिद्धसाधनतेति ज्ञेयम्।

**एवं ब्रह्मप्रमान्याबाध्यत्वमपि शुक्तिरूप्ये संभवति। कथमित्युक्ते अद्वैतिनां मते "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते" इति ब्रह्मणः सर्वप्रत्ययवेद्यत्वाभ्युपगमेन नेदं रूप्यं इति प्रमाया अपि ब्रह्मप्रमात्वेन, ब्रह्मप्रमान्याबाध्यत्वं शुक्तिरूप्ये प्राप्तमेवेति सिद्धसाधनं दूषणमेव॥**

कथंचित् सिद्धसाधनसंभवेपि प्रकृतविशेषणात् तदपरिहारमाह एवमिति। सर्वप्रत्ययैः सकलैः प्रत्ययैः प्रतीतिभिः वेद्ये विषयीक्रियमाणे ब्रह्मरूप ब्रह्मणि प्रपञ्चस्य प्रविलय इत्युत्तरग्रन्थेनान्वयः। तथा च ब्रह्मणः सर्वप्रतीतिविषयत्वमङ्गीकृतम्। तथा च नेदं रजतमिति बाधकप्रमाया अपि सर्वान्तर्भूतत्वेन ब्रह्मप्रमात्वं तदन्यज्ञानाबाध्यत्वं शुक्तिरूप्ये सुसङ्गमं इति सिद्धसाधनं दुर्वारमेवेति भावः ॥

**तदुपरि पूर्वपक्षी – ब्रह्मप्रमापदेन ब्रह्मान्याविषयकब्रह्मविषयकप्रमाया एव विवक्षिततया नेदं रूप्यं इति प्रमाया ब्रह्मप्रमात्वेपि ब्रह्मान्याविषयकप्रमात्वाभावात् शुक्तिरूप्ये विवक्षितब्रह्मप्रमान्याबाध्यत्वं नास्तीति न सिद्धसाधनदूषणमिति ॥**

**प्रमापदेनेति** – नेदं रजतं इति प्रमायाः ब्रह्मविषयकत्वं, ब्रह्मान्यविषयकत्वं च स्तः इति सिद्धसाधनपरिहारः। ब्रह्मप्रमात्वेपीति –ब्रह्मविषयकत्वेऽपीत्यर्थः ब्रह्मान्यशुक्तिरूप्यविषयकत्वेन न विवक्षितब्रह्मप्रमात्वमिति न सिद्धसाधनता।

**सिद्धान्तः – इति न युक्तम्। तथात्वे 'अहं ब्रह्म घटो विनाशी' इति समूहालंबनज्ञानस्य प्रपञ्चबाधकत्वे बाधकाभावेन प्रपञ्चे पक्षे ब्रह्मान्याविषयकब्रह्मविषयकप्रमान्याबाध्यत्वं नास्तीत्याश्रयासिद्धिः स्यादिति ॥**

**अहं ब्रह्मेति**। अहं ब्रह्मास्मीति श्रुत्या जायमानज्ञानस्य ब्रह्मज्ञानत्वेन प्रपञ्चबाधकत्वाभ्युपगमात्, अहं ब्रह्म घटो विनाशीत्युक्तज्ञानस्य ऽ पञ्चबाधकत्वे अधिकं तु प्रविष्टं न तद्धानिकरं इति न्यायेनानुपपत्त्यभावात् तस्य चान्यविषयकत्वेन अन्याविषयकब्रह्मप्रमाबाध्यत्वात् प्रपञ्चस्य, पक्षाप्रसिद्ध्या आश्रयासिद्धिः। यद्यपि अद्वैतमते ब्रह्मनिर्विकल्पकज्ञानस्यैव प्रपञ्चबाधकत्वेन उक्तसमूहालंबनज्ञानस्य तथात्वाभावान्न बाधकता। तथापि अहं ब्रह्म इति ज्ञानस्याऽपि सविषयकत्वेन सविकल्पकत्वेनानुपपत्तिपरिहारार्थं ब्रह्माप्रकारकत्वस्यअवश्यं

तस्या ऽङ्गीकर्तव्यत्वेन तथात्वं च घटो विनाशीत्यत्रापि सुगममित्यस्य समूहालंबनज्ञानस्य प्रपञ्चबाधकत्वमङ्गीकारार्हम् । उक्तसमूहालंबनज्ञानस्य प्रपञ्चबाधकत्वं तु परैरप्यङ्गीकृतम्। तदुक्तं न्यायरत्नावल्यां "ननु अहं ब्रह्म, घटो विनाशी" त्यादिसमूहालम्बनस्य दैववशसम्पन्नकारणबलात् घटादिविषयकस्य अविद्योच्छेदकत्वमास्ताम् । इष्टापत्तौ च प्रमात्रादेः महावाक्यार्थबोधे भाननिराकरणस्य पूर्वकृतस्यानुपपत्तिरिति चेन्न। शुद्धस्वरूपान्यस्य तात्पर्याविषयत्वेन वाक्यार्थबोधे नियमतो न भानम्। दैववशसम्पन्नकारणबलात् प्रमात्रादेर्भानं तु स्यादेवेत्याशयबलेन नियमतः प्रमात्रादिभानस्यैव पूर्वं निराकृतत्वात्। उक्तं च विद्यारण्यश्रीचरणैः –

न बुद्धिं मर्दयन दृष्टो घटतत्त्वस्य वेदिता।

उपमृदनाति चेत बुद्धिं ध्यातासौ न तु तत्त्ववित्

(ध्यानदीप-६-६१)

तत्त्वज्ञानस्य इतरविषयकत्वराहित्याय बुद्धिमर्दनं नापेक्ष्यते इतरविषयस्यापि तत्त्वविषयकत्वसंभवात्। ध्याने तु विजातीयधीरहितसजातीयधीप्रद.-हरूपे तदपेक्ष्यते इति ध्यानदीपिकास्थोक्तवाक्यार्थः। यत्तु "जीवन्मुक्तस्य कदाचिदद्वैतात्मदर्शनं कदाचित् द्वैतदर्शनं न युगपदुभयम् सन्तमसबहुलालोकाविवे" ति विवरणे उक्तम् । तदद्वैतात्मजिज्ञासाकाले तदन्याविषयकज्ञानपरम् । अन्यथा प्रारब्धभोगसामग्रीबलाज्ञायमानस्य द्वैतविषयकस्य शुद्धात्मज्ञानस्य वारणासम्भवात्" इति।

ननु "यथा घटो न घट" इति ज्ञानमाहार्यमेव तथा शुद्धात्मस्वरूपाधिष्ठानतदारोपितद्वैतरूपविरुद्धद्वयविषयिका 'अहं ब्रह्म घटो विनाशी' त्यादिवृत्तिराहार्यैव वाच्या । सा च न ज्ञानम् अस्मन्मते हि आहार्यादिवृत्तिरिच्छादिवत् वृत्त्यन्तरमेव न तु धीः। अतस्सा नात्मदर्शनं इत्यद्वैतात्मदर्शनद्वैतदर्शनयोर्न यौगपद्यम्। तदुक्तं विवरणे "जीवन्मुक्तस्य कदाचिदद्वैतात्मदर्शनं कदाचिद्द्वैतदर्शनं न पुनर्युगपदेवोभयं" सन्तमसबहुलालोकयोरिव विरोधात् "इति विद्यारण्यवचनं तु प्रारब्धाधीनजीवन्मुक्तव्यवहारोपयोगिज्ञानपरमिति न विरोधः । न च तस्य

ज्ञानस्य कथमाहार्यत्वमिति वाच्यम्। द्वैताद्वैतविषयतयोर्विरोधात्। नचैकधर्मिणि विरुद्धयोरेकविशिष्टेऽपरसंसर्गविषयकत्वेनैवाहार्यत्वं वक्तव्यमिति कथमतथाभूतमुक्तज्ञानमाहार्यमिति वाच्यम्। नेह नानास्ति किञ्चनेत्यादिवाक्यैः प्रपञ्चस्य ब्रह्मणि निषेधात् तदभावस्य शुद्धब्रह्मव्यापकत्वेन ग्रहात्, शुद्धब्रह्मस्वरूपस्य तादात्म्येन घटाद्यभावव्याप्यतया गृहीतत्वात्, तादृशसद्रूपतादात्म्यस्य च दृश्याकारवृत्तौ दृश्यांशे भाननियमस्य सिद्धान्ते स्वीकारात्, उक्तवृत्तेः घटादिविरुद्धे सद्रूपे घटादितादात्म्यविषयकत्वेनाहार्यत्वानपायात्। तथा नेयं वृत्तिरविद्यानाशिका ज्ञानत्वाभावादिति चेत्।

मैवं। सदेव सौम्येत्यादिश्रुत्या ब्रह्मणि इदंशब्दार्थद्वैतसामान्यतादात्म्यस्य लब्धत्वेन 'एकमेवाद्वितीयमिति' श्रुतेश्च द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभावविषयकत्वस्य त्वत्सिद्धान्तसिद्धत्वात् तस्य च ज्ञानस्याहार्यत्वपरिहाराय व्यावहारिकद्वैतवति ब्रह्मणि पारमार्थिकस्य द्वितीयाभावस्य विषयतया विषमसत्ताकयोर्भावाभावयोरविरोधस्य वा, दृश्यत्वेनोद्धेश्यतावच्छेदकीकृतस्य द्वैतस्य आत्मभिन्नत्वावच्छिन्नप्रतियोगिताकद्वितीयाभावेन विरोधाभावस्य वा त्वया वक्तव्यत्वेन इहापि पारमार्थिकघटाभावव्याप्यस्यापि शुद्धस्य व्यावहारिकेण घटेनोक्तरीत्या विरोधाभावेनोक्तसमूहालंबनज्ञानस्याहार्यत्वानुपपत्तेः। न हि त्वन्मते नेह नानेति श्रुतौ इहेति परामृष्टे व्यावहारिकद्वैतवद्ब्रह्मणि व्यावहारिको द्वैताभावो विधीयते। येन श्रुतिजन्यबुद्धेराहार्यत्वापत्तिःस्यात्। किन्तु पारमार्थिको घटाद्यभाव एव। तथा च समसत्ताकयोरेव भावाभावयो र्विरोधात् पारमार्थिकघटाभावस्य व्यावहारिकेण घटेन विरोधासिद्ध्या तादृशाभावव्याप्यस्यापि तेन विरोधो न सिद्ध्यति इति, अहं ब्रह्म घटो विनाशीति ज्ञानस्य न आहार्यत्वेन प्रपञ्चाबाधकत्वम्। अत एव ब्रह्मानन्दः तत्रैव न्यायरत्नावल्यां "वस्तुतस्तूक्तवृत्तेःद्वैताद्वैतविषयकत्वेपि द्वैतांशे प्रमात्वानिश्चयेन प्रमात्वेन निश्चीयमानयोरेव द्वैताद्वैतधियोर्न यौगपद्यमित्यर्थकत्वेन उक्तविवरणवाक्यमविरुद्धमित्याह। अन्यथा मिथ्यात्वानुमितेरपि द्वैताधिकरणे द्वैताभावविषयकतयाऽऽहार्यत्वं दुष्परिहरमेव स्यात्।

तदुपरि पूर्वपक्षी प्रपञ्चे उक्तसमूहालंबनज्ञानबाध्यत्वे तमेव विदित्वाऽतिमृत्युमेति इति श्रुतौ तदन्याविषयकतद्विषयकज्ञानस्यैव मुक्तिजनकत्वोक्त्या, तच्छ्रुतिविरोधापातेन उक्तसमूहालंबनज्ञानस्य प्रपञ्चबाधकत्वाभावे न नाश्रयासिद्धिः।

**सिद्धान्तः** – इति न युक्तं। "अन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोति" इत्यादौ अन्नेतरभोजनत्वानवच्छिन्नान्नभोजनत्वावच्छिन्नजनकताकतृप्तिमानितिबोधवत्, तदन्यत्वविषयकत्वानवच्छिन्नतद्विषयकत्वावच्छिन्नजनकताकमुक्तिमान् इति बोधसंभवेनोक्तसमुहालंबनज्ञानस्य प्रपञ्चबाधकत्वेऽपि उक्तश्रुतिविरोधाभावेनाश्रयासिद्धिर्दुर्वारैव॥

**अन्नमेव भुक्त्वा इति** – ह्रदो वन्हिमान् इति ज्ञानं प्रति अधिकावगाहिनः ह्रदो वन्ह्यभाववान् भूतलं घटवत् इति ज्ञानस्यापि वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वेनैव प्रतिबन्धकतया, भूतलं घटवदित्यंशस्यावर्जनीयतायाश्च निर्बाधत्वेनाभ्युपगतत्ववत् अत्रापि अहं ब्रह्म घटो विनाशी इति ज्ञानस्यापि प्रपञ्चप्रतिबन्धकत्वं युज्यते। अन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोतीत्यादौ तृप्तिनिष्ठजन्यतानि[illegible]पिता या भोजननिष्टजनकला सा अन्नभोजनत्वावच्छिन्ना न तु अन्नेतरभोजनत्वावच्छिन्ना इति बोधः जायते। तथा च यथा वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वेनैव प्रतिबन्धकता तथाऽधिकावगाहिब्रह्मज्ञानस्यापि, ब्रह्मविषयकत्वावच्छेदेनैव प्रपञ्चबाधकता न तु अन्यविषयकत्वावच्छेदेन, ब्रह्मविषयकत्वस्यैव बाधकतान्यूनानतिरिक्तवृत्तित्वात्। श्रुत्या च ब्रह्मविषयकत्वस्यैव बाधकतावच्छेदकत्वं विहितं ज्ञाननिष्ठमुक्तिजनकतावच्छेदकं ब्रह्मविषयकत्वमेवेति श्रुतेः [illegible]र्यवसितोऽर्थ इति न तद्विरोधः इति भावः। विस्तरस्तु अन्यत्रानुसन्धेयम् ।१२।

**सिद्धान्तः** -- निष्प्रकारकचरमसाक्षात्काराव्यवहितपूर्वकालीनब्रह्मण्यारोपितक्षणिकत्वे सिद्धसाधनं दुर्वारमेव। एवं शुक्तिरूप्ये ब्रह्मप्रमान्याबाध्यत्वस्याप्यारोपितस्य संभवेन, अनारोपितत्वस्य च

**विशेषणेऽनारोपितब्रह्मप्रमान्याबाध्यत्वस्य प्रपञ्चेऽभावेन आश्रया-सिद्धिः। असद्विलक्षणत्व, ब्रह्मान्यत्वविशेषणयोः वैय्यर्थ्यं चेति॥ १३॥**

**क्षणिकत्वे इति** – तस्य प्रातिभासिकत्वेन, मिथ्यात्वं सिद्धम्। तत्वज्ञानाव्यवहितपूर्ववृत्तितया ब्रह्मप्रमान्यबाध्यत्वासंभवात् सिद्धसाधनता। ननु नैष दोषः। ब्रह्मप्रमातिरिक्तबाध्यत्वयोग्यत्वाभावस्य करणसंसर्गिदोषाप्रयुक्तत्वरूपस्य विवक्षणादिति चेन्न। अर्थसंसर्गिदोषप्रयुक्तप्रातिभासिके सिद्धसाधनाऽपरिहारात्। अर्थसंसर्गिदोषाप्रयुक्तत्वस्यापि निवेशे प्रपञ्चस्यापि स्वोपादानाविद्याप्रयुक्तत्वेनाश्रयसिद्धिः। अविद्यातिरिक्तदोषाप्रयुक्तत्वमपि अविद्याकार्यप्रयुक्तघटादिप्रपञ्चे तदभावेनाश्रयासिद्धेर्न निवेश्यम्। अविद्या तत्कार्यान्यतरातिरिक्तदोषाप्रयुक्तत्वं तु प्रातिभासिकसाधारणमेवेति सिद्धसाधनम्। काचकामलादेरविद्याकार्यत्वात्। **विशेषणे चेति – ब्रह्मप्रमान्याबाध्यत्वे इत्यादिः। प्रपञ्चेऽ भावेनेति** -अयं भावः। यदीयं "प्रपञ्चःब्रह्मप्रमान्याबाध्यः" इति प्रतीतिः प्रमात्मिका, तर्हि प्रपञ्चान्तरर्गतस्य ब्रह्मप्रमान्याबाधस्थ्यत्वस्य यथार्थज्ञानविषयत्वेन सत्यता स्यात् न च तस्य व्यावहारिकसत्यताङ्गीकृतैवेति वाच्यम्। तथा सति तस्य बाध्यत्वेन अनारोपितत्वमसंभवि। अद्वैतिरीत्यापि निर्विकल्पकब्रह्मज्ञानमात्रस्य प्रमात्वेन इतरस्य भ्रमत्वेनास्याः प्रतीतेः भ्रमत्वेन अनारोपितत्वं प्रकारेऽसंगतम्। तथाचेदृशानारोपिताबाध्यत्वं प्रपञ्चे नास्तीत्येवेति सिद्ध्याऽऽश्रयासिद्धिरिति।इदमत्रावधेयम्। सर्वत्रानुमानेषु पक्षतावच्छेदकस्यारोपितस्य दृष्टान्तादौ संभवेन सिद्धसाधनादिप्रसक्तौ तद्वारणाय अनारोपितमेव तद्विवक्षणीयम्। पर्वतादौ पक्षे अनारोपितस्य पर्वतत्वादेःसत्त्वान्नास्ति सर्वानुमानोच्छेदप्रसङ्गः। अद्वैतरीत्या न किमपि पक्षतावच्छेदकं अनारोपितमस्तीति सर्वनमानेष्वपि स्यदेव आश्रयासिद्धिः। ब्रह्मप्रमान्याबाध्यत्वस्य पक्षतावच्छेदके विवक्षणं तु तस्य आरोपितानारोपितसाधारणत्वान्न संभवि।

**असद्विलक्षणत्वब्रह्मान्यत्वविशेषणयोः वैय्यर्थ्यं चेति** - ब्रह्मप्रमान्याबाध्यत्वे अनारोपितत्वस्य विशेषणे सति वैय्यर्थ्यं इत्यर्थः। असत् ब्रह्मप्रमान्याबाध्यं इति प्रतीतेः प्रमात्वे भ्रमत्वे वाऽप्रतीतत्वहानिः। भ्रमत्वे तु अनारोपितत्वहानिश्च। सर्वथा प्रतीत्यभावे कथमनारोपितत्वमबाध्यत्वे इतीदृशब्रह्मप्रमान्याबाध्यत्वस्य

असत्यभावादबाधात् तदर्थं विशेषणस्यानावश्यकत्वात् । न च अनारोपितत्वं न भ्रमविषआयत्वे सति विषयत्वं, किन्तु सर्वथा भ्रमाविषयत्वमेव । तच्च अविषये असति सुसङ्गतमिति वाच्यम् । बाधार्थं ब्रह्मप्रमान्याबाध्यत्वस्य असत्यङ्गीकार्यत्वेनासति ब्रह्मप्रमान्याबाध्यत्वमस्ति वा न वेति पृष्टे अस्तीत्युक्तौ तत्प्रतीतिविषयत्वेन असतः प्रतीतत्वात्, प्रतीतेः भ्रमत्वे तूक्तदोषतादवस्थ्यात् । एवं अद्वैतमते ब्रह्मनिर्विकल्पकज्ञानस्यैव प्रमात्वेन, ब्रह्म ब्रह्मप्रमान्याबाध्यं इति प्रतीतेरुक्तरीत्या भ्रमत्वात् ब्रह्मप्रमान्याबाध्यत्वस्यारोपितत्वेनानारोपितब्रह्मप्रमान्याबाध्यत्वस्य ब्रह्मण्यभावेन न बाधः । तद्वारणार्थं प्रयुक्तं ब्रह्मान्यत्वविशेषणं व्यर्थमिति ॥ १३ ॥

**एवं असद्विलक्षणत्वविशेषणमपि असङ्गतम् कुत इत्युक्तेअसद्विशेष्यकमिथ्यात्वप्रकारकानुमितिजनकाज्ञानस्याद्वैतिरीत्याऽभावेन, पक्षविशेष्यकसाध्यप्रकारकानुमितिजनकाज्ञाननाशकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वस्य बाधलक्षणस्य अभावेन, पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वमात्रस्य बाधलक्षणत्वे प्रातिभासिकवन्ह्यभाववत्पर्वतादेरपि बाधत्वापत्त्या, स्वसमानसत्ताकत्वस्य तद्रूपे विशेषणीयतयाऽसति कस्या अपि सत्ताया अभावेन उक्तबाधलक्षणाभावात् मिथ्यात्वाभाववदसति बाधस्यैव अभावादसद्विलक्षणत्वं असङ्गतमेव।**

**एवमिति** "असत् न मिथ्या" इति ज्ञानं प्रकृतानुमितिप्रतिबन्धकं, तदज्ञानं प्रकृतानुमितिजनकं । असन्मिथ्या न इति बाधात् तदज्ञानस्य नाशे प्रकृतानुमितिर्नोत्पद्यते इति वक्तव्यम् । असदावरकाज्ञानस्याद्वैतिभिरनभ्युपगतत्वेनोक्ताज्ञानस्यैव अभावे कथं तन्नाशकता, कथंतरां च तदवच्छेदकरूपं वा इति बाधाभावेन, तद्वारकविशेषणं व्यर्थम् । प्रतिवादिरीत्या तु असत एव मिथ्यात्वेन बाधस्य अभावात् विशेषणं व्यर्थं इति भावः । **प्रतिभासिकेति** -- पर्वतो वन्हिमान् धूमादित्यत्रापि आरोपितवन्ह्यभाववत्पर्वतस्य बाधत्वं स्यादित्यापत्तिः । प्रकृतपक्षसाध्यकानुमितिः पर्वतो वन्हिमान् इत्याकारिका । तन्निष्टप्रतिबध्यतानिरूपिताप्रतिबन्धकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना (प्रतिभासिक)वन्ह्यभाववत्पर्वतत्वावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वं

(प्रतिभासिक)वन्ह्यभाववत्पर्वतत्वावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वं तद्रूपावच्छिन्नत्वं तत्रास्तीत्यतिव्याप्तिः। स्वसमानसत्ताकत्वस्येति । स्वसमान-सत्ताकाभावघटितत्वस्येत्यर्थः। स्वपदमत्र बाधत्वाभिमतपरम् । तथाच्च वन्ह्य-भाववत्पर्वतादेर्बाधत्वापत्तिवारणार्थं प्रकृतपक्षविशेष्यकसाध्यप्रकारकानुमि-तिप्रतिबन्धकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना धर्मिसत्तासमानसत्ताका-भावघटिततद्रूपावच्छिन्नत्वं बाधलक्षणमिति उक्तं भवति । व्यावहारिकपर्वत सत्तासमानसत्ताकत्वाभावात् प्रातिभासिकवन्ह्यभावस्य नातिव्याप्तिः।

ननु प्रातिभासिकवन्ह्यभाववत्ताज्ञान व्यावहारिकवन्हिमत्ताज्ञानयोरसम-सत्ताकविषयकतया, प्रातिभासिकवन्ह्यभावस्य व्यावहारिकवन्हिना विरोधाभा-वेन बाध्य बाधकभावासंभवेनोक्तवन्ह्यभाववत्पर्वतस्य बाधत्वपत्तिः सुलभवारणा इति चेन्न। तथासति ह्रदे सिषाधयितप्रातिभासिकवन्हिना बाधज्ञानविषयीभू-तव्यावहारिकवन्ह्यभावस्यापि विरोधाभावेन वन्ह्यभाववद्ह्रदस्याप्य बाधत्वा-पत्तिः। न च ह्रदो वन्हिमान् इति भ्रमे विषयस्य प्रातिभासिकस्यापि वन्हेः व्याव-हारिकत्वेन गृहीतत्वात् समसत्ताकत्वेन गृहीतयोर्विरोधाङ्गीकारेण नोक्तापात्ति-रिति वाच्यम् । प्रकृतेपि प्रतिभासिकस्य वन्ह्यभावस्य व्यावहारिकत्वेन गृहीतत्वात् विरोधस्य सुसंपाद्यत्वात्। इदं चप्रातिभासिकस्यभ्रमाधिष्ठानत्वानङ्गी-कारपक्षे तदङ्गीकारे तु अनुमितित्वाभिमतः पक्षः यादृश सत्ताकत्वेन गृहीतः तादृशसत्ताकाभावघटितत्वं तद्रूपे विशेषणीयम्। तेन रजते सत्यत्वे सिषाधयिषिते व्यावहारिकसत्यत्वाभाव (मिथ्यात्व) वद्रजतस्याबाधत्वानापत्तिः। तथा-चास्मन्मतरीत्या सत्यत्वे साध्ये असति बाधस्य संभवादसद्विलक्षणत्वविशेषणं सार्थकम्। अस्मन्मते प्रातिभासिकस्यैव असत्त्वात् । ननु "बाधलक्षणे यद्रूपे ब्रह्मान्यविषयकज्ञानाबाध्यत्वस्य, करणसंसर्गिदोषाप्रयुक्तत्वस्य वा निवेशेनोक्त-वन्ह्यभावव्यावृत्तिः संभवति । प्रातिभासिकवन्ह्यभावादेरुक्तविशेषणा-नाक्रान्तत्वादिति" चेत्तदसत् । प्रागुक्तरीत्या अहं ब्रह्म घटो विनाशीति ब्रह्मान्य-विषयकब्रह्मज्ञानबाध्यत्वात् व्यावहारिकवन्ह्यभावस्यापीति बाधसामान्योच्छेदा-पत्तेः । मिथ्यात्वाभाववत् असत् इति विकल्पस्यापि त्वद्रीत्याऽविद्यादिदोषप्रयुक्तत्वेन करणसंसर्गिदोषप्रयुक्तत्वादेः निवेशनार्हत्वस्य प्रागेवोपपादितत्वेन प्रकृते बाधाप्रसक्तेश्च । ननु निर्वन्हिः पर्वतो वह्निमानित्यादौ बाधे प्रतिबन्धकताघटितलक्षणस्यानुमित्यप्रसिद्ध्याऽसंभवेन यादृशपक्षसाध्यके यावन्तो दोषाः संभवन्ति तावदन्यतमत्वं हेत्वाभाससामान्यलक्षणमित्युक्तरीत्या साध्याभाववत्पक्षवृत्तिसाध्याभावपक्षवृत्त्यभावप्रतियोगिसाध्यान्यतमत्वस्य प्रतियोग्यन्यूनसत्ताकाभावघटितस्य बाधलक्षणत्वान्न कस्यापि दोषस्य प्रसक्तिः। तस्मादसतिबाधवारणाय सत्तातादात्म्यविशेषणमावश्यकम् इति चेन्नैवम्।

अभावस्य स्वप्रतियोगिना साकं विराधाङ्गीकारेण, ताभ्यां च समसत्ताकाभ्यामेव भवितव्यमिति प्रातिभासिकवन्ह्यभावस्यापि स्वप्रतियोग्यन्यूनसत्ताकत्वेन बाधत्वापत्तेर्दुर्वारित्वात् ।शशविषाणाभाववद् , हिमालयस्याबाधत्वापत्तेर्न साध्यान्यूनसत्ताकत्वमपि निवेश्यम् । न च तत्र प्रतीतमनिर्वचनीयमिति न दोष इति वाच्यम् । तथासतीहापि शशविषाणं मिथ्या इत्यस्य अबाधितत्वेनोक्तविशेषणवैय्यर्थ्यानिस्तारात् । अधिकंत्वितरत्रावसेयम्।

**एवं ब्रह्मान्यत्वविशेषणमपि असङ्गतमेव । ब्रह्मण्यपि ब्रह्मघटोभय भेदमादाय ब्रह्मन्यत्वस्य संभवेन बाधः ।ब्रह्मत्वावच्छिन्न प्रतियोगिताक भेदवत्वरूपब्रह्मान्यत्वस्य विवक्षायामपि, ब्रह्मत्वेन घटो नेति प्रतीतिसिद्धभेदमादाय ब्रह्मणि बाधः । ब्रह्मत्वावच्छिन्नब्रह्मनिष्टप्रतियोगिताक भेदवत्वरूपब्रह्मान्यत्वविवक्षायामपि ब्रह्मत्वेन ब्रह्मघटोभयंनेतिप्रतीतिसिद्धब्रह्मान्यत्वमादाय ब्रह्मणि बाधो दुर्वार एव । ब्रह्मत्वनिष्ठनिरवच्छिन्ना वच्छेदकताकप्रतियोगिताकभेदनिवेशेऽपि , ब्रह्मान्यत्वस्यारोपितस्य ब्रह्मण्यपि संभवेन बाधो दुर्वारएव । अनारोपितत्वस्यनिवेशो न संभवति अद्वैतिसिद्धान्तविरोधादिति पूर्वं उक्तमेव इति । एवमपि शुक्तिरूप्ये ब्रह्मप्रमान्याबाध्यत्वं वर्ततएव । कथमित्युक्ते, समानाधिकरणप्रतीतौ सर्वत्र भेदाभेदोभयभानं वदतां अद्वैतिनां मते, शुक्तिरूप्यं ब्रह्मप्रमाबाध्यं इति समानाधिकरणप्रतीत्या शुक्तिरूप्ये ब्रह्मप्रमान्यबाध्यभेदस्यापि संभवेन ब्रह्मप्रमान्याबाध्यत्वं प्राप्तमेव । एवं शशविषाणं असदिति समानाधिकरणप्रतीत्या, शशविषाणे असद्भिन्नत्वरूपं असद्विलक्षणत्वं प्राप्तमेवेति असति बाधः । एवं ब्रह्म सदिति समानाधिकरणप्रतीत्या ब्रह्मान्यत्वस्य ब्रह्मणि संभवेन ब्रह्मणि बाधश्चेति। तस्मात् पक्षतावच्छेदकशरीरघटकीभूतविशेषणत्रयं असङ्गतमेव।**

**एवं शशविषाणमिति** — असतः सद्वै लक्षण्यज्ञानाय वा असद्वै लक्षण्य ज्ञानाय वा प्रसक्तेरावश्यकत्वेन उक्तप्रतीतेः प्रसिद्धत्वात् । असत् सद्विलक्षणं इति सामानाधिकरण्यप्रतीतौ असति सद्विलक्षणभेदसद्विलक्षणाभेदयोः भानाङ्गीकारेण सद्विलक्षणभेदरूपस्य असद्वैलक्षण्यस्य अनया प्रतीत्या प्राप्तत्वाद्बाधः दुर्वार इति भावः।

श्रीः

**श्रीन्यायामृतसारस्य सङ्ग्रहः क्रियते मया।**
**आचार्यानुग्रहप्राप्त्यै बुद्धिशुद्ध्यै सतां विदे (मुदे) ॥१॥**

**अद्वैतसिद्धिसारस्थासांगत्यं च प्रदर्श्यते।**
**लेशेन बालबोधार्थं कृपया साधुसद्गुरोः ॥२॥**

एतावता प्रबन्धेन परोक्त विश्वमिथ्यात्वानुमाने ब्रह्मप्रमान्येत्यादिपक्षतावच्छेदकविशेषणानामसार्थक्यं समर्थ्य संप्रत्यद्वैतसिद्धिसाराख्यग्रन्थस्य सदानन्दव्यासप्रणीतस्य खण्डनं कर्तुकामः श्रीविश्वप्रियमध्वनाथश्रीचरणः पद्यरूपेण श्रीन्यायामृतसङ्ग्रहं प्रतिजानीते **श्रीन्यायामृतसारस्येति**।

अविदितन्यायामृतसारस्याद्वैतसिद्धिसारात् सशंयो जयेतेत्यतो न्यायामृतसारस्य सङ्ग्रहो मया क्रियत इत्यर्थः । तथाद्वैतसिद्धौ, लघुगुरुचन्द्रिकयोः सिद्धिव्याख्यायामद्वैतसिद्धिसारे,वा प्रयुक्ता दूषणाभासा मूले न्यायामृत एव परिहृता इति भावः। अन्यथाद्वैतसिसारखण्डनं क्रियत इत्येवावक्ष्यत्। न्यायामृतस्य सारः पूर्वाचार्यैरेव प्रकटीकृतः तस्यायं संङ्ग्रह इत्येषां हृदयम् । स्वयं न्यायामृतविशेषणीकृतं श्रीकरत्वं व्याख्याति **आचार्येति**। **अद्वैतेति** बाला अप्यतसिद्धिसारस्थासांगत्यं यथा जनीयुः तथा प्रदर्श्यते मयेत्यर्थः। चो ऽन्यसमुच्चायकः। श्रुतिविरोधादिश्च प्रदर्श्यत इत्यर्थः। उक्तसमुच्चायको वा। तथा चाद्वैतसिद्धिसारस्थासाङ्गत्यमाचार्यानुग्रहप्राप्त्यै, बुद्धिशुद्ध्यै सतां विदे च प्रदर्श्यत इति फलसमुच्चयः। न्यायामृतसारसङ्ग्रहो ऽद्वैतसिद्धिसारासाङ्गत्यं चेति कर्मसमुच्चयश्च । क्रियते प्रदर्श्यते चेति क्रियासमुच्चयः। **साधुसद्गुरोः** कृपयेति प्रदर्शने करणोक्तिः।

**लेशेनेति** बालबोधार्थत्वे हेतुः । अनतिविस्तरेणेत्यर्थः । साधुसद्गुरोः सतां गुरुः सद्गुरुः। साधुश्चासौ सद्गुरुश्चेति श्रीमदानन्दतीर्थभगवत्पादाचार्यः विवक्षितः। साधुत्वं अज्ञान,ज्ञानतिरोधानादि दोषविधुरत्वम्।

**असत्प्रातीतिकान्यत्वात् प्रमाणविषयत्वतः ।**
**अर्थ क्रियाकारितादे र्विश्वं सत्यं मृ षा न हि ॥३॥**

अद्वैतिभिः प्राधान्येन विश्वमिथ्यात्वसाधनेऽनुमानस्यैव प्रयुक्तत्वाद्विश्वसत्यत्वसाधकमनुमानं तावत्प्रथममेवाह **असत्प्रातीतिकान्यत्वादिति** । अयमत्र प्रयोगः । ब्रह्मप्रमान्येन वा वेदान्ततात्पर्यप्रमाजन्यज्ञानान्येन वा मोक्षहेतुंज्ञानान्येन वाऽबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यद्विमतं विश्वं सत्यं वा पारमार्थिकसत्यं वा प्रातिभासिकत्वानधिकरणत्वे सति असत्त्वानधिकरणत्वात् (असत्प्रातिभासिकान्यत्वात्) अनिषेध्यत्वेन प्रमां प्रति साक्षाद्विषयत्वात्,अनिषेध्यत्वेन ईश्वरं प्रति साक्षादपरोक्षत्वात् (प्रमाणविषयत्वतः) सप्रकारकाबाध्यार्थक्रियाकारित्वात्, आरोपितमिथ्यात्वकत्वात् ( आदि ) कल्पकरहितत्वाच्च आत्मवत् ॥ असत् शशविषाणादि । प्रातीतिकं प्रातिभासिकं । प्रमाणं प्रमा । अर्थक्रियाकारित्वं अर्थे वस्तुनि अर्थस्य वा क्रिया कृतिः । साक्षात्कारेच्छादीनां उपलक्षणतया ग्रहणम् । तां करोति संपादयति, जनयतीति वा अर्थक्रियाकारि । तस्य भावः । तथा च वस्तुसंबन्धिकृतिहेतुत्वमिति पर्यवस्यति । नह्यसत् शुक्तिरजतादि स्थाल्यादिरूपतया परिणामरूपक्रियायां हेतुर्भवति । अत ईदृशपरिणामसंयोगादि क्रियाहेतुत्वं सत्त्वेन व्याप्तम् । यद्यपि विश्वं सत्यमित्यनेनैव प्रतिज्ञा पूर्यते तथापि "**मृषा न हि**" इति विधेयांशे मिथ्यात्वसामानाधिकरण्यव्यवच्छेदार्थम् । परैर्मिथ्यात्वसहचरितस्यापि व्यावहारिकसत्यत्वस्याभ्युपगमान्न पौनरुक्त्यम् । "हि" इति श्रुतिप्रत्यक्षानुकूलतर्कसहकारेणानुमानस्य निर्दुष्टत्वं सूचयति । अत्र परेणोक्ता व्यभिचारादयो दोषाः उतरत्र निराकरिष्यन्ते ॥

**पू । प । - जगन्मिथ्यास्ति दृश्यत्वाज्जडत्वादविभुत्वतः ।**
**[1]सत्त्वा सत्त्वगिरावक्तुं अशक्यं तत्खवर्णवत् ।**

---

[1] लटि सत्त्वप्रकारकशाब्दप्रमित्यविषयत्वेसतिअसत्त्वप्रकारकशाब्दप्रमित्यविषयत्वमितितच्छ्लोकलभ्यं प्रथमलक्षणम् ।

**सिद्धान्तः - सदानन्दविदेत्युक्तं यत्तद्ग्राह्यं न सूरिभिः।**
**न्यायामृतोक्तमाच्छाद्य दोषो नेति प्रतारितम् ॥४॥**

**अविभुत्वतः** इति । परिच्छिन्नत्वादित्यर्थः खं आकाशंम् । तद्वर्णः रूपं नैल्यादि। तद्यथा मिथ्या तथेत्यर्थः। मिथ्यात्वं सामान्यतो लक्षयति **सत्त्वासत्त्वेति।**

**सदानन्दविदेति** इति यत्सदानन्दविदोक्तं तत् सूरिभिर्न ग्राह्यम् । यतः न्यायामृतोक्तमाच्छाद्य, न दोषोऽस्तीति प्रतारितं वञ्चनं कृतं, तस्मात् सूरिभिर्न ग्राह्यमिति भावः।

**परपक्षे तु मिथ्यात्वं दुर्निरूपं प्रदर्शितम्।**
**स्वपक्षे यत्तु सत्यत्वं तद्ग्राह्यं सूरिभिः सुखम् ॥ ५ ॥**

कुतो वा प्रतारणमित्यत आह **परपक्ष इति** । अद्वैतिरीत्यापि मिथ्यात्वं पञ्चधा विकल्प्य मूले खण्डितत्वान्मिथ्यात्वं दुर्निरूपं लक्षयितुमशक्यमिति तत्र मूलकारैरेव प्रदर्शितम्। तदाच्छाद्य, नात्र दोष इति वदन् प्रतारक इत्यर्थः। यद्वा अद्वैतसिद्धिसारे सत्त्वासत्त्वगिरा वक्तुमशक्यमिति मिथ्यात्वं दुर्निरूपमिति प्रदर्शितम्, तेनैव पुनः मिथ्यात्वस्य लक्षणमुक्तमिति "दोषो नेति" च प्रदर्शितम्। अतस्तत्प्रतारणम् । यतः दुर्निरूपत्वमुक्त्वा पुनस्तन्निरूपणे प्रयतितम् । सत्वा-सत्वान्यतरगिरावक्तुं शक्यत्वं हि निरूप्यत्वम्। एवं वक्तुमशक्यं मिथ्यात्वं दुर्निरू-पम्। पुनस्तन्निरुपणे व्याघातः इति । अथ वा यतो न्यायामृतोक्तं दोषमाच्छाद्य विषयान्तरानुसारेण दोषो नेत्युक्तमतस्तत् प्रतारणम् । अथ वा परपक्षे , सदा-नन्दविदा यद्यदुक्तं तत्तत्सर्वं तेनैव दुर्निरूपं अतः तत्सर्वं सूरिभिर्न ग्राह्यमिति मूले प्रदर्शितमिदानीं मया प्रदर्श्यत इत्यर्थः। तु इत्येतावदुक्तं सदानन्दविदा सर्वं तत् कुत्सितमित्यस्वारस्यमाह। तथा हि -

" ब्रह्मात्मैक्यं प्रमेयं यत् वेदान्तानामशेषतः।
दुर्ज्ञेयं तद्विना दृश्यमार्जनं तत्वबोधतः" । २-३ ॥ (अ सि सारे)

तत्वज्ञानजन्यदृश्यमार्जनं विना वेदान्तदजन्यप्रमाविषयः ब्रह्मात्मैकभावो न ज्ञेय इति श्लोकार्थः । दृश्यमार्जनं अविद्यातत्कार्यनाशः । तथा च तत्वज्ञानात् दृश्यनाशः । तस्माद्ब्रह्मात्मैक्यज्ञानमिति पर्यवसितोऽर्थः इति । इदं च स्वमतविरूद्धम् । ब्रह्मात्मैक्यज्ञानस्यैव स्वमते तत्वज्ञानत्वेन दृश्यनाशकत्वादन्योन्याश्रयात् । किञ्च मार्जनं नाम ध्वंसो वा ? अत्यन्ताभावोवा ? । नाद्यः । भवन्मते तस्य दृश्यस्य मिथ्यात्वेन त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारात् । न द्वितीयः । तत्वबोधजन्यत्वायोगात् ।

द्वैतमिथ्यात्वसिद्धेर्हि ब्रह्मात्मैक्यं प्रसिध्यति ।
ततो द्वैतस्य मिथ्यात्वमुपपाद्यं तदादितः ॥ १- ५ ॥

तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिपूर्वकत्वात् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम् इति सिद्ध्युक्त एवास्याप्यर्थः । इदमपि न सङ्गतम् । द्वैताभावातिरिक्तब्रह्मात्मैक्यस्य द्वैतधीपूर्वकत्वेऽतिप्रसङ्गात्, द्वैताभावरूपत्वावश्यकतया द्वैताभावज्ञानं प्रत्यस्तित्वप्रकारकद्वैतप्रसक्तेः अपि प्रयोजकत्वसंभवेन तन्मिथ्यात्वधियोऽप्रयोजकत्वाद्वैय्यर्थ्यात् । न हि कुत्रापि घटाभावज्ञानं प्रति घट ?[1] मिथ्यात्वज्ञानं प्रयोजकतयाऽनुभवारूढम् । भूतले घटो, नास्तीति श्रृण्वन् नैव घटमिथ्यात्वावगाहिज्ञानवानेव दृष्टचरो जगति । अन्यथा प्रामाणिकस्यैवाऽत्यन्ताभावप्रतियोगित्वमभ्युपगच्छतःतार्किकस्याभावधीरेव नोत्पद्येत ।

किञ्च द्वैताभावबुद्धिं प्रति द्वैतमिथ्यात्वज्ञानस्य यदि प्रयोजकत्वं तर्हि मिथ्यात्वस्य त्रैकालिकद्वैताभावप्रतियोगित्वरूपस्य ज्ञानार्थं द्वैताभावज्ञानस्यावश्यकतया, तस्य द्वैतमिथ्यात्वधीपूर्वकत्वेऽन्योन्याश्रय आपद्येत । अपि च द्वैतस्य सविकल्पकबाधाभावात् व्यावहारिकत्वस्य अङ्गीकर्तव्यत्वेन

---

1 अभावप्रतियोगिनोवस्तुतोमियात्वेधपिताद्धियोऽभावज्ञानेऽप्रयोजकत्वात् ।

ब्रह्मप्रमामात्रबाध्यत्वान्निर्विकल्पकैक्यसाक्षात्कारेणैव प्रपञ्चबाधोक्त्या द्वैतस्य मिथ्यात्वंब्रह्मात्मैक्यबुद्ध्यधीनमितिद्वैतमिथ्यात्वस्यैवब्रह्मात्मैक्यसिद्धिपूर्वकत्वमापतितमिति भवन्मनोरथविरोधः। न च द्वितीयाभावविशिष्टब्रह्मज्ञाने तु विशेषणमुद्रया तद्धियः द्वारत्वं सूपपादमिति वाच्यम् । बाधानुत्पत्तौ द्वितीयमिथ्यात्वासिद्ध्या उक्तविशिष्टस्यैवासंभवात् । अन्यथा आरोप्याभावविशिष्टाधिष्ठानज्ञानस्य बाधत्वे तत्पूर्वमप्यारोप्यमिथ्यात्वसिद्ध्यापत्तेः । तथा चाधिष्ठानज्ञानस्याबाधत्वापत्तिः ॥ एवं जगन्मिथ्यास्ति इत्युक्तमपि सूरिभिर्न ग्राह्यमिति भावः । मिथ्यात्वसमानाधिकरणस्य व्यावहारिकसत्त्वादिरूपस्यास्तित्वस्याद्याप्यसिद्धेः, मिथ्यास्ति इति व्याहतेः। तथा हि अस्याः प्रतिज्ञायाः प्रमात्वे मिथ्याभूतस्य, अस्तित्वस्य च सत्यत्वापत्या व्याहतिः। तस्याः भ्रमत्वे च तत्साधकस्याभासहेतुत्वेनाप्रामाण्यात्। यदि जगन्मिथ्या इत्येव प्रतिज्ञा तर्हि अस्तिपदस्यानन्वयात् वृथात्वम् । सत्त्वासत्त्वगिरा वक्तुमशक्यं तदिति जगन्मिथ्यात्वं लिलक्षयिषतः, जगदस्तीतिप्रलपतश्च ते द्रढयितं मूकोऽहमितिब्रुवत्सहोदरत्वम्। एवमादयोऽनेके दोषास्तत्र तत्र यथासंभवं प्रदर्शयिष्यन्ते। एवं परपक्षीयमिथ्यात्व - स्याग्राह्यत्वं समर्थ्य, स्वपक्षेऽभिमतसत्यत्वस्य ग्राह्यतामाह स्वपक्ष इति॥ ५ ॥

**त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता ।**
**सत्तोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी ॥६॥**

स्वपक्षे सत्यत्वलक्षणं न्यायामृतोक्तमेवाह **त्रिकालेति** । सर्वदेशीयः सर्वदेशवृत्तिः यः अत्यन्ताभावः तदप्रतियोगित्वं सत्यत्वम् । अध्यस्तं आरोपितं शुक्तिरूप्यादि, तुच्छं शशविषाणादि । ते तादृशाभावप्रतियोगिनी प्रतियोगित्ववती ।६।

**सत्त्वासत्त्वानाश्रयत्वं मिथ्यात्वं यदि ब्रह्मणि ।**
**निर्धर्मकेत्वतिव्याप्तं त्रैकालिकनिषेध्यता ॥७॥**

परोक्तमिथ्यात्वं संक्षेपतः निराकरोति **सत्त्वासत्त्वेति** । ननु सत्त्वप्रकारकप्रतीत्यविषयत्वे सति असत्त्वप्रकारक प्रतीत्यविषयत्वं मिथ्यात्वलक्षणमुक्तं

सत्त्वासत्त्वगिरा इत्यादिना ।इदानीं लक्षणान्तरस्यातिव्याप्तिरुच्यत इत्यत आह **यदीति** । तथा चासतोपि सर्वथा प्रमाभ्रमाविषयत्वेनोक्तलक्षणसङ्गत्या तिव्याप्तिवारणाय यदि सत्त्वासत्त्वगिरेत्यस्य सत्त्वाभावासत्त्वाभावपरतयार्थः क्रियत इत्यर्थः । तर्हीति शेषः ।

**निर्धर्मकि तु** इति । तुशब्दः अप्यर्थः । अतिव्याप्तिरपीत्यर्थः । ब्रह्मणि निर्धर्मकत्वेन सत्त्वासत्त्वे न स्त इति तदभाववत्वम् । एतल्लक्षणे अपिना व्याघातादयं दोषा अपि सन्तीति सूचितम् ।

अत्र सत्त्वं सार्वकालिकसार्वदेशिकाभावाप्रतियोगित्वं (अबाध्यत्वं) तदभावः असत्त्वमिति न्यायामृतकाराणां हृदयम् । तथा च यदि सत्त्वानाश्रयत्व मुच्यते तदा असत्त्वात् तदनाश्रयत्वोक्तौ व्याघातः । यद्यसत्त्वानाश्रयत्वमुच्यते तदा तस्य सत्त्वात् तदनाश्रयत्वोक्तौ व्याहतिः ॥

अत्राहुरद्वैतवादिनः । सत्त्वासत्त्वानाश्रयत्वोक्तावपि न व्याहतिः । तथा हि यत्र विरुद्धयोर्धर्मयोरेकत्र समावेशप्रसङ्गस्तत्रैव व्याहतेरप्यवकाशः । नात्र तादृशप्रसङ्गो दृश्यते । सत्त्वासत्त्वयोर्हि विरोधः न परस्परविरहरूपतया, परस्परविरहव्यापकतया वा, येनोक्तव्याहतिः स्यात् । सत्त्वाभावस्य असत्त्वात्मकत्वाभावात्, असत्त्वाभावस्यापि सत्त्वात्मकत्वाभावात् । सत्त्वस्य, सत्त्वाभावस्य च असत्त्वस्य असत्त्वाभावस्य चैकत्रसमावेशस्याभावान्नविरुद्धधर्मसमावेशप्रयुक्तो व्याघातः । यथा गोत्वाश्वत्वे विरुद्धे अपि सास्नादिमत्वरूपगोत्वप्रतियोगिकाभावस्य, एकशफत्वादिमत्वरूपाश्वत्वप्रतियोगिकाभावस्य चउष्ट्रादौ समानाश्रयत्वानुभवः । तथा सत्त्वासत्त्वेविरुद्धे अपि अबाध्यत्वरूपसत्त्वप्रतियोगिकाभावस्य, क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासत्त्वप्रतियोगिकाभावस्य च शुक्तिरूप्ये समावेशसंभवात् सत्त्वाभावासत्त्वाभावयोरविरोधान्न व्याहतिरिति । सत्त्वाभाव वति शुक्तिरूप्ये उक्तासत्त्वस्याभावेन न सत्त्वासत्त्वयोः परस्परविरहव्यापकत्वमिति ।

तद्दुष्टम् ॥ सत्त्वासत्त्वयोः परस्परविरहात्मकत्वात् व्याहतेः सूपपादत्वात् । तथा हि त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वाभावस्तावत् सति ब्रह्मणि अविप्रतिपन्नः । तथा त्रैकालिकनिषेधप्रतियोगित्वं खलु तुच्छानिर्वाच्ययोः साधा-

रणमिति द्वैताद्वैतोभयमतेध्यभ्युपगतम् । उक्तं चाद्वैतसिद्धौ द्वितीयमिथ्यात्वनिरूपणावसरेश्त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोः साधारण "मिति । न्यायामृतेप्युक्तकारिकायामेतदङ्गीकृतम् । एवं सति त्रैकालिकनिषेधप्रतियोगित्वात्मकबाध्यत्वरूपासत्त्वस्य निषेधाप्रतियोगित्वात्मकाबाध्यत्वरूपसत्त्वाभावात्मकत्वादबाध्यत्वरूपसत्त्वस्य च बाध्यत्वरूपासत्त्वाभावात्मकत्वाच्च सिद्धैव परस्परविरहात्मकता । न चास्माभिः तुच्छमात्रमसत् अनिर्वाच्यं नासत् । तस्य क्वचित्सत्त्वेन प्रतीत्यर्हत्वादसत्वं तु क्वचिदपि सत्वेन प्रतीत्यनर्हत्वमिति तदभावात्मकता नाबाध्यत्वरूपसत्त्वस्येत्याद्युक्तमिति कथं तयोः परस्परविरहात्मकतेति वाच्यम् । नञः स्वसमभिव्याहृतपदार्थतदवच्छेदकान्यतरप्रतियोगिकनिषेधबोधकत्वस्वभावस्यानुभूतत्वेनाबाध्यत्वस्य सत्त्वरूपत्वे, बाध्यत्वस्यैवासत्वात्मकत्वस्य व्युत्पत्तिसिद्धत्वात्पारिभाषिकस्योक्तरूपस्य धर्मस्यासत्पदार्थत्वायोगात् । सत्त्वेन प्रतीत्यर्हत्वस्य पक्षतावच्छेदककोटिप्रविष्टस्य जगति सर्ववादिसिद्धत्वेन तत्साधनवैय्यर्थ्याच्च । जगतोऽसत्त्ववादिनापि बौद्धेनेदृशासत्त्वानङ्गीकारात्तद्रीत्या सिद्धसाधनस्य वक्ष्यमाणत्वाच्च । तस्मात् बाध्यत्वमेवासत्त्वं वक्तव्यम् । तथा च बाध्यत्वमसत्त्वम् अबाध्यत्वं सत्त्वमिति परस्परविरहात्मकताया निर्बाधत्वाद् व्याहत्युक्तिः समीचीनैव । असंभावितमेवेदं क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वम् । तथा हि - किमिदमसत् सर्वथाऽप्रतीयमानमिति सत्त्वेन न प्रतीयतेऽथवाऽसत्त्वेन प्रतीयमानमपि सत्त्वमात्रेण न प्रतीयते नाद्यः । तथाहि - किमयमेवं रूपोऽसाधारणधर्मः लक्षणत्वेनासत् ब्रह्मजगत्प्रातिभासिकेभ्यो व्यावर्तयतीत्युच्यते? उत न ?। नान्त्यः। अव्यावर्तकेन केनचिदपि धर्मेण कस्यचित्स्वरूपस्य निर्धारणायोगात् । नाद्यः । कस्यापि लक्षणस्य सर्वथाऽप्रतीयमान स्वलक्ष्यस्येतरेभ्योव्यावर्त्य प्रत्यायनसामर्थ्यासंभवात् । "असत् क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानमि" ति लक्षणप्रत्ययस्य वाऽसतो विषयत्वात् मूकोऽहमितिवद् व्याहतिः स्यादेव । न द्वितीयः। असत्त्वेन प्रतीतिं प्रति सत्त्वेन प्रतीतेर्द्वारत्वात् । अपि च येन पुंसा शशशृङ्गाभावो न निश्चितः, तस्य गोशृङ्गमस्तीति वाक्यादिव शशशृङ्गमस्तीति वाक्यादपि सत्त्वेन प्रतीतिसंभवेनासतोपि सत्वेन प्रतीयमानत्वं निर्बाधम्[1]

। तु इत्यवधारणार्थो वा । तेनातिव्याप्तिर्भवत्येवेत्यर्थः । तेन "सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावानधिकरणत्वात्,निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वाच्च इति

सिद्ध्युक्तावस्वारस्यं सूचितं भवति। तथा हि सत्ववति ब्रह्मणि यदि सत्वाभावासत्वाभावोभयधर्मानधिकरणत्वं तदा सत्वोपहितस्य सत्वविशिष्टस्य वा त्वन्मते मिथ्यात्वादुक्तसत्वाभावासत्वाभावधर्मद्वयानधिकरणत्वेऽव्याप्तिः। शुद्धं च सत्वेनाप्यविशिष्टमेवेत्यतिव्याप्तिश्च स्यादेव । यदुक्तं निर्धर्मकत्वादेवाभावरूपधर्मद्वयस्याप्यभावेन नातिव्याप्तिरिति तदपि कुत्सितम् । अभावरूपधर्मद्वयाभावस्य शुद्धेऽङ्गीकर्तव्यत्वात् । अन्यथानवस्थापत्तेः । तथा च ब्रह्मणि मिथ्यात्वाभावरूपसत्यत्वं न ज्ञायेत । व्याघातस्योक्तत्वाच्च । "सत्यं ज्ञानमनन्तमिति" श्रुतिविरोधपरिहाराय मिथ्यात्वाभावरूपधर्मस्य शुद्धेऽभ्युपगमात् स्ववचनक्रियाविरोधात्।

यद्वा यदि मूलोक्तदिशा व्याघातस्य परिहारार्थमसत्वादिकमन्यथा परिष्क्रियते तदाऽतिव्याप्तिः स्यादित्यर्थः। असत्त्वं यदि क्वचिदप्युपाधौ सत्वेन प्रतीत्यनर्हत्वमित्युच्यते तर्हि ब्रह्मण्यतिव्याप्तिः । तस्याप्यदृश्यत्वेन प्रतीतिसामान्यानर्हत्वात्। यदि चाबाध्यत्वं सत्वे तदपि "नासत्त्वस्यास्तिबाधकम्" इति भवत्प्राचीनोक्तेरसति अतिव्याप्तिः। न च क्वचिदप्युपाधौ सत्वेन प्रतीत्यनर्हत्वविशिष्टत्रैकालिक निषेधप्रतियोगित्वमत्यन्तासत्वम् । प्रपञ्चे विशेषणाभावेन ब्रह्मणि तु विशेष्याभावेन च नासत्वमिति तात्पर्यमिति कथं ब्रह्मण्यतिव्याप्तिः इति वाच्यम् (सौगन्ध्यविमर्शः) पुट-२३० सत्त्वेन प्रसक्त्यनर्हस्यानारोपितस्य निषेधायोगाद्विशिष्टलक्षणस्यासंभावितत्वात् । अन्यथा प्रतीत्यनर्हस्य ब्रह्मणोऽपि निषेध्यत्वसंभवेनातिव्याप्तेर्दुष्परिहरत्वात्। न च तवापि ब्रह्म निषेध्यत्वेन सिद्धमेवेति कथमेवमिति प्रष्टव्यम्। मन्मते घटादौ निषेधविरोधित्वेन सिद्धस्य सत्वप्रमितिविषयत्वस्य ब्रह्मण्यङ्गीकारात्। त्वन्मते तु ब्रह्मेतरस्मिन् कुत्रापि सद्रूपत्वस्यसत्त्वस्य वा निषेधविरोधितयाऽनुपलंभात्तस्यानिषेध्यत्वनियामकत्वासंभवात्। केवलाङ्गीकारस्यासाधकत्वात्।

अपि चाभाससाम्यविचारेऽसद्विलक्षणत्वरूपहेतुः पक्षीभूतब्रह्मण्यसिद्ध इत्युक्तिरसङ्गता स्यात् । क्वचिदप्युपाधौ सत्वेन प्रतीयमानत्वरूपासद्वैलक्षण्यस्य, ब्रह्मण्यभावेप्युक्तविशिष्टाप्रतियोगित्वरूपासत्प्रतियोगिकभेदस्य सुगमत्वात्।

अन्यच्च, एवंसति सत्त्वासत्त्वयोः परस्पर विरहरूपतया वा परस्परविरहव्यापकतया वा विरोधात् व्याघातः दुःष्परिहरः अङ्गीकृतः स्यात् । एवं सत्त्वेन प्रतीत्यर्हत्वमेव सत्त्वं स्यात् । ततश्च ब्रह्मण्यपि ईदृशमेव सत्त्वं स्यात् । नत्वबाध्यत्वरूपं सत्वमिति स्यात् ।

**प्रतीते स्वाश्रये तच्चेदत्यंतासत्त्वमापतेत् ।**

**तच्च स्वरूपतो नैव त्वन्मते शुक्तिरूप्यके ॥८॥**

द्वितीयमिथ्यात्वलक्षणं दूषयति **त्रैकालिकनिषेध्यतेति** । **प्रतीत इति** प्रतिपन्नोपाधिवृत्तित्रैकालिकात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति लक्षणकरणेऽसत्यतिव्याप्तिरिति भावः । तथा च विश्वं मिथ्या इत्यनुमानेन तु व्यावहारिकसतो जगत एवोद्देश्यत्वेन मिथ्यात्वरूपसाध्यस्यासत्त्वे पर्यवसानादर्थान्तरता । असद्विलक्षणं विश्वं मिथ्येत्यनुमितेरसत्वप्रकारकत्वेनाहार्यतापत्तिश्च । शशविषाणरूपासतः अभावस्य केवलान्वयित्वेन प्रतिपन्नोपाधावपि सत्त्वे बाधकाभावेन तत्प्रतियोगित्वमसतोऽस्तीति अत्यन्तासत्वमेवोक्तमिथ्यात्वं भवति । न च शशविषाणस्य प्रतिपत्तेरेवाभावेन कथं प्रतिपत्तिविशेष्यवृप्यभाव प्रतियोगित्वमसत इति वाच्यम् । सत्त्वप्रकारकप्रमाभावेप्यसत्त्वप्रकारकप्रमायाः सत्वभ्रमस्य च संभवात् । अन्यथाऽसदप्रतिपन्नमिति प्रतिपत्तेरप्यभावप्रसङ्गात् । शशविषाणवदिदमिति शब्दाभासजन्यासत्प्रकारकधीविशेष्यताधिकरणे क्वचिद्वर्तमानशशविषाणात्यन्ताभावप्रतियोगित्वाज्जगच्छुक्ति रूप्यादेरप्यत्यन्तासत्वापत्तिर्दुर्वारैवेति भावः । न चेदृशशब्दाभासप्रसक्तस्यानिर्वचनीयत्वमेवास्मन्मतं नत्वसत्वमतो नासतः प्रतीतिरितिवाच्यम् । तथात्वेऽसदभिमतानां यावतामप्यनिर्वचनीयत्वसंभवादसच्चेन्नप्रतीयेतेत्युक्तं व्यर्थस्यात् । अत्राहकश्चित् "उक्ताबाध्यत्वरूपसत्व विरहात्मकत्वानङ्गीकारादसत्वस्य। "अत एव प्रतिपन्नोपाधौसंसृष्टत्वेन प्रतीतत्वमात्रं तन्त्रं न तु प्रमाणाप्रातिपन्नत्वम् । गौरवात् । एवं चासन्नृशृङ्गादेरपि विशेषादर्शनदशायां "मृगकर्णं प्रविश्य गजो गर्जती" त्यादि शब्दाभासेन गजस्यमृगकर्णसंसृष्टत्वेन इव हिमालये नृशृङ्गादिकमस्तीति शब्दाभासेन नृशृङ्गादेर्हिमालयादि संसृष्टत्वेन प्रतीतिसद्भावात्प्रतिपन्नोपाधिकत्वमङ्गीकर्तव्यमिति

निरस्तम् । तथा प्रतीतस्य नृशृङ्गादेरनिर्वचनीयत्वं नासत्त्वरूपत्वम् । न च शब्दाभोसेनाभासरूपानिर्वचनीयनृशृङ्गाद्यन्यासन्नृशृङ्गादेःप्रतीत्यभावे ब्रह्मजगतो स्तद्वैलक्षम्यासिद्धिप्रसङ्गः , वैलक्षण्यसिद्धेः प्रतियोगिज्ञानहेतुकत्वादिति वाच्यम्। भवदभिमताभासासन्नृशृङ्गादेरेवास्माभिरनाभासानिर्वचनीयनृशृङ्गादि रूपत्वेनाङ्गीकारेण तदतिरिक्तस्यानाभासनृशृङ्गादेरभावेनानिर्वचनीयविशेषरूपस्यैव शब्देन प्रतीतौ प्रतियोगिज्ञानस्यापि वृत्तत्वेन ब्रह्मजगतोस्तद्वैलक्षण्यसिद्धेः । नचाभासासन्नृशृङ्गादेः प्रतीत्यभावे शब्दाभासेनाभासासन्नृशृङ्गादिकमेव प्रतीयते नत्वनाभासासन्नृशृङ्गादिकमिति भवदीयव्यवहार एवानुपपन्न इति वाच्यम् । अनाभासासन्नृशृङ्गादिकमिति भवदभिलापमात्रेण तस्य प्रतीतावस्मदीयस्य तथा व्यवहारस्योपपत्तेः । न च परोक्षस्थले भवतानिर्वचनीयार्थोत्पत्त्यस्वीकारादपसिद्धान्त इति वाच्यम् । तस्य पुरुषदोषत्वेन वस्तुदोषत्वाभावादि" त्यादि ।

तस्यायमाशयः । हिमालये नृशृङ्गमस्तीतिशब्दाभासजन्यसत्वप्रकारकप्रतीतिविषयस्य मृगकर्णसष्डास्य नृशृङ्गस्य नात्यन्तासत्वम् । किंतु अनिर्वचनीयत्वमेव । तथा चेदमुक्तं भवति । नृशृङ्गं त्रेधा विभक्तुं शक्यम् । १ आभासासन्नृशृङ्गम् । २ आभासानिर्वचनीय नृशृङ्गम् । ३ अनाभासानिर्वचनीयनृशृङ्गम् । इति । अनाभासासन्नृशृङ्गमिति तु नास्त्येव । तत्र प्रथमं तृतीयादभिन्नमेव । द्वितीयं तु उक्तशब्दाभासेन प्रतीयते । यदाऽऽभासानिर्वचनीयनृशृङ्गस्य प्रतीतिः तदा आभासासन्नृशृङ्गरूपमनाभासानि र्वचनीयनृशृङ्गमपि ज्ञायते । उभयोरप्यनिर्वचनीयनृशृङ्गत्वस्य साम्यात् । तथा सति प्रतियोगिभूतासन्नृशृङ्गस्य ज्ञातत्वात् तद्वैलक्षण्यं जगद्ब्रह्मणोरपि सिद्ध्यति । एवं तर्हि कथमाभासासन्नृशृङ्गं न प्रतीतमित्यादि व्यवहार उपपद्यत इति चेन्न । परकीयाभिलापमुपलभ्यैव ईदृशव्यवहारोपपत्तेरिति ।

तदेतदतीवासंबद्धम् । यदि हिमालये नृशृङ्गमस्तीति प्रतीत्या विषयीकृतं नृशृङ्गमनिर्वचनीयं स्यात्तदा तस्य सर्वथाऽप्रतीयमानात् आभासासन्नृशृङ्गरूपादनाभासानिर्वचनीयनृशृङ्गात् वैलक्षण्यं न सिद्ध्येत्, येन भवतः उक्तासतः अप्रतीतत्वमुपलभ्येत । नह्यनुयोगिज्ञानादेव प्रतियोग्यवगतिः शक्यसंभवा जगति । अत एवानिर्वचनीयविशेषरूपस्यैव शब्देन प्रतीतौ प्रतियोगिज्ञानस्यापि वृत्तत्वेन ब्रह्मजगतोस्तद्वैलक्षण्यसिद्धिरित्युक्तं प्रत्युक्तम् । न हि घटविशेषस्य नीलघटस्य प्रतीतौ पीतघटभेदः क्वचित्सिद्ध्यति ॥ उक्तप्रतीत्यविषयस्य

सर्वथाऽप्रतिपन्नस्यैवासतः किल भेदः ब्रह्मणि जगति प्रातिभासिके वा सिषाधयिषितः यदज्ञानं वैलक्षण्यसिद्धिं प्रतिबध्नाति। तथा चाप्रतीतत्ववैलक्षण्यसिद्धयोरन्यतरस्य हानिर्निश्चिता। न हि केनापि स्वस्थात्मना प्रमाणाभासेनाप्यविदितं भेदप्रतियोगितया साधयितुं शक्यते यच्चोक्तंभवदभिलापमात्रेण तस्य प्रतीतौ अस्मदीयव्यवहारोपपत्तिरिति। तन्न समीचीनम्। भवद्रीत्या अप्यस्मदभिलापस्याप्रमाणत्वेन शब्दाभासत्वेन तज्जनितस्य प्रत्ययस्य यद्याभासासन्नृशृङ्गमनाभासन्नृशृङ्गं वा न विषयः।, तर्हि कथं तव प्रतियोगिप्रसिद्धिः कथंतरां चासदैलक्षण्यसिद्धिः कथंतमां च तव व्यवहारोपपत्तिः। यदि तद्विषयत्वेनाङ्गीकृतं स्यात् कथं तस्य अप्रतीतत्वम् इति चोद्यासहत्वात्। तस्मात्प्रतिपन्नोपाधिसद्भावात् तद्वृत्ति निषेधप्रतियोगित्वस्यासत्त्वरूपत्वेन शुक्तिरूप्यादेरपि असत्त्वेनोक्तदोषतादवस्थ्यमेवेत्यभिप्रेत्य निष्कर्षमेवाह **अत्यन्तासत्त्वमापतेदिति**। अन्यथाऽसति अतिव्याप्तिरित्येवावक्ष्यत्।

किञ्च परोक्षस्थलऽनिर्वचनीयोत्पत्त्यस्वीकारादपसिद्धान्तं परिहर्तुं वस्तुदोषत्वाभावादित्युक्तम्। तदपि न युक्तम्। असत्त्वेन प्रतीयेतेत्यनिर्वचनीयसाधकतर्के आपाद्यापादकयोरैक्यप्रसक्तिपरिहाराय क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानं चेदपरोक्षत्वेन न प्रतीयेतेत्युक्त्वा ऽनिर्वचनीयस्यापरोक्षप्रतीतिविषयत्वेन, पारोक्ष्यस्य वस्तुदोषत्वेनैव त्वयाभ्युपगतत्वात्। किञ्च सद्रूपप्रधाननिरपेक्षारोपस्य भवदङ्गीकृतत्वेनैवा (जगतःब्रह्मण्यारोपः)ऽसतः प्रधानाभावेप्यरोपस्य भवद्रीत्या संभवेनोक्तलक्षणस्य तत्रातिव्याप्तिर्दुर्वरैव॥ ७॥।

यतस्त्वया शुक्तिरूप्यं प्रातिभासिकसत्वेन स्वीकृतं तस्मात् त्वन्मते तच्च निषेधप्रतियोगित्वं स्वरूपतो नैवास्ति शुक्तिरूप्यके इत्यन्वयार्थः॥ ८॥

**प्रातिभासिकसत्त्वेन स्वीकृतं तत्त्वया यतः।**
**पारमार्थ्येन धर्मेण निषेध्यत्वं चिदात्मनि॥९॥**

त्रैकालिकनिषेधप्रतियोगित्वं यदि पारमार्थिकत्वाकारेणेत्युच्यते तथा शुक्तिरूप्ये पारमार्थिकत्वावच्छिन्नात्यन्ताभावप्रतियोगित्वान्न साध्यवैकल्यापत्तिरित्यतः तत्रापि दोषमाह **पारमार्थ्येनेति**।

**निर्धर्मके त्वतिव्याप्तं मिथ्याभूतस्य लक्षणम् ।**
**सद्भिन्नत्वंलक्षणं तु शशशृंगेऽतिव्यापकम् ॥१०॥**

ननु पारमार्थिकस्य ब्रह्मणः कथं पारमार्थिकत्वेन निषेधः इत्यत आह **निर्धर्मकेति** । त्वन्मतरीत्या निर्धर्मकत्वाद्ब्रह्मणःपारमार्थिकत्वरूपधर्मस्याप्यभावान्निषेधः । यद्यपि प्रतियोगित्वरूपधर्मस्य ब्रह्मणि निर्धर्मकेऽभावाङ्गीकारावश्यकतया नातिव्याप्तिरिति तथाप्यभावरूपधर्मस्याद्वैत हानिकरत्वाभावेन प्रतियोगित्वस्यापि निर्धर्मकत्ववत् अप्रतियोगित्वाभावरूपतया ब्रह्मणि संभवात् । अन्यथा सत्यं ज्ञानमनन्तमिति श्रुतिव्याकोपपरिहारार्थं, मिथ्यात्वाभावरूपसत्यत्वस्य, अधिकरणानतिरिक्तस्य स्वप्रकाशत्वनिर्वाहार्थं परप्रकाशत्वाभावस्य कालपरिच्छेदाभावरूपनित्यत्वस्य, देशपरिच्छेदाभावरूपविभुत्वस्य, वस्तुपरिच्छेदाभावरूपपूर्णत्वस्य चाङ्गीकारायोगात् । अप्रतियोगित्वाभावस्यैव प्रतियोगित्वात् अतिव्यप्तिर्भवत्येव । न चेवंरीत्याऽपारमार्थिकत्वाभावरूपस्य पारमार्थिकत्वस्य ब्रह्मण्यङ्गीकारे कथमतिव्याप्तिरिति वाच्यम् । अपरमार्थिकस्यास्मिल्लक्षणे अपरमार्थिकत्वाभावस्य प्रतियोगितावच्छेदकतया निवेशे आत्माश्रयापा तात् । अपारमाथिकत्वाभावावच्छिन्नात्यन्ताभावप्रतियोगित्वाभावेपि पारमाथिकत्वावच्छिन्नाभावप्रतियोगित्वस्योक्तरूपस्य ब्रह्मणि संभवादतिव्याप्तितादवस्थ्यात् । अन्यथा निर्धर्मकत्वमकिञ्चित्करं स्यात् ।

यद्वा येन प्रतियोगिताव्यधिकरणस्य तदवच्छेदकत्वं नाङ्गीकृतं तन्मतेऽप्रसिद्धमेवेदं पारमार्थिकत्वाकारेण त्रैकालिकनिषेध्यत्वरूपं मिथ्यात्वलक्षणम् । पारमार्थिकत्वस्य प्रतियोगिताव्यधिकरणत्वेन, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य तद्रीत्याऽ सिद्धत्वात् । तथा च पारमार्थिकत्वाभाववत्वे एवास्य लक्षणस्य पर्यवसानावश्यकतया तस्य चाभावरूपधर्मस्य निर्धर्मकब्रह्मणि पररीत्या संभवादतिव्याप्तिः दुरपह्नवैवेति भावः । अथवा त्रैकालिकनिषेधाप्रतियोगित्वरूपस्य पारमार्थिकत्वस्य त्रैकालिकनिषेधप्रतियोगित्वस्य च परस्परविरहात्मकतयोभयनिषेधे व्याघातः स्यात् ।

अत्रेमे सदानन्दविदः श्लोकाः ।

स्वाधिष्ठाने परे तत्त्वेऽध्यस्तस्य जगतोऽथवा
त्रैकालिकनिषेधस्य प्रतियोगितयास्तु तत् ॥८॥ पुट ५ ॥
वस्तुत्वेऽपि निषेधस्य ब्रह्माभिन्नत्वहेतुना ।
नात्वद्वैतहानिर्नोवास्ति प्रपञ्चस्यापि वस्तुता ॥९॥
अतात्विकनिषेधोऽपि व्यावहारिक इष्यते ।
विरोधस्तुल्यसत्वेन विश्वतत्प्रतिषेधयोः ॥१०॥
क्वचित्प्रतीत्यनर्हत्वमत्यन्तासत्त्वमुच्यते ।
न तथात्वं प्रपञ्चस्य स्वाधिष्ठाने प्रतीतितः ॥११॥

ते अयुक्ताः । तथाहि — त्रैकालिक निषेधप्रतियोगित्वरूप मिथ्यात्वघटक-निषेधः यदि तात्विकः तदाऽद्वैतहानिरिति अभिहितत्वात् । तस्य ब्रह्मरूपत्वे तु ब्रह्मणोऽपि सोपाधिकत्वापत्तिः । अभावस्य प्रतियोग्युपाधिकत्वादित्युक्तो दोषः । घटभेदाभावस्य ब्रह्मत्वेन ब्रह्मणो घटत्वापत्तिश्च । भेदाभावस्य स्वप्रतियोगिप्र-तियोगितावच्छेदकरूपत्वात् । न च भेदाभावस्य स्वप्रतियोगिप्रतियोगितावच्छेद-कस्वरूपत्वं तयोः समसत्ताकत्व एवेत्यङ्गीकारे को दोष इति वाच्यम् । घटतद्भा-वादेर्ब्रह्मसत्त्वासमानसत्तावत्वस्याद्याप्यसिद्धत्वात् । स्वातिरिक्तस्यापि स्वप्रतियो-गिप्रतियोगितावच्छेवकस्य नियतसामानाधिकरण्येनोपपत्तौ तु ब्रह्मणि घटत्व-सत्त्वापत्तिः । आरोपिताभावस्यापि ब्रह्मरूपनिषेधप्रतियोगित्वावश्यकतया ब्रह्मणः स्वप्रतियोगिरूपत्वापत्तिः । न हि स्वाभावाभावतिरिक्तं स्वं दृष्टम् । निषेधस्य व्यावहारिकत्व उक्तमर्थान्तरत्वम् । ननु निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे तन्त्रं, किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वमेव । प्रकृते च तुल्यसत्ताकत्वात्कथं न विरोधित्वमिति चेन्नैवम् । किमिह अभावस्य, प्रतियोगिनो जगतश्च तुल्यसत्ताकत्वात् अभावस्य प्रतियोग्यपक्षेया न्यूनसत्ताकत्वरूपतन्त्राभावात् उक्तमिथ्यात्वस्य पारमार्थिक सत्त्वाविरोधित्वेनार्थान्तरताया अभावोभिप्रेतः अथवा प्रतियोव्यन्यूनसत्ताकत्वं अभावे निवेश्य स्वप्रतियोग्यन्यूनसत्ताकाभावप्रतियोगित्वरूपमिथ्यात्वस्य

पारमार्थिकत्वविरोधित्वेन नास्त्यर्थान्तरता इति। नाद्यः। अस्माभिः प्रपञ्चस्य पारमार्थिकत्वाङ्गीकारात् उक्तन्यूनसत्ताकत्वंस्य सद्भावादर्थान्तरताया दुर्वारत्वात् । न द्वितीयः । प्रतियोगिसत्तायाः अद्याप्यनिश्चितत्वेन अभावस्यान्यूनसत्ताकत्वस्य ज्ञातुमशक्यत्वात् । न्यूनत्वाधिकत्वादीनां दुर्वचत्वाच्च । न च प्रातिभासिकनिष्ठ व्यावहारिकपारमार्थिकान्यतरप्रतियोगिकत्व, व्यावहारिकनिष्ठ पारमार्थिकप्रतियोगिकत्व एतदन्यतखत्वमभावस्य स्वप्रतियोगिन्यूनसत्ताकत्वम् । नथा च व्यावहारिकपारमार्थिकान्यतरनिष्टं यत् प्रातिभासिकाभावप्रतियोगित्वं, यच्च पारमार्थिकानिष्ठं व्यावहारिकाभावप्रतियोगित्वं तदन्यत् यत् स्वसमानाधिकरणाभावप्रतियोगित्वं तदेव मिथ्यात्व इति न दोषः इति वाच्यम् । ईदृशासाध्यापेक्षया प्रातिभासिकत्व व्यावहारिकत्व एददन्यतरत्वं मिथ्यात्वमित्येव वा अपारमार्थिकत्वं मिथ्यात्वमिति वा ब्रूयात् इतर वैय्यर्थ्यात् । उक्तन्यूनसत्ताकत्वस्य कल्पकाभावादप्रामाण्याच्च।

प्रातिभासिकत्वे च सिद्धसाधनम् । एतच्च परैरेवाभिमतम् । अभावस्य व्यावहारिकत्वे प्रातिभासिकत्वे वा तन्मिथ्यात्वज्ञप्तै व्यावहारिकस्य, प्रातिभासिकस्य वाऽभावन्तरस्य ज्ञेयतया तस्यापि व्यावहारिकत्वादिनिश्चायार्थं मिथ्यात्वसिद्ध्यर्थं पुनस्तदभावान्तरज्ञानावश्यकतयाऽनवस्था । अथ क्वचित्प्रतीत्यनर्हत्वमत्यन्तासत्त्वमुच्यत इत्यादि यदुक्तं तत्स्वव्याहतम् । शब्दजन्यज्ञानविषयः अत्यन्तासत्वं क्वचित्प्रतीत्यनर्हत्वाभिन्नमित्येव तद्वाक्यार्थबोधात् । मूकोहमितिवत् स्यात् । शब्दजन्यज्ञानस्य प्रतीतित्वात् ॥१०॥

**सदान्यत्वासदान्यत्वे नैकत्रैव विरोधतः ।**
**यद्यसत्त्वं क्वचित्सत्वधियो गोचरतेष्यते ॥११॥**

**तदा शून्यमतात्ते स्यात्सिद्धसाधनदूषणम् ।**
**सदसत्त्वे विहायैवं तद्भिन्नत्वं वृथैव ते ॥१२॥**

सद्भिन्नत्वे सत्यसद्भिन्नत्वं मिथ्यात्वमित्युक्तावाह **विरोधतः** इति । सामानाधिकरण्यासंभवः।उक्तदिशाव्याघातात्॥११॥

**शून्यमतादिति** - शून्यमतरीत्येत्यर्थः। बौद्धमते प्रपञ्चस्यासत्त्वमेवाभ्युपगतं। तं प्रत्यसद्विलक्षणत्वस्य त्वया साधनीयतया क्वचिदपि सत्त्वेनाप्रतीयमानत्वरूपासत्वस्य तेनापि प्रपञ्चेऽ नङ्गीकारेणेदृशासद्विलक्षणत्वसाधने तेन सिद्धसाधनस्योद्धाव्यत्त्वादिदं न युक्तमिति भावः। सद्विविक्तत्वमात्रस्य साध्यत्वेपि सिद्धसाधनं दुर्वारम् । तेन प्रपञ्चे सत्त्वानङ्गीकारात् । सत्पदस्य ब्रह्मपरत्वे ब्रह्मभिन्नत्वस्य जगत्यङ्गीकारात् अस्मद्रीत्यापि सिद्धसाधनाच्च। अन्यस्यासत्वस्याभावात् अत्यन्तासत्त्वापत्तेश्च । निर्धर्मकब्रह्मणि सत्त्वाभावेनसद्विविक्तत्वेन, असति चातिव्याप्तेः । सत्वेन प्रतीयमानत्वविशेषणेनातिव्याप्ति परिहारोपि असंभवी। तयोस्तत्सत्त्वाङ्गीकारात्।

**सदसत्त्वेति**- ब्रह्मवत् जगतोपि निर्धर्मकत्वाङ्गीकारेपि तस्य सत्त्वं असत्त्वं च विहाय- परित्यज्य एवं- ईदृशरीत्या, तद्भिन्नत्वं - सदसद्विलक्षणत्वं - उपपद्यत इति तत्साधनं वृथैव - उद्देश्यासिद्ध्या व्यर्थमेवेत्वर्थः॥ १२॥

**पूर्व पक्षः - मिथ्यात्वं सद्विविक्तत्वं मानसिद्धं सदिष्यते।**
**दोषासहकृतज्ञानकरणं मानमीर्यते ॥१-२३॥**

**सिद्धान्तः - इति त्वदुक्तं युक्तं न प्रपञ्चे मानसिद्धितः।**
**सत्त्वं न सद्विविक्तत्वं अतो बाधः समापतेत् ॥१३॥**

सद्विविक्तत्वं सद्भिन्नत्त्वम् । दोषासहकृतज्ञानजनकप्रमाणजन्यज्ञानविषयत्वं सत्त्वमित्युक्तं भवति । दोषासहकृतं यज्ज्ञानकरणं तत्प्रमाणमित्युक्तं भवति । अस्मिन्विकल्पः तत्खण्डनं च श्रीमन्न्यायसुधातोऽनुसंधेयम् । प्रकृते दोषमाह इतीति । प्रपञ्चस्य दोषासहकृतप्रमाणजन्यज्ञानविषयत्वेन, सत्वमस्तीति सद्भिन्नत्वसाधने बाधः॥ १३॥

**यत्सत्यं नैव तद्वेद्यं यद्वेद्यं नैव तच्च सत्।**
**इति ते समयस्तत्र कुत्रार्थे मानसिद्धता ॥१४॥**

**मिथ्यात्वस्यापि दृश्यत्वहेतुना सिद्धिमत्वतः ।**
**मिथ्यात्वस्य च सत्यत्वे सदद्वैतमक्षतिः ॥१५॥**

**तस्य च ब्रह्मरूपत्वे ब्रह्मणो दृश्यता भवेत् ।**
**तदेतत्सर्वमालोच्य पक्षं त्यज दुराग्रहम् ॥१६॥**

शुद्धब्रह्मणः वृत्तिव्याप्यत्वाभावेन दृश्यत्वरूपवेद्यत्वाभावात् कथं मानसिद्धत्वं तस्य ? तथा तादृशदृश्यत्वहेतुनैव मिथ्यात्वसाधनान्मानसिद्धस्य कथं वा असत्यत्वमिति प्रश्नः । तथा च मानसिद्धत्वरूपदृश्यत्वमेव सत्त्वमित्युक्त्या प्रकृतमिथ्यात्वरूपसाध्येन हेतोर्विरोधः । ब्रह्मणि चोक्तमानसिद्धत्वाभावेन मिथ्यात्वापत्तिः । तदुपपादयति **दृश्यत्वहेतुनेति** । तस्य दृश्यत्वहेतोः भवद्रीत्या दोषासहकृतमानत्वेन तज्जन्यानुमितिविषयत्वेन मिथ्यात्वस्य सत्यत्वापत्तिः। नेदमिष्टमित्याह **सदद्वैतेति** - अद्वैतहानिरित्यर्थः ॥ १४ ॥ १५ ॥

**तस्य चेति** - मिथ्यात्वस्य ब्रह्मरूपस्योक्तरीत्याऽनुमितिविषयत्वेन दृश्यत्वात् ब्रह्मणि व्यभिचार इति भावः । प्रपञ्चो मिथ्येति ज्ञानस्य प्रपञ्चः ब्रह्मवानित्यर्थपर्यवसायित्वात्सिद्धसाधनता च । मिथ्यात्वस्य सत्यत्वेन ब्रह्मरूपतयाऽदृश्यत्वेऽनुमानवैय्यर्थ्यं च । मिथ्यात्वस्य सोपाधिकत्वान्निरुपाधिकब्रह्माभेदायोगाच्च । एवं न्यायामृतोक्तान्दोषानालोच्य दुराग्रहं-पक्षं च, दुराग्रहं पक्षं वा त्यजेति॥ १६ ॥

**सार्वत्रिकनिषेधस्य योगित्वं लक्षणं तु चेत् ।**
**नृशृंगादिवदेवास्यासत्यत्वं साधितं भवेत् ॥१७॥**

**ज्ञानेन विनिवर्त्यत्वं मिथ्यात्वं यदि त्वन्मतम् ।**
**तथाप्यनित्यतैव स्यान्मिथ्यात्वं नैव सिद्ध्यति ॥१८॥**

**विज्ञाननाश्यता मिथ्यारूप्यादौ नानुभूयते ।**
**किंत्वधिष्ठानवत् सत्ये तदज्ञानेऽनु भूयते ॥१६॥**

**अनिर्वाच्यत्वमुक्तं चेत्साध्यस्य त्वप्रसिद्धता ।**
**मिथ्यात्वमपि सत्यं चेत् सदद्वैतमतक्षतिः ॥२०॥**

**असत्यं चेज्जगत्सत्यं स्यात्तदापि मतक्षतिः ।**
**अत्र यत्तु परेणोक्तं समाधानं न संगतम् ॥२१॥**

सर्वदेशकालवृत्ति निषेधप्रतियोगित्वं यदि मिथ्यात्वलक्षणमस्य प्रपञ्चस्यापि तर्हि नृशृङ्गवदसत्त्वमेव साधितं भवेत् । तथा चार्थान्तरता अपसिद्धान्तश्च । शशविषाणात्यन्ताभावस्यैव केवलान्वयित्वेन सार्वत्रिकत्वादित्याह सार्वत्रिकेति ॥ १७ ॥

तृतीयमिथ्यात्वलक्षणस्याप्ययुक्ततामाह ज्ञानेनेति । ज्ञाननिवर्त्यत्वं यदि मिथ्यात्वं तर्हि जगतो ध्वंसप्रतियोगित्वेनानित्यत्वमात्रं साधितं भवेन्नत्वसत्यत्वम् । तथाचार्थान्तरतेति भावः ॥ १८ ॥ दृष्टान्ते साध्यवैकल्यं चाह विज्ञानेति । शुक्तिरूप्यस्य ज्ञानजन्यध्वंसप्रतियोगित्वाभावात् । रूप्यं ज्ञानेन नष्टमित्यनुभवाभावादिति भावः । ननु तर्हि कस्य वा तत्त्वमित्यत आह-किंन्त्विति । शुक्त्यज्ञानमासीत् शुक्तेरधिष्ठानस्य ज्ञानेन तन्निवृत्तमित्येवानुभवात् । शुक्तेः सत्यत्ववदासीदिति तदज्ञानस्यापि सत्यत्वमनुभवसिद्धम् । अनिर्वचनीयत्वं मिथ्यात्वमित्युक्तौ चाप्रसिद्धविशेषणः पक्षः इत्युक्तो दोषः ।

**मिथ्यात्वमपीति** - ब्रह्मभिन्नस्य मिथ्यात्वस्य सत्यत्वेऽद्वैतहानिः । ब्रह्मात्मकस्य तस्य तु द्वैतिभिर्व्याप्तब्रह्मणः जगति वृत्तित्ववादिभिरङ्गीकारात्सिद्धसाधनता । अथवा जगन्मिथ्यात्वस्यासत्यत्वपक्षनिरासाय पूर्वोक्तव्यवहितसत्पक्षदूषणमपि स्मारयति **मिथ्यात्वमपीति** ॥ १६ ॥ २० ॥

मिथ्यात्वस्य मिथ्यात्वे दोषमाह तदापीति –

**"मिथ्यात्वं यद्यबाध्यं स्यात्सदद्वैतमतक्षतिः ।**
**मिथ्यात्वं यदि बाध्यं स्याद् जगत्सत्यत्वमापतेत् ॥"**

इति न्यायामृतमूलकारकारिकानुवादरूपत्वात् न पुनरुक्तिः । अत्रयत्त्विति असाङ्गत्यप्रकारस्तूत्तूरत्र निरूपयिष्यते ॥ २१ ॥

**वस्तुत्वेपि निषेधस्य ब्रह्माभिन्नत्वहेतुना ।**
**नाद्वैतहानिरिति नो तथात्वे सिद्धसाधनात् ॥२२।**

**जगन्निषेधरूपस्य ब्रह्मणो जगति स्थितेः ।**
**सोपाधिकनिषेधस्य निरुपाध्यात्मता न हि ॥२३॥**

**तात्त्विकस्य निषेधस्य प्रतियोगी स तात्त्विकः ।**
**असत्प्रातीतिकान्यो यः इत्युक्तव्यभिचारिता ॥२४॥**

**शुक्तिरूप्ये न त्वदुक्ता तस्य प्रातीतिकत्वतः ।**
**भावाभावविरोधे स्वे सत्तामात्रं प्रयोजकम् ॥२५॥**

**विरोधस्तुल्यसत्त्वेनेत्युक्तं ते मानवर्जितम् ।**
**सत्तात्रैविध्यमद्यापि न सिद्धं मानवर्जितम् ॥२६॥**

वस्तुत्वेऽपीति - सदानन्दविदः १ प - ९ तमे श्लोके यदुक्तं । तन्न सङ्गतम् । सत्यनिषेधः नाद्वैतहानिकरः ब्रह्माभिन्नत्वादिति प्रयुज्यते चेत्तर्हि ब्रह्माभिन्नजगन्निषेधस्य जगति वृत्तित्वाभ्युपगमात् सिद्धसाधनमित्यर्थः॥ २२ ॥ सिद्धसाधनमुपपादयति जगन्निषेधस्येति। दूषणान्तरमप्याह - सोपाधिकेति॥ २३ ॥

"न च तात्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्विकत्वापत्तिः। तात्विकाभावप्रतियोगिनि शुक्तिरजतादौ कल्पिते व्यभिचारादित्युक्तमद्वैतसिद्धौ । तत्र दूषणमाह - असत्प्रातीतिकान्यो य इति। असत्प्रातीतिकान्यो यः तात्विकाभावप्रतियोगी स तात्विकः इत्युक्तौ शुक्तिरूप्ये त्वदुक्ता व्यभिचारिता न। तस्य शुक्तिरूप्यस्य प्रातीतिकत्वतः प्रातिभासिकत्वादिति योजना।

निषेधस्यातात्विकत्वे दोषं निरूपयति भावाभावेति - घटस्य तदभावस्य चैकत्र सत्ववारणार्थं तथा विद्यमानानुभवनिर्वाहार्थं च तयोः विरोधस्याभ्युपगन्तव्यतया तत्र विरोधे किं प्रयोजकमित्यत आह सत्तामात्रमिति। सत्तास्ववान्तरप्रभेदानङ्गीकारादभावस्य तत्प्रतियोगिनः भावस्य चैकत्राधिकरणे सत्वोक्तौ विरोध इति वक्तव्ये तुल्येति पदं व्यर्थम्। व्यावर्त्याभावादित्यर्थः॥ २४ ॥ २५ ॥

अत एव परोक्तं प्रयोजकमपि प्रमाणविरुद्धमित्याह विरोध इति। सत्तावैविध्यस्याप्रमाणिकत्वादिति भावः॥ २६ ॥

**यादृशं ब्रह्मणः सत्वं तादृशं स्याज्जगत्यपि।**
**सत्त्वैविध्यं तु मानेन केनेत्युक्तं हि पूर्वकैः ॥२७॥**

ननु सत्वस्यैव दुर्निरूपत्वेन कथं तन्मात्रस्य विरोधप्रयोजकत्वमित्यतः परमुखेनैव सत्त्वनिरूपणं कारयति - यादृशमित्यादिना। मिथ्यात्वलक्षणघटकसत्वस्य परेणावश्यनिरूप्यत्वादिति भावः। पूर्वकैः - प्राचीनाचार्यैरित्यर्थः। अनुव्याख्यानादौ शेषः॥ २७॥

**नेह नानेति श्रुत्या चेत् स्यात्सर्वं प्रातिभासिकम्।**
**व्यावहारिकसत्त्वे ते नैव मानं तु दृश्यते ॥२८॥**

**घटो नास्तीति बुद्धौ तु घटवत्यपि भूतले।**
**भ्रमत्वहेतुर्योऽभावो व्यावहारिक एव ते ॥२९॥**

**ततः सहैवावृत्तित्वं प्रतियोगिनिषेधयोः।**
**स्वान्यूनसत्ताकत्वस्य हेतुत्वमपि नोचितम्॥३०॥**

**नेहनानेति श्रुत्या इति।** नेह नानेति श्रुत्यर्थान्यथानुपपत्या सत्त्रैविध्यसिद्धिरिति चेत् नेदं रजतमिति ज्ञानेन बाधितज्ञानविषयीभूतरजतवज्जगतोऽपि प्रातिभासिकत्वापत्तिः। न हि बाधकभेदेन बाध्यस्वरूपसत्ता भिद्यते। ननु व्यवहारोपयोगित्वाद्बाध्यमपि जगत् प्रातिभासिकं न भवति। तस्य व्यवहारानुपयोगित्वादिति चेत्तत्राह **-व्यावहारिकसत्त्वे ते इति।** प्रातिभासिकस्यापि व्यवहारोपयोगित्वस्य त्वयाङ्गीकारात् इतिभावः। ननु कथं तदित्यत आह घटोनास्तीति। घटवति भूतले घटो नास्तीति बुद्धौ भ्रमत्वहेतुः यः प्रातिभासिकः अभावः सः ते - त्वन्मते व्यावहारिक एव व्यहारोपयोगी एव। अथवा भ्रमत्वहेतुः भ्रमत्वव्यवहारोपयोगी अभावः घटाभावः त्वन्मते अव्यावहारिक एव प्रातिभासिक एवेत्यर्थः।

अथवा ननु निषेधस्य बाध्यत्वं पारमार्थिकसत्वाविरोधित्वे न तन्त्रं, किन्तु निषेध्यापेक्षया निषेधस्य न्यूनसत्ताकत्वं प्रकृते व्यावहारिकस्य निषेधस्य व्यावहारिकप्रपञ्चरूपप्रतियोगिसमसत्ताकत्वेन व्यावहारिकनिषेधस्य तस्य पारमार्थिकसत्वविरोधित्वं स्यादेवेति कथमर्थान्तरता इति चेत्। मैवम्। तथाहि क्वेदमुपलब्धं प्रतियोगिनाऽन्यूनसत्ताकाभावस्यैव विरुद्धत्वमिति। न हि जगति कुत्रापि पारमार्थिकप्रतियोगिना व्यवहारिकाभावस्याविरोधस्त्वद्रीत्या दृष्टः। येनोक्तान्यूनसत्ताकत्वस्य विरोधे हेतुत्वं सिद्ध्येदित्याशयवान् सदृष्टान्तमन्यूनसत्ताकत्वस्य विरोधप्रयोजकत्वं निरस्यति घटो नास्तीति। घटवति भूतले घटो नास्तीति बुद्धौ तु भ्रमत्वहेतुर्योऽभावः - व्यावहारिकघटाभावः, ते त्वन्मतरीत्या व्यावहारिक एव। घटस्य व्यावहारिकस्य व्यावहारिकघटाभावेनैव विरोधात्तादृशघटवति व्यावहारिकघटाभावस्यायुक्तत्वज्ञानादेवोक्तबुद्धेः भ्रमत्वं निश्चेतव्यमिति विषयतया व्यावहारिकघटाभावस्य भ्रमत्वहेतुत्वमिति ज्ञेयम्। तत इति घटाभावस्य घटवि-

रोधिनः व्यावहारिकत्वादेवेत्यर्थः। प्रतियोगिनिषेधयोः सहैवावृत्तित्वं घटतदभावयोरसामानाधिकरण्यमुपपद्यते इति स्वान्यूनसत्ताकत्वस्यापि हेतुत्वं नोचितमिति भावः ॥ २९ ॥

**मिथ्यात्वस्याऽपि मिथ्यात्वे प्रपञ्चे सत्यता न हि।**
**दृश्यत्वादेर्निषेध्यत्वस्यावच्छेदकतेष्यते ॥ ३० ॥**

**इत्युक्तं तदसंबद्धं घटादौ हि निषेध्यता।**
**अवच्छेदकमत्र स्यात् घटत्वाद्यं न दृश्यता ॥३१॥**

प्रसङ्गान्मिथ्यात्वस्य व्यावहारिकत्वपक्षमपि दूषयितुं पूर्वपक्षमनुवदति **दृश्यत्वादेरिति**। उक्तमेतदद्वैतसिद्धौ- "यथा गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वमुभयोः तुल्यमिति नैकतरनिषेधेऽन्यतरसत्त्वं, तद्वदिति। विरुद्धे अपि गोत्वाश्वत्वे एकत्र गजे निषिध्येते। विरुद्धे अपि सत्यत्वमिथ्यात्वे एकस्मिन तुच्छे निषिध्येते। अतो मिथ्यात्वस्य मिथ्यात्वेन निषेधप्रतियोगित्वोक्तावपि न सत्यत्वसत्वापतिः। रूप्यत्वतदभावयोः रूप्यभिन्नत्वरूप्यत्वयोर्वा एकस्य मिथ्यात्वेऽपरसत्यत्वनियमः तयोः परस्परविरहरूपत्वात् परस्परविरहव्यापकत्वाद्वा। न वयं प्रपञ्चमिथ्यात्वस्य सत्यत्वस्य च विरोधाङ्गीकारे परस्परविरहरूपत्वं वा परस्परविरहव्यापकत्वं वाऽभ्युपगच्छामः। अतः न प्रपञ्चसत्यतापत्तिः। तथा चेदमुक्तं भवति। यत्र विरुद्धयोर्निषेध्यतावच्छेदके भिन्ने तत्रैकस्य मिथ्यात्वेऽपरसत्यत्वं, यत्र निषेध्यत्वावच्छेदकमेकमेव तत्रैकमिथ्यात्वेऽपरसत्यत्वानापत्तिः। यथा गोत्वाभावाश्वत्वाभावोभयप्रतियोगितावच्छेदकं गजत्वात्यन्ताभावव्याप्यत्वमेकं, तत्र गजे गोत्वस्य मिथ्यात्वेऽप्यश्वत्वसत्यत्वापत्तिर्न भवति। तथा प्रकृतेमिथ्यात्वाभाव सत्यत्वाभाव प्रतियोगितावच्छेदकमेकमेव दृश्यत्वम्। अतः तत्र मिथ्यात्वस्य प्रपञ्चे मिथ्यात्वेऽपि सत्यत्वस्य नापत्तिरिति"। तदेतन्निराकरोति- **तदसंबद्धमित्यादिना**।

अत्रेत्थमवधेयम्। त्रैकालिकनिषेधप्रतियोगित्वं हि मिथ्यात्वं। यच्छुक्तिरूप्ये दृष्टं प्रपञ्चे साध्यते। यद्यस्य पुनर्मिथ्यात्वं तर्हि मिथ्यात्वस्यापि त्रैकालिकनिषे-

धप्रतियोगित्वेन प्रपञ्चे मिथ्यात्वाभावः स्यात् । तथाचोक्तानुमाने विरोधः प्रसज्येत । प्रपञ्चमिथ्यात्वाभावाभ्युपगमे सत्यत्वं वा स्यादित्यापादयितुराशयः। असति सत्यत्वाभावमिथ्यत्वाभावयोः सामानाधिकरण्यमङ्गीकृत्य तथा प्रपञ्च सत्यत्वापादनवारणसंभवेऽपि विश्वमिथ्यात्वानुमानवैय्यर्थ्यस्य विरुद्धत्वस्य वाऽपरिहारा दिदमसंबद्धमिति । प्रश्नस्य प्रकृतशंकानुत्तरत्वात् ॥

किञ्च सत्यत्वमिथ्यात्वयोः परस्परविरोधे ऽविवादात् । तत्र किमपि विरोधप्रयोजकं बीजं वाच्यम् । परस्परविरहरूपत्वं, वा विरहव्यापकत्वं वा विरहव्याप्यत्वं वा विहाय नान्यत्प्रयोजकं दृष्टम् । तत्राद्यद्वये सत्येकस्याभावेऽपरस्य सत्वनियमभ्युपगम्य, अन्त्ये सति तन्नियमाभावेऽपि किमपि नियामकं वक्तव्यम्। तद्यदि निषेध्यतावच्छेदकैक्यं तर्हि तस्य सर्वत्र साम्यात् परस्परविरहरूपयोः विरहव्यापकयोर्वा तादृशनियमो न स्यात् । रजतत्वतदभावयोरपि निषेधे प्रमेयत्वपदार्थत्वदृश्यत्वादीनां निषेध्यतावच्छेदकानां संभवात् । यद्यन्यूनानतिरिक्तवृत्तिनन एवावच्छेदकत्वं तदा समं प्रकृतेऽपि । गोत्वत्वस्यैव गोत्वाभावप्रतियोगिताऽन्यूनानतिरिक्तत्वात् त्वद्रीत्या निषेधप्रतियोगित्वरूपत्रिकालाबाध्यत्वत्वस्यैव तत्तन्निषेध्यताऽन्यूनानतिरिक्तता । न तु गजत्वाभावव्याप्यत्वस्य महिषीत्वादावतिरिक्तवृत्तेः वा घटादावतिरिक्तवृत्तेः दृश्यत्वादेर्वा । **तदेतदाहासंबद्धमिति** । अभावप्रतियोगिनोः भेदप्रतियोगितावच्छेदकयोर्विरोधस्यानुभविकत्वात्, धर्मद्वयमध्ये एकस्याभावेऽपरसत्वनियमं प्रति अन्यतरवृत्यन्यतरप्रतियोगित्वान्यतरप्रतियोगितावच्छेदकत्वान्यतरत्वं प्रयोजकं वाच्यम् । परस्परविरहव्याप्ययोर्धर्मयोरुक्त प्रयोजकाभावात्तत्रैकतराभावेऽन्यस्य सत्वापत्तिः इति वक्तव्ये दृश्यत्वादेर्नियामकत्ववचनं उक्तं असंबद्धमित्याह - **इत्युक्तंतदसंबद्धमिति**।

अपि च कुत्रेदं सत्यत्वाभावमिथ्यात्वाभावयोर्भवद्रीत्या विरहानात्मनोः सामानाधिकरण्यम् । न प्रपञ्चे । भवता तस्य मिथ्यात्वसाधनायैव प्रवृत्तत्वात् । न ब्रह्मणि । तस्य सत्यत्वात् । न रूप्ये । तस्यापि मिथ्यात्वात् । यद्यसतीत्युच्यते तर्हि असत्वाभावव्याप्यत्वस्य निषेध्यतावच्छेदकत्वं भवदीययुक्तिसिद्धमिति, दृश्यत्वादेः प्रकृताऽसंबद्धत्वमाह - **तदसंबद्धमिति** । असतोऽपि मिथ्यात्ववादिनैव

मिथ्यात्वमिथ्यात्वे प्रपञ्चसत्यत्वापत्तेरुद्भाव्यत्वेन तं प्रत्यसति सामानाधिकरण्यमुक्तं **तदसंबद्धमिति** वार्थः।

अथ च प्रपञ्चगतसत्यत्वाभावस्यापि अद्वैतक्षतिभिया मिथ्यात्वं साधनीयम् । यदि सोऽपि सत्यत्वाभावः निषेधप्रतियोगी तर्हि प्रपञ्चे सत्यत्वाभावाभावात्मकं सत्यत्वं साधितप्रायमित्याह - **तदसंबद्धमिति**। स्वमतासंबद्धमिति भावः।

किञ्च द्वितीयमिथ्यात्वविचारे स्वेनैव सत्यत्वस्य [1] मिथ्यात्वाभावरूपत्वमुक्त्वा श्रुतिव्याकोपस्य परिहरणादिदानीं तयोः सत्यत्वमिथ्यात्वयोः विरहात्मकत्ववचनं स्वोक्त्यसंबद्धमित्याह उक्तं **तदसंबद्धमिति** । तदेतत्स्ववचनविरोधपरिहाराय विवरणकाररीत्या मिथ्यात्वाभावत्वोपलक्षितमिथ्यात्वाभावस्यैव सत्यत्वात्मकता न तु विशिष्टस्येति यद्युच्यते तर्ह्युक्ताभावस्य ब्रह्मणि कादाचित्कत्वेन सत्यत्वं ब्रह्मणि कदाचिदेव स्यात् । घटत्वाभावत्वोपलक्षित ( विशिष्ट ) घटत्वाभावस्य सत्यत्वाङ्गीकारेऽपि निर्धर्मकब्रह्मणि सत्यत्वव्यवस्थायाः सौलभ्येन मिथ्यात्वाभावपर्यन्तानुधावनवैय्यर्थ्यं च स्यात् । मिथ्यात्ववत् घटत्वस्यापि सत्यत्वेन विरोधस्य समानत्वात् । कदाचित् तद्विशिष्टस्यैव कालान्तरे तदभाववतः तदुपलक्षितत्वव्यवहारात् कदाचित् मिथ्यात्वाभावत्वविशिष्टाभावस्य सत्यत्वस्वरूपत्वावश्यकतया तदानीं विरहात्मकत्वस्याङ्गीकर्तव्यत्वापत्तिरपि स्यात् । स्वपूर्वकालीन प्रतियोगि समानाधिकरणतदभाववत्वरूपतदुपलक्षिततत्वस्य विट्ठलेशाभिमतत्वाच्च । सर्वदाऽविशिष्टस्य उपलक्षितत्वव्यवहाराभावात् । अन्यथा ब्रह्मणः मिथ्यात्वोपलक्षितत्वमपि स्यात् । तदेतदाह **उक्तं तदसंबद्धमिति**। उपलक्षितत्वादिवचनमितिशेषः। अत्र विचारे विट्ठलेशीये गोत्वनिष्ठमिथ्यात्वे गजरूपधर्मिणि ज्ञाते गोत्वाश्वत्वरूपपरस्परविरुद्धोभयैकवृत्तौ तदुभयत्वाश्रयोः गोत्वाश्वत्वयो द्वयोरपि गजरुपैकधर्मिणि प्रतीतिकतया एकापेक्षयाऽपरस्य अधिकसत्ताकत्वाभावेन वा गजरूपधर्मिणि गोत्वश्वत्वोभयत्वाश्रयैकापेक्षाधिकसत्तापरकत्वाभावेन वाऽऽपादक प्रविष्टे व्यभिचारः इति तद्वारणाय परस्परविरुद्धोभयस्मिन् स्वावृत्ति धर्मनिष्ठाभाव प्रतियोगितावच्छेदकसामान्य-

---

1 लघति। ( अद्वैतसिद्धिः ) "अधिकरणातिरिक्ताभावानभ्युपगमेनोक्तमिथ्यात्वाभावरूपसत्यत्वस्य" इति।

कत्वं विशेषणं देयम् । गोत्वाश्वत्वोभयस्मिन् गजनिष्ठाभावप्रतियोगित्वावच्छेदकीभूतगोत्वत्वाश्वत्वत्वयोरसत्त्वेऽपि एतत्सामान्यान्तर्गतगजत्वाभावव्याप्यत्वस्य सत्त्वेन तदवृत्तित्वाभावान्न व्यभिचारः इत्युक्तं, घटत्वादिष्वतिप्रसक्तस्य गजत्वाभावव्याप्यत्वस्य गजवृत्ति-उक्तोभयाभावप्रतियोगितावच्छेदकत्वासंभवादुक्ताभावप्रतियोगिता न्यूनानतिरिक्तगोत्वत्वाश्वत्वयोर्विरुद्धोभयस्मिन् अवृत्तित्वादुक्तव्यभिचारस्य सुस्थत्वात् । स्वरूपसंबन्धरूपावच्छेदकत्वस्य दृष्टान्ते रजततदभावोभयस्मिन् वर्तमानदृश्यत्वाभिधेयत्वादिषु सत्त्वात् दृष्टान्तेऽपि संभवेन दृष्टान्तासिद्धेर्दुर्वारत्वादयुक्तमिति भावेनाह **उक्तमसंबद्धमिति** । उक्तविशेषणं व्यभिचारावारकत्वादसंबद्धमिति भावः।

अद्वैतसिद्धेः सिद्धिसारस्य च असंबन्धं निरूपयति **घटादाविति** । घटादौ या निषेध्यता तस्याः अवच्छेदकमत्र घटत्वाद्यमेव न तु दृश्यत्वम् इत्यन्वयः । प्रमाणप्रमितत्वं चाह **हि** इति।

**अत्रेति** । घटो नास्तीति प्रतीतौ घटाभावे वा । विषयत्वं निरूपितत्वं वा सप्तम्यर्थः । **न दृश्यता इति** । संभवतिव्याप्यस्यावच्छेदकत्वे व्यापकस्यानवच्छेदकत्वनियमानुसारेण वा, पटत्वादिवृत्तिदृश्यत्वस्यातिरिक्तत्वान्न घटाभावप्रतियोगितावच्छेदकत्वमितिवा, असदवृत्तिदृश्यत्वस्यासदत्यन्ताभावप्रतियोगितावच्छेदकत्वासंभवाभिप्रायेण वा, दृश्यत्वस्याभावप्रतियोगितावच्छेदकत्वासंभवात्।

**अज्ञानस्य निवृत्त्यर्थं दृश्यत्वं ब्रह्मणोऽस्ति यत् ।**
**निषेध्यतावच्छेदकता दृश्यत्वे नैव संभवेत् ॥३२।**

**वन्हिरुष्णो न भवति पदार्थत्वाज्जलादिवत् ।**
**इत्यत्रापि पदार्थत्वे त्ववच्छेदकता भवेत् ॥३३॥**

**बाधप्रसक्तेरुच्छेदः स्यादेवं सति लोकतः।**
**मिथ्यात्वस्यापि मिथ्यात्वं तत्तु चेद्व्यावहारिकम् ॥३४॥**

**लिङ्गेन सिद्धं मिथ्यात्वं बाधितं त्वक्षरोधतः ।**
**वन्हौ शैत्यवदेव स्यात् त्वयैवोक्तं हि लिङ्गतः ॥३५॥**

**प्रत्यक्षस्य तु प्राबल्यं समाने विषये सति ।**
**लिङ्गसिद्धस्य दौर्बल्यं सर्वैरङ्गीकृतं हि तत् ॥३६ ॥**

दोषान्तरं चाह अज्ञानस्य **निवृत्त्यर्थमिति** । ब्रह्मणो भावाभावेन तत्र ब्रह्मणि दृश्यत्वस्य ब्रह्मज्ञानस्याज्ञानवारकत्वेन, अभ्युपगन्तव्यत्वात् तस्य निषेध्यतानवच्छेदकत्वात् ॥ ३२ ॥

**वन्हिरिति** । उष्णत्वाभावः साध्यः । उष्णत्वानुष्णत्वयोरुभयोरपि स्वस्वनिषेधप्रतियोगितावच्छेदकं पदार्थत्वमस्तु । तथा च पदार्थत्वावच्छिन्नप्रतियोगिताकाभावस्य वन्हावभावादुष्णत्वाभावाभावरूपोष्णत्ववद्वन्हेरबाधत्वाल्लोके बाधसामान्योच्छेदापत्तिः ॥ ३३ ॥ ३४ ॥

अथ उष्णत्वस्य वन्हौ प्रत्यक्षसिद्धत्वेन तदभावीयप्रतियोगितायाः पदार्थत्वावाच्छिन्नत्वेऽपि बाधो भवत्येवेति न तत्सामान्योच्छेदापत्तिरिति चेत्तत्राह **त्वक्षरोधतः इति** । यथाऽनुष्णत्वानुमाने प्रत्यक्षसिद्धोष्णत्वेन विरोधात् बाधस्याभ्युपगमः तथेहापि मिथ्यात्वानुमाने, सत्यत्वग्राहकप्रत्यक्षविरोधात् बाधोऽस्त्विति भावः । ननु शैत्यं औष्ण्यं चोभयं विरुद्धमपि व्यावहारिकमतः **शैत्यग्राहकलिङ्गं प्रत्यौष्ण्यग्राहिप्रत्यक्षं** प्रबलत्वाद्बाधकम् । इह मिथ्यात्वं तु पारमार्थिकसत्त्वविरोधि लिङ्गतः सिद्ध्यति । प्रत्यक्षं तु व्यावहारिकसत्वं जगतः ग्राहयति । अतो न बाध इति चेत्तत्राह **मिथ्यात्वस्यापिमिथ्यात्वमिति** ।

अयं भावः । प्रपञ्चे यत्साध्यं मिथ्यात्वं तन्न पारमार्थिकं, अद्वैतहानेः । तस्य मिथ्यात्वस्य मिथ्यात्वमुपगम्य सविकल्पकबाधादर्शनात्, व्यावहारिक सत्यत्वमेवाभ्युपगन्तव्यम् । तथा च भवद्रीत्या प्रपञ्चस्य व्यावहारिकसत्यत्वग्राहकप्रत्यक्षं प्रबलं सत् लिङ्गग्राह्यं व्यावहारिकमिथ्यात्वं कथं न बाधेत । तयोः साम्यात् । अन्यथा सर्वत्र बाधसामान्यं उच्छिद्येत इति ॥ ३५ ॥

एतच्च न केवलं त्वया किन्तु सर्वैरपि अङ्गीकृतमित्याह **सर्वैरङ्गीकृतमिति**। समाने विषये सति प्रत्यक्षस्य लिङ्गतः लिङ्गापेक्षया प्राबल्यं त्वयैवोक्तम् तु-अपितु इत्यन्वयः।

एतेन मानं परीक्षितत्वेन प्रत्यक्षं प्रबलं भवेत् इत्युक्तमपि निरस्तं वेदितव्यम् शतशः परीक्षायामपि न कस्यापि प्रत्यक्षस्य प्रत्यक्षान्तरासहकृतेनानुमानेन बाध्यता दृश्यते। करणनिर्दुष्टत्वग्राहकचिन्तनं ऋतेऽन्यस्याः परीक्षाया अभावेन तादृशनिर्दुष्टत्वं च अर्थक्रियाकारित्वनिश्चयाधीनमिति अर्थक्रियाकारित्वस्य चानु मानासाध्यत्वात् स्वभावत एव प्रत्यक्षस्य प्राबल्यम्। तथा च दुर्बलेनानुमानेनबाध्यत्वस्य तयोः सर्वथाऽसंभवात्। इदं रजतमिति प्रत्यक्षं प्रति नेदं रजतमिति प्रत्यक्षान्तरस्य, अर्थक्रियाकारित्वात् ततोऽपि प्रबलस्यैव प्रतिबन्धकत्वं नत्वनुमानस्येति बोध्यम्। एवं नभोनैल्यगुडतिक्तत्व शङ्खपीतत्वादि ग्राहकप्रत्यक्षादिष्वपि प्रत्यक्षान्तरैरेव बाध्यत्वमवधातव्यम्॥ ३६॥

॥ **दृश्यत्वविचारः** ॥

**दृश्यत्वं यदि धीवृत्तिविषयत्वं तदात्मनि।**
**फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्॥३७॥**

**ब्रह्मणोऽज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते।**
**इति त्वत्पूर्ववचनात् व्यभिचारि भविष्यति॥३८॥**

**फलव्याप्यत्वरूपं तन्निष्प्रमाणं त्वतीन्द्रिये।**
**धर्मादौ च घटादावप्यतीतादावसिद्धिमत्॥३९॥**
**अत्र यत्तु परेणोक्तं निरस्तं मम पूर्वकैः।**

हेतुविचारमुपक्रमते **दृश्यत्वमिति**। दृश्यत्वं नाम किमिति प्रश्नोत्तरत्वेन विकल्पितेषु मध्ये प्रथमं वृत्तिव्याप्यत्वरूपदृश्यत्वं दूषयति **यदीत्यादिना**। वृत्तिः अन्तःकरणपरिणामः। स च नयनादिद्वारा बहिर्निर्गत्य विषयं व्याप्नोति। तथा-

चान्तःकरणपरिणामकर्तृकव्याप्तिकर्मत्वं वृत्तिव्याप्यत्वमिति पर्यवसितार्थः । तस्यापि निष्कर्षमाह धीवृत्तिविषयत्वमिति । मिथ्यात्वाभाववति ब्रह्मणि वेदान्तजन्यधीवृत्तिविषयत्वाद्व्यभिचार इति भावः । आत्मनि - ब्रह्मणि शास्त्रकृद्भिरिति । फलं- वृत्तिप्रतिबिंबितचैतन्यम् । तद्व्याप्यत्वं- तत्संबन्धः । ईदृशं दृश्यत्वमात्मनि नास्तीत्यद्वैतशास्त्रकारैस्तन्मात्रं निवारितम् । न तु वृत्तिव्याप्यत्वरूपम् । अन्यथा ब्रह्मज्ञानस्यैवाभावे तेनाज्ञाननिवृत्यसंभावात् त्वत्प्राचीनैरेवात्मनो वृत्तिव्याप्यत्वाङ्गीकारादिति समुदितार्थः ॥

फलव्याप्यत्वरूपदृश्यत्वाङ्गीकारेपि न्यायामृतोक्तमेव दोषं पुनराह **निष्प्रमाणमिति** । प्रमाणविरुद्धमित्यर्थः। अतीन्द्रिये धर्मादौ घटादौ चातीतादौ त्वद्रीत्या मिथ्याभूतप्रपञ्चान्तर्गतत्वात्पक्षान्तर्भूते चैतन्यसंबन्धासंभवात् दृश्यत्वरूपहेतोरभावेनासिद्धिः ॥ ३७ ॥ ३८ ॥ ३९ ॥

[1]**अज्ञाननाशकज्ञानयोग्यत्वाभाव एव तत् ।**
**अवेद्यत्वेसतीत्येतत् योग्यताशून्यब्रह्मणि ॥४०॥**
**स्थितं धर्मादिविज्ञानात्तदज्ञानं विनाशितम् ।**
**इत्येतदनुभूतं यदसिद्धिस्त्वत्परिष्कृते ॥४१॥**

अथ वृत्तिव्याप्यत्वरूपदृश्यत्वस्य ब्रह्मणि संभवेनातिव्याप्तावस्वप्रकाशत्वरूपदृश्यत्वस्य स्वप्रकाशब्रह्मण्यभावेन नातिव्याप्तिः । स्वप्रकाशत्वं चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् । तथाचावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभाववत्वं दृश्यत्वमिति फलितम् । इत्थं च न ब्रह्मणि व्यभिचारः नाप्यतीतघटादावतीन्द्रियादौ वाऽसिद्धिरिति । न च फलव्याप्यत्वरूपवेद्यत्वाभावविशिष्टापरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वस्य ब्रह्मणीवमिथ्याभूतशुक्तिरूप्ये दृष्टान्ते सत्त्वेन, अविद्या।न्तःकरणादौ च सत्त्वेन तदभावरूपदृश्यत्वस्याभावात् दृष्टान्ते साधनवैकल्यं, हेत्वसिद्धिश्च स्यातामिति वाच्यम् । अपरोक्षव्यवहारयोग्यत्वपदेनाज्ञाननिवर्त-

---

[1] अयंनसाक्षादद्वैतसिद्धिसारस्यश्लोकः।किंत्वर्थानुवादस्तद्व्याख्यानस्य।

कवृत्तिविषयत्वयोग्यत्वरूपार्थस्य विवक्षितत्वात् । तथा च शुक्तिरूप्यज्ञानादन्तःकरणादिज्ञानाद्वा कस्याप्यज्ञानस्यानिवारणात् । अज्ञाननिवर्तकान्तःकरणपरिणामविषयत्वस्य तद्योग्यत्वस्य तत्राभावान्न हेतुवैकल्यासिद्धी इति अद्वैतसिद्धिसारसङ्ग्रहकारस्य भावं पूर्वपक्षत्वेनानूद्यसिद्धान्तोत्तरमाह **अवेद्यत्वे सतीत्येतदिति** । अवेद्यत्वे सत्यज्ञाननाशकज्ञानविषयत्वयोग्यत्वरूपस्वप्रकाशत्वस्य, योग्यत्वरूपधर्मसामान्याभाववति ब्रह्मण्यभावेन व्यभिचारस्य दुर्वारत्वमिति भावः। तथातीन्द्रिये धर्मादौ फलव्याप्यत्वाभावस्य, धर्माद्यज्ञाननिवर्तकज्ञानविषयत्वयोग्यत्वस्य च सत्वादस्वप्रकाशत्वाभावादसिद्धिश्च स्यादेव ॥ ४० ॥ ४१ ॥

**अज्ञातत्वादिरूपेण चिद्वेद्यत्वं तु चित्यपि ।**

**अन्यापेक्षाभिलापत्वं अस्त्यौपनिषदात्मनि ॥४२॥**

**त्वदुक्ता स्वप्रभत्वं तु रूप्ये नास्त्यस्ति चात्मनि ॥४३॥**

अथ चैतन्यविषयत्वं, चित्संबन्धित्वं वास्तु दृश्यत्वपदार्थः । तेनात्मनि न व्यभिचारः । आत्मनः चैतन्यरूपत्वेन स्वस्य स्वविषयत्वस्य स्वसंबन्धित्वस्य वा अभावात् भेदव्याप्यस्याभेदातिरिक्तसंबन्धित्वस्य स्वस्मिन् चित्यसंभवात् इति चेत्,तदाह **अज्ञातत्वादिरूपेणेति**।

अयमभिप्रायः। चिति चिद्विषयत्वं परिहृत्य हि व्यभिचारो वारणीयः चित् न चिद्विषयः इति ज्ञात्वैवोक्तपरिहारे वक्तव्ये तस्य ज्ञानस्य चिद्रूपत्वाद्व्याहतेः अशक्यवारणोयं व्यभिचारः । आदिपदेन चित् स्वप्रकाशमिति ज्ञानविषयत्वं ग्राह्यम् ।

नन्वस्तु तर्हि स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतत्वं दृश्यत्वं , एवंच नानुपपत्तिरिति चेत् तत्र मूलोक्तसंग्रहमेव पुनरनुवदति **अन्यापेक्षाभिलापत्वमिति** । "एकमेवाद्वितीयमिति" श्रुत्या जायमानसंविदमपेक्ष्यैव ब्रह्मव्यवहारसद्भावाद्व्यभिचारः इत्यर्थः ॥४२॥ एतावदुक्तास्वप्रभत्व अस्वप्रकाशत्व रूप दृश्यत्वस्यात्मनि सत्वाच्छुक्तिरूप्येऽभावाद्व्यभिचारदृष्टान्तसाधानवैकल्ये स्यातामित्याह **त्वदुक्तास्वप्रभत्वमिति** ॥४३॥

**पूर्वपक्षः - स्वापरोक्षेऽनपेक्षत्वं स्वप्रकाशत्वमात्मनः।**

**सिद्धान्तः - इतित्वदुक्तं युक्तं न स्वापरोक्षं तु दुर्वचम्।**
**चैतन्यमात्रं न क्कापि स्फुरत्यन्याविशेषितम् ॥४४॥**

एवं स्वापरोक्षे स्वातिरिक्तानपेक्षत्वं स्वप्रकाशत्वं तदन्यत्वं दृश्यत्वमित्युच्यते। तथा च यत्साक्षादपरोक्षाद्ब्रह्म इति श्रुत्या ब्रह्मापरोक्षस्यानन्याधीनत्वं प्रतीतमिति न व्यभिचारः। घटादेः स्वापरोक्षे चैतन्याधीनत्वं सुप्रसिद्धमिति नासिद्धिः। नापि शुक्तिरूप्ये साधनवैकल्यमिति पूर्वपक्षिण आशयमनूद्य निराह **इति त्वदुक्तमिति**। तद्वचसः अयुक्तत्वे हेतुमाह **स्वापरोक्षं तु दुर्वचमिति**। स्वापरोक्षे स्वातिरिक्तानधीनत्वं स्वप्रकाशत्वमित्युक्तौ किमिदं स्वापरोक्षत्वं ? इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं उत चित्। आद्येपि किं स्वविषयकं उत स्वाभिन्नम्। नाद्यः आत्मनि इन्द्रियसन्निकर्षानभ्युपगमात्। यद्यभ्युपगम्यते तदा स्वापरोक्षे आत्मनः स्वातिरिक्तेन्द्रियाधीनत्वेन दृश्यत्वापत्तेः। न द्वितीयः। द्वितीयकल्पप्रवेशापत्तेः। स्वाभिन्नोक्तज्ञाने उक्तरीत्या इन्द्रियापेक्षावश्यंभावाद्ब्रह्मणः अस्वप्रकाशत्वापाताच्च। नान्त्यः। स्वस्य स्वविषयकत्वाभावात्, घटादेः चिद्रूपत्वाभावात् स्वविषयकचिति स्वातिरिक्तानधीतत्वोक्तावसंभवात् स्वरूपचितीत्युक्तौ च तस्यैवाभावेन स्वातिरिक्ताधीनत्वरूपप्रतियोगिनः अस्वप्रकाशत्वस्य घटादावभावादुक्तानुमाने हेत्वसिद्धेश्च। किञ्च स्वापरोक्षे इतरानपेक्षत्वं ब्रह्मणः तन्मात्रस्फुरणे सत्येव संभवतीति निर्विकल्पकस्फुरणस्यैव सिद्धौ उक्तस्वप्रकाशत्वस्याप्यसिद्धिरितिभावेनानुभवं दर्शयति **चैतन्यमात्रमिति** ॥४४॥

**अहं कर्तेति भोक्तेति सविशेषं प्रकाशते।**
**तदेवस्वप्रकाशत्वं जडस्यापि भवेद्धि तत् ॥४५॥**

**अन्यानधीनापरोक्ष्यभिन्नत्वं यदि दृश्यता।**
**भिन्नत्वस्यापिमिथ्यात्वात् स्वप्रकाशं जडं भवेत्।**
**शुक्तिरूप्ये च नो हेतुः अविद्यावृत्तिगोचरे ॥४६॥**

**पूर्वपक्षः शब्दादजन्यधीवृत्तिविषयो दृश्यमिष्यते।**

**न शुद्धतुच्छयोरेवंव्यभिचारोयतस्तयोः ॥**

**शब्दैकजन्यधीवृत्तिगोचरत्वं मतं तयोः ॥**

जडस्यापीति । स्वरूपमात्रावगाहिजडव्यवहारे जडापरोक्षे इतरानपेक्षत्वस्य तत्र संभवादसिद्धिः स्यादेवेति । अधिकं तु वादावल्यां द्रष्टव्यम् ॥४५॥ अद्वैतसिद्धान्तरीत्या दृश्यत्वं खण्डयति - **भिन्नत्वस्यापीति** - भेदस्याद्वैतिरीत्या मिथ्यात्वेनाभेदसत्यत्वादसिद्धिः॥ स्वापरोक्षस्यैवाभावात् स्वापरोक्षे इतराधीनत्वरूपास्वप्रकाशत्वरूपदृश्यत्वाभावात् साधनवैकल्यमित्यर्थः । तत्र हेतुमाह **अविद्यावृत्ति गोचरे** इति साक्षिविषये इत्यर्थः । तुच्छं शशविषाणादि, शुद्धं ब्रह्म । तयोः शब्दैक गोचरत्वमद्वैतिभिः, मतं-संमतम् । अतो न व्यभिचारः ॥ ४६ ॥

**इति त्वदुक्तं युक्तं न धर्मे शब्दैकगोचरे ।**

**असिद्धिर्योगगम्यत्वे तस्य तुच्छेऽपि किं न तत् ॥४७॥**

**शब्दादजन्यधीवृत्तिविषयत्वं च ब्रह्मणि ।**

**सर्वप्रत्ययवेद्यत्वं स्वीकृतं ब्रह्मणि त्वया ॥४८॥**

**सन्घटश्चेत्यधिष्ठानब्रह्मवस्त्ववभासते ।**

**इति त्वदु क् त्या त्वत्पू र्व वचनाच्च विनिश्चितम् ॥४९॥**

**परागर्थप्रमेयेषु या फलत्वेन संमता ।**

**संवित्सैवेह मेया स्याद्वेदान्तोक्तिप्रमाणतः ॥५०॥**

**सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते ।**

**प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥५१**

**इति त्वादार्यवचनं अतोऽनैकान्तिकं ध्रुवम् ।**

तदेतत्खण्डयति- **इतित्वदुक्तमिति** प्रपञ्चांतर्गतधर्मे शब्दमात्रजन्यवृत्तिविषयत्वेन हेत्वसिद्धिः । **योगगम्यत्वे इति** । शब्दातिरिक्तयोगेनापि जायमानप्रत्यक्षज्ञानविषयत्वं यदि तस्य धमदिस्तर्हि इति भावः । तुच्छेऽपि योगगोचरत्वमस्तु इति हार्दम् ॥४७॥

दोषान्तरं चाह **ब्रह्मणीति**। शब्दादजन्या या धीः प्रकृतानुमानजन्यानुमितिः असद्विलक्षणत्वे सति ब्रह्मान्यद्विश्वं मिथ्या इत्याकारिका तत्र पक्षतावच्छेदककोटिप्रविष्टत्वेन तयोरसद्ब्रह्मणोस्तद्विषयत्वात् तत्र व्यभिचारः सुस्थ इत्यर्थः। तुच्छेऽपि किं न तदिति पूर्वमुक्तत्वादत्र ब्रह्ममात्रोक्तिरिति न न्यूनता।

इदमत्राकूतम्। शब्दाजन्यधीविषयत्वं यदुच्यते तच्छब्दमात्रजन्यज्ञानविषयत्वभिन्नत्वपरं ? उत शब्देतरमात्रजन्य ज्ञानविषयत्व परम् ? अथवा शब्दजन्य ज्ञानविषयत्वे सति शब्देतरजन्यज्ञानविषयत्वपरं ? आहोस्वित् शब्दाजन्यज्ञानविषयत्वमात्रपरं विवक्षितं वा ?। नाद्यः। उक्तलक्षणवाक्यस्य एतदर्थाबोधकत्वात्। बोधकत्वेपि सर्वस्याप्यर्थस्य यत्किञ्चिदनुमानजन्यज्ञानविषयत्वेनातिव्याप्तेः। न द्वितीयः। प्रात्यक्षिकानुमेयेष्वपि शाब्दिकप्रत्ययगोचरत्वात्। घटादिषु सर्वत्राव्याप्तेः प्रकृतेऽसिद्धेः। न तृतीयः। दत्तोत्तरत्वात्। न तुरीयोऽसंभवात्। तथाचेदं लक्षणमुक्तं सर्वथा युक्तं नेति।

दोषान्तरं तन्मतरीत्यैवाह **सर्वप्रत्ययवेद्यत्वमिति**। अयं घटः इत्यत्रापि ब्रह्मणोऽपि विषयत्वाङ्गीकारात् व्यभिचारस्तदवस्थ इत्यर्थः॥४८॥

तदङ्गीकारोक्तेस्तद्वचनमेव दर्शयति **सन्घटश्चेति**। इदं सन्घटः इति प्रत्यये ब्रह्मावभासनं ब्रह्मणः सर्वप्रत्ययवेद्यत्वमन्तरा न घटते। अतस्तदभ्युपगतं त्वयेति भावः॥४९॥

न केवलं त्वयाङ्गीकृतं किन्तु त्वत्प्राचीनैरपीति तेषामेव वचनमुदाहरति **परागर्थप्रमेयेष्विति**। सुरेश्वरवार्तिकमिदं। अयमर्थः। अद्वैतमते अर्थाः द्विविधाः प्रत्यञ्चः पराञ्चश्चेति। तत्र शरीरान्तर्वर्तिनः अन्तःकरणादिसंश्लिष्टस्यात्मनः प्रत्यङ्ङात्मा इति व्यवहारः। बहिर्वर्तमानस्य तु पराक्त्वम्। ये च पराञ्चः आत्मानः तद्रूपाणि यानि प्रमेयाणि तेषु फलभूता या संवित् घटाद्यवभासिका चित्, सैव वेदान्तोक्तिप्रमाणतः 'सर्वं खल्विदं ब्रह्मे' त्युपनिषदुक्त्यनुसारेण मेयोऽर्थः सर्वज्ञानविषयीभूतार्थः इत्यधिकारिभिर्ज्ञेय इति।

**सर्वप्रत्ययवेद्ये चेति** । अयमर्थः । सर्वे ये प्रत्ययाः प्रतीतयः तासु सर्वास्वपि वेद्यं यत् व्यवस्थितं व्याप्य स्थितं ब्रह्म तद्रूपे आत्मनि चैतन्ये प्रपञ्चस्य प्रकर्षेण विलयः शब्देन वेदरूपेण प्रतिपाद्यते निरूप्यते इत्यर्थः । तथा च शब्देन प्रतिपाद्यते वेदान्तोक्तिप्रमाणतः इत्युक्त्या शब्दप्रमाणेन ब्रह्मणि अशाब्दप्रमाविषयत्वस्य त्वत्पूर्वाचार्यैरभिमतत्वान्निरुक्तदृश्यत्वं तत्र व्यभिचरितम् । अन्यथाऽपसिद्धान्त इत्याशयवानाह **इतित्वदर्थवचनमिति** । यतोऽस्ति इतिशेषः । अतः इत्यन्वयः । अनैकान्तिकं व्यभिचारः । अपरोक्षप्रतीत्यानुमानिकप्रतीतीनामपि ब्रह्मविषयकत्वादिति भावः । तुच्छब्रह्मणोरेवेति ज्ञेयम् ॥ ५१ ॥

**दृश्यत्वे प्राप्तमन्यत्तु मत्पूर्वैरेव खण्डितम् ॥५२॥**

**दृश्यत्वे इति** । अन्यत् सप्रकारकधीवृत्तिविषयत्वादिकं दृश्यत्वलक्षणं, मत्पूर्वैः मम प्राचीनैरेव स्वयं न्यायामृतकारैः, तरङ्गिणीकारैः, कण्टकोद्धारकर्तृभिः, सौगन्ध्यकारैश्च ।

तथा हि सप्रकारकत्वं नाम सोपाख्यधर्म प्रकारकत्वमित्यद्वैतसिद्धिकृन्मतम् । सोपाख्यत्वं चास्तीतिप्रतीतिविषयत्वसाहित्यमिति व्याख्यातं सिद्धि व्याख्यायाम् तथाचेदृशसप्रकारकवृत्तिविषयत्वं ब्रह्मणि तुच्छेवाऽस्तीति व्यभिचारो दुर्वारः । परं प्रति हेतोः समन्वयसमये व्यभिचारशङ्कावारणार्थं वा तुच्छं न वेद्यमिति अवेद्यत्वप्रकारकतुच्छविशेष्यकशाब्दिकप्रतीतेरावश्यकत्वेन, वेद्यत्वाभावस्य सोपाख्यत्वस्यात्वय्यैव साधितत्वाच्च तुच्छे व्यभिचारः । यद्वाऽसतः मिथ्यात्ववादिनैव तव विवादादप्रतीतत्वहेतुनैव त्वयाऽसन्न मिथ्येति साधनीयत्वेन च निष्प्रकारकानुमितेरभावाच्च अशक्यवारणोऽयं व्यभिचारवराकः । सर्वं क्षणिकमिति वादिनं प्रति सर्वान्तर्भूततुच्छेऽपि क्षणिकत्वप्रसक्तौ अकरणत्वानुमानेनैव साध्यस्याक्षणिकत्वस्य संपाद्यत्वाद्वा उक्तदोषतादवस्थ्यात् । तुच्छाधिकरणकनिरूपाख्यधर्मप्रकारकज्ञानाकारोत्पत्त्यसंभवाच्च भावधर्मप्रकारक तुच्छविशेष्यकज्ञानानभ्युपगमात् । मायावादिनाऽभावस्यापि भागासिद्धिपरिहाराय सोपाख्यत्वाभ्युपगमादसद्विशेष्यक निरूपाख्यधर्मप्रकारकज्ञानस्यैवत्वन्मतेऽभावात् ।

ब्रह्मणोपि जीवाभेदसाधकानुमानवेद्यत्वात्, अहं ब्रह्मास्मीति सप्रकारकश्रौतप्रतीतिं प्रति, अहमेव शुद्धं ब्रह्मेति प्रपञ्चबाधक मुक्त्युपायभूतसप्रकारकसाक्षात्कारं प्रति वा त्वन्मतेऽपि विषयत्वस्य सत्त्वात्तत्रापि व्यभिचारः स्यादेव। यदि च तादृशोक्तसप्रकारकसाक्षात्कारस्य न मुक्त्याधायकत्व,तस्य सविकल्पकत्वादद्वैतमते निर्विकल्पकस्य मोचकत्वमिति उक्तज्ञानविषयः न शुद्धं ब्रह्म किंतु उपहितमेव। तस्य च मिथ्यात्वान्नानुपपत्तिरिति उच्यते, तर्हि "निष्प्रकारकज्ञानविषयभूते शुद्धे न व्यभिचारः" इत्यद्वैतसिद्धौ उक्तमसङ्गतं स्यात्। निष्प्रकारकज्ञानविषयः शुद्धं ब्रह्म इति ज्ञानाभावे व्यभिचारपरिहारासंभवात्। अत्र प्रतीतस्याप्युपहितत्वेन मिथ्यात्वे तु शुद्धे व्यभिचारः स्यादेव : इति स्वव्याघातकमिदं वचनं। स्वरूपेण भातस्यैव उपहितत्वेनापि भानं संभवति। अन्यथा विशिष्ट निश्चये सत्यपि संशय एव स्यादिति।

यत्तूक्तं सौगन्ध्यविमर्शे — "तुच्छस्य अकारणत्वात्तुच्छं न क्षणिकमिति नानुमानसंभवः। तुच्छस्य धर्मित्वाभावेन हेतोरपक्षधर्मत्वात्। शब्दतन्मूलकप्रमाणान्यतराजन्यवृत्तिविषयत्वस्यैव शब्दाजन्यवृत्ति विषयत्वपदेन विवक्षणे तु न कोऽपि दोषः" इति। तन्मन्दम्। क्षणिकत्वप्रसक्तेः प्रकारान्तरेण वारणासंभवात्। अकारणत्वाभावहेतुनैवोक्तानुमानविषयत्वस्य भवतानुमितत्वात्। तुच्छस्य धर्मित्वाभावे कथं तुच्छस्याकारणत्वाभाववचनं, तुच्छस्य धर्मित्वाभाववचनं वा संगच्छेत। तुच्छे भावधर्मानङ्गीकारेपि अभावधर्मस्य निष्कण्टकमभ्युपगन्तव्यत्वात। वृद्धवाक्यस्याप्ययं घटः इत्यपरोक्षं प्रति सहकारित्वेन मूलत्वेनासिद्धेश्च। धर्मादीनां स्वर्ग,नरकाणां च शब्दतन्मूलकप्रमाणान्यतरजन्यावृत्तिविषयत्वेन तत्रासिद्धेश्च। एतेन यागादिधर्माणामपिस्वरूपतो यागत्वादिना प्रत्यक्षादिविषयत्वान्न भागासिद्धिरिति विमर्शोक्तिरपि प्रत्युक्ता। श्रुतिसाहाय्यं विना यागादेरेव स्वरूपतोऽप्राप्तत्वात् कथं प्रत्यक्षमात्रगम्यत्वं तस्य?। यागादुत्पन्नपुण्यानां च सुतरामप्रत्यक्षत्वाद्भागासिद्धिर्भवेदेव।

अथ सत्तादात्म्यत्व-सत्तादात्म्यान्यतरवत्वं दृश्यत्वमिति परिष्क्रियते। तथा च "सन्घटः" "सन्पटः" "सदिदं नरजतमिति" प्रतीतिभिः रजते, घटादिषु च

सत्तादात्म्यस्याव गाहनात्तादात्म्ये च तादात्म्यत्वस्य सत्वाच्च नासिद्धिः। शशविषाणं सदिति प्रतीतेरभावेनासति न व्यभिचारः। सविकल्पक प्रतीतावुपहितात्मन एव विषयत्वोपगमान्न शुद्धे व्यभिचार इति चेत्। तदसत् तुच्छेऽपि सत्वनिषेधार्थं निषेधप्रतियोगित्वार्थं च सत्त्वप्रसक्तेरावश्यकत्वेन सत्तादात्म्य संभवाद् व्यभिचारः। यत्तूक्तं सौगन्ध्यविमर्शे सत्तादात्म्यं प्रति सति कल्पितत्वं नियामकं न तु कालत्रयाविद्यमानत्वमात्रम्। तथा च शुक्तिरूप्यादीनामिव तुच्छस्य सत्यकल्पितत्वान्न सत्तादात्म्य संभवः इति तन्नमनोरमं। सत्तादात्म्यस्य सत्वकल्पनेनाप्युपपत्या उक्त सति कल्पितत्वस्य नियामकत्वनियमासंभवात्। "तुच्छं सत्" सत् तुच्छमिति भ्रमसिद्धसत्तादात्म्यस्यासत्यपि संभवात् असत्प्रतियोगिकवैलक्ष्यण्याभ्युपगमवदसत्प्रतियोगिकतादात्म्यस्यापि सति प्रातीतिकत्वेनाभ्युपगमार्हत्वेन व्यभिचारः सुस्थः स्यात्। सत्तादात्म्यस्यऽसति कल्पितत्वेन वा संभवात्।

किञ्च कल्पितत्वं ह्यारोपितत्वम्। यथा शुक्तौ सद्रूपायामारोपितत्वं रजते निश्चितं तथा न प्रपञ्चे। तस्य सति ब्रह्मणिआरोपितत्वस्य त्वयैतदनुमानप्रयोगादेव साध्यत्वात्। सत्तादात्म्यरूपहेतोः प्रपञ्चे सत्त्वनिश्चयाभावे नुमानस्यैवानुद्भावप्रसङ्गात्, प्रयोगेपि संदिग्धासिद्धिप्रसङ्गाच्च तन्निश्चयावश्यकतया, तन्निश्चयस्य च नियामकीभूत सति कल्पितत्वनिश्चयाधीनत्वेनान्योन्याश्रयाद्वा, सत्तादात्म्यं प्रति सति कल्पितत्वस्यनियामकत्ववचनमयुक्तमिति। तथा त्रिकालबाध्यत्वस्य नियामकत्वोक्तिरप्ययुक्तेति निश्चेतव्यम्। जगति त्रिकालबाध्यत्वस्यापि (निषेधप्रतियोगित्वस्यापि) एतदनुमानप्रयोगादेव साध्यत्वात्। अतः सत्तादात्म्यं प्रति, सत्त्वप्रतीतिगोचरत्वस्यैव नियामकत्वं वक्तव्यम्। तत्राप्यसतोऽप्यसदस्तीति भ्रमगोचरत्वेनातिव्याप्तिवारणार्थं सत्वप्रकारक प्रमितिविषयत्वस्य नियामकत्वं युक्तं भवेत्। तदस्मन्मतरीत्या ब्रह्मण्यप्यस्तीति व्यभिचारः। त्वन्मतरीत्या ब्रह्मनिर्विकल्पकज्ञानमात्रस्य प्रमात्वेनेतरस्य भ्रमत्वेन प्रपञ्चेऽसिद्धेः। किञ्च किमिदंसत् विवक्षितं व्यावहारिकं वा पारमार्थिकं ब्रह्म वा साधारणं वा नाद्यः। प्रपञ्चेसिद्धेः। न द्वितीयः। दृष्टान्ते साधनवैकल्यात्। नान्त्यः। आरोपितत्वमात्रेणाप्युपपत्तेः सतीतिवैय्यर्थ्यात् सर्वस्यापि प्रमाअविषयत्वेन दृश्यत्वमेवारोपितत्वमिति आत्माश्ययापत्तेश्च। अधिकं तु दृश्यत्वाद्यनुमानेष्वप्येत एव दोषा इति मूलटीकाव्यख्यानावसरे द्वैतद्युमणौ द्रष्टव्यम्।

यच्च लघुचन्द्रिकायां परिष्कृतं स्वातिरिक्तचिदधीनस्वस्फुरणकत्वं दृश्यत्वमिति "तदपि न क्षोदक्षमम्। "तत्वमसी" ति त्वंपदबोध्यात्मनः जीवस्वरूपश्वेतकेतोः स्वविषयकसविकल्पस्फुरणस्योपदेष्टृगुर्वधीनत्वेनात्मनोऽपि दृश्यत्वापत्याऽनैकान्तिकता स्यात्। निर्विकल्पबुद्धेः घटादावपि समानत्वेनासिद्धेः। एतदेवाभिप्रेतं सौगन्ध्यकारैरपि "घटादिव्यवहारे चैतन्यापेक्षायां प्रमासिद्धेः। ब्रह्मघटयोः स्वंप्रति स्वस्फुरणाभावस्य तुल्यत्वेनान्यं प्रति स्फुरणे तूभयोः स्वातिरिक्तसंविदपेक्षणादिति"ग्रन्थे।

ननु "स्वतिरिक्तसंविञ्जन्यस्वविषयापरोक्षत्वादिव्यवहारकत्वमेवस्वव्यवहारे स्वतिरिक्तसंविदपेक्षानियतित्वं न तु स्वकर्तृकव्यवहारे इतरचैतन्यापेक्षाराहित्यत्वरूपं सौगन्ध्यकल्पितम्। तथा च ब्रह्मघटयोः स्वं प्रति स्वस्फुरणाभावस्य तुल्यत्वेनान्यं प्रति स्फुरणे तूभयोः स्वातिरिक्तसंविदपेक्षणादित्यनुक्तोपालंभनमिति चेन्मैवम्। "शुद्धं स्वप्रकाशमि" ति स्वविषयापरोक्षं प्रति स्वातिरिक्त सविकल्पकवृत्तेर्जनकत्वावश्यकतया शुद्धे व्यभिचारापातात्। यद्यत्र प्रतीतस्यापि शुद्धत्वं नाभ्युपेयते तर्हि तदस्वप्रकाशत्वबुद्धेः निर्बाधत्वेन प्रमात्वापत्तिः। न च तस्यापि ब्रह्मप्रमा बाध्यत्वमिति वाच्यम्। तथात्वे तत्र प्रमाणाभावेन ब्रह्मप्रमानन्तरमेवास्यानुमानस्य प्रयोगार्हता स्यात्॥

। इति दृश्यत्वविचारः।

  

## ॥ जडत्वहेतु विचारः॥

**पूर्वपक्षः** अज्ञानत्वं जडत्वं स्यादनात्मत्वमथास्तु वा।
अर्थोपलक्षितं भानं ज्ञानत्वेनोच्यते श्रुतौ॥५२॥

तन्न व्यभिचरेन्मोक्षदशायामपि चिद्घने।
एवमानन्दभिन्नत्वं अनात्मत्वं भवेन्नयात्।
ब्रह्मत्वं विषयोत्थेऽपि सुखे ज्ञानात्मनिस्वतः इति।

**सिद्धान्तः** इति त्वदुक्तं युक्तं न नृशृङ्गे व्यभिचारतः।
अर्थोपलक्षितं भानं ज्ञानमित्युच्यते श्रुतौ॥५३॥

इत्युक्तं यत्त्वया तन्न तर्हि भोज्योपलक्षिता।[1]
भुजिक्रियापि ब्रह्म स्यात् श्रुतेः स्वाभाविकीति च।५४।

जडत्वहेतोर्दुष्टत्वमुपपादयितुं पूर्वपक्षिणः श्लोकमनुवदति **अज्ञानत्वमिति**- ज्ञानभिन्नत्वमित्यर्थः। ज्ञानत्वं च वृत्त्युपरक्तचैतन्यमेव न तु केवलवृत्तिः केवलचैतन्यं वा। अतो वृत्तौ नासिद्धिः भागासिद्धिः। ननु चैतन्ये परं व्यभिचारः भवति इति चेत्तत्राह **अर्थोपलक्षितमिति**। चित्स्वरूपस्यैव मोक्षत्वात्, चित्यर्थोपलक्षितप्रकाशस्वरूपत्वस्य व्यवहारदशायां, मोक्षदशायां वा सुगमत्वान्न व्यभिचार इति पूर्वपक्षिण आशयः। तदेतन्निराचष्टे - इति **त्वदुक्तमित्यादिना** - वृत्ति प्रतिबिंबित चैतन्यस्य ज्ञानत्वेन वृत्तावसिद्धिपरिहार संभवेऽपि निःस्वरूपे त्वद्रीत्या वृत्तिसामान्यप्रविषयेऽसति ज्ञानस्वरूपत्वासंभवात्सद्वैलक्षण्यवज्ज्ञानभेदस्याप्यभ्युपगमार्हत्वेन व्यभिचार इत्यर्थः। नन्वर्थोपलक्षितप्रकाशत्वं ज्ञानत्वमित्युच्यते।

---

[1] लघु टि। ज्ञातृज्ञेय विहीन ते ब्रह्मज्ञानात्मकं यदि। भोक्तृ-भोज्य विहीनाऽपि भवेत्तर्हि भुजिक्रिया। (न्यायामृतम्।)

तद्भिन्नत्वं च सत्त्वान्तर्भावेन विवक्षितमिति न शुद्धतुच्छयोर्व्यभिचारः इति चेन्नेत्याह **तर्हीति**।

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेति श्रुतेः ज्ञानवदात्मनः क्रियारूपत्वस्यापि सत्त्वात् भोज्योपलक्षितभोजनक्रिया आत्मा स्यादित्यर्थः। नचेष्टापत्तिः। तथा सति भोज्यभोक्तृविहीनमपि किंचिद्भोजनं स्यात्।

अत्रार्थोपलक्षितप्रकाशभिन्नत्वं जडत्वमित्युक्तौ दोषमाहुः सौगन्ध्यकाराः। मोक्षान्वयिशुद्धस्वरूपस्य कदाप्यर्थवैशिष्ट्याभावेनार्थोपलक्षितत्वासंभवादिति। तदेतन्निराकर्तुं स्वस्वपूर्ववचनविरोधमप्यविगणय्य तद्विमर्शे प्रयत्नः कृतो दृश्यते। मोक्षावस्थायि शुद्धचैतन्यस्यैवाद्वैतमते प्रपञ्चोपादनत्वेन तस्य व्यवहारदशायामर्थवैशिष्ट्यमनपोहमेव इति। तदतीव हास्यम्। "विष्णवे शिपिविष्टाये" ति श्रुत्या विशिष्टस्य भानात् विशेष्यस्यापि विषयत्वाद्व्यभिचारमाशंक्य "विशेष्यतापन्नस्य विषयत्वेपि क्षत्यभावात्तस्य अद्वैतसिद्धौ विशिष्टस्य मिथ्यात्वाभ्युपगामात् इति" विशेष्यस्य च मिथ्यात्वोक्तेः कथमिदानीमर्थविशिष्टस्य शुद्धत्वम्। किञ्च भवतैव तस्मिन्नेवावसरे वृत्तिसमानकालीनं चैतन्यं वृत्त्युपहितं, तच्च न शुद्धम्। तथा च वृत्तिविषयत्वं तात्कालीनस्यैव चैतन्यस्येति, न शुद्धविषयतापत्त्या व्यभिचारावकाश इत्युक्तम् एवं विशिष्टस्य शुद्धत्वपरिहारात् कथमिदानीं शुद्धब्रह्मणः अर्थवैशिष्ट्योपपादने प्रयत्यते। अपसिद्धांतात् स्ववचनविरोधात्। विट्ठलेशीयेऽपि" शुद्ध चिद्रूपस्य प्रत्याख्यातुमशक्यतयेति इति गौडवचनव्याख्यानावसरे विशिष्टस्योपहितस्य वा तस्य सिद्धान्तेपि मिथ्यात्वादित्यभिहितं विरुद्ध्येत। सर्वसंबन्धशून्ये। इति सिद्धिग्रन्थव्याख्यानावसरे गौडब्रह्मानन्दीये "उपहितात्मन एवोपादानत्वात् साक्षित्वाच्च शुद्धे सर्वासंबन्धिनीति" वक्ष्यमाणत्वाच्च विरोधः स्यात्।

स्वाभाविकीचेति श्रुत्युदाहरणेन ज्ञानस्य स्वाभाविकसविषयकतामुपपादयति। तेनाद्वैतसिद्धौ ज्ञानस्य हि सविषयत्वं विषयसंबन्धः स च न तात्विकः किन्त्वाध्यासिकः वक्ष्यमाणरीत्या तात्विकसंबन्धस्य निरूपयितुमशक्यत्वादतो न

तस्य स्वाभाविकत्वं, न हि शुक्तौ रूप्यं स्वाभाविकं इत्युक्तं दूषितं भवति। तथाहि श्रुतौ हि ब्रह्मणः ज्ञानरूपत्वमभिहितम् । बाध्यत्वप्रसङ्गात् न तत् भ्रमरूपम्। किन्तु प्रमैव विशेष्यावृत्यप्रकारकत्वरूपप्रमात्वमपि सविषयकस्यैव युक्तम् । अन्यथा घटस्यापि प्रमात्वापत्तेः। अतः विषयसंबन्धरूपस्य सविषयकत्वस्य च तात्विकत्वमवर्जनीयम् । अन्यथा ज्ञानविषयतत्संबन्धानामन्यतमाध्यासेऽपि प्रमात्वासंभवाद्ब्रह्मणः प्रमात्वं न स्यात्।

किञ्चाज्ञानत्वरूपहेतोः ज्ञानार्थं ज्ञानज्ञानस्यावश्यकत्वात् तस्य सविषयकत्वनिर्विषयत्वान्यतरनिश्चयाधीनत्वेन निर्विषयकत्वनिश्चयापेक्षायां सविषयकत्वस्याध्यस्तत्वनिश्चयावश्यकतया तस्य चसविषयकत्वाध्यासनिश्चयस्योक्तानुमानाधीनत्वेन चक्रकापत्तेः। सविषयकत्वाध्यासस्य संदिग्धत्वेन संदिग्धासिद्धिः स्यात् । अत्र सौगन्धविमर्शे प्रमाणजन्यं, दोषजन्यं वा ज्ञानमेव सविषयकमिति नियमः।.न तु स्वरूपज्ञानमपीति ज्ञानस्य सविषयकत्वनियमं संकोचयितुं, ब्रह्मणि व्यभिचारं च परिहर्तुं प्रयतितम्। तत्र पृच्छयते। किमर्थोऽयं संकोचः। ज्ञानत्वस्य सर्वत्र साम्यात्। यद्वस्तुगत्या निर्विषयक। तस्य कुतो वा ज्ञानत्वाग्रहः। किञ्च ज्ञानस्वरूप आत्मा प्रवृत्तिनिमित्तवत्तया तच्छब्दवाच्यः, अथवा रूढ्या, उत सांकेतिकतया। नाद्यः।ज्ञेयविषयीकारित्वातिरिक्तस्य प्रवृत्तिनिमित्तस्याभावात्। न द्वितीयः। प्रमाणजन्ये, दोषजन्ये वा सविषयज्ञाने एव रूढेः सत्वात्। न तृतीयः आत्मनः ज्ञानेत्याकारेणाकरणाद्यभावात्। तथानुपलंभात्।

अपि च ज्ञानेत्यत्रल्युटः न करणार्थकत्वं, वृत्तावात्मनि च साधनत्वासंभवात् न भावार्थकत्वं आत्मनः त्वन्मते क्रियारूपत्वाभावात्। विषयतातिरिक्तकर्मणः जानातेरभावेन ब्रह्मणोऽपि सविषयकत्वापत्या न क्रियारूपत्वाभ्यु पगमसंभवोऽपि स्यात् । नाप्यधिकरणार्थकता । नाद्वैतब्रह्मणि कस्यचिति गुणस्य, विशेषस्य, कर्मणो वाभ्युपगमः अद्वैतवादिन इति, ज्ञानस्य गुणत्वेन वा, क्रियात्वेन वा, ऽभेदेपि विशेषेण वात्मन्याधाराधेयसंबन्धस्य दुरुपपादत्वात्। तस्मादद्वैतमते आत्मनः ज्ञानरूपत्वोपपादनमसंभावितमेव। अस्मन्मते तु गुणगुणिनोः सविशेषाभेदाङ्गीकारादात्मनां क्रियास्वरूपत्वाङ्गीकाराच्च ज्ञानस्वरूपत्वमात्मनां (ब्रह्मणः) संभवान्न कापि क्षतिः। एवमानन्दभिन्नत्वं जडत्वमित्युक्तावप्यसति

व्यभिचारः। उक्तरीत्या आत्मन आनन्दरूपत्वासंभवात् ब्रह्मणि व्यभिचार इत्येवं दोषा ऊह्याः। संसारावस्थायां क्लेशानन्दयोः साक्षिवेद्ययोः समानयोगक्षेमत्वेनात्मनो दुःखरूपत्ववारणार्थं तयोः स्वरूपानन्दभेदावश्यकतया, आनन्दरूपस्यात्मनः लौकिकानन्दभेदावश्यकतया च व्यभिचारः। न च वैषयिकानन्दस्यापि ब्रह्मरूपत्वात् तदुपाधिमात्रस्यैवोत्पत्तिविनाशप्रतियोगित्वात् तथाचानन्दभिन्नत्वमनात्मत्वमिति सुष्ठूक्तमिति भाव इति वाच्यम्। तथा सति उपाधिकार्यसामान्यस्यैवाभावेनोपाधिवैय्यर्थ्यात्। अन्यथा सुखस्यौपाधिकत्वेन तत्स्वरूपब्रह्मणो निरुपाधिकत्वभङ्गः स्यात्त्। अहं सुखी आसम् इदानीं दुःखीति व्यवहारे प्रतीतध्वंसं प्रत्युपाधेः प्रतियोगित्वासंभवात् ब्रह्मणोऽनित्यतापत्तेः। न हि कारणे स्वय मदृश्यमाने कार्यदर्शनादृते शक्यते तदनुमातुम् दुःखनाशप्रतीतेरपि उपाधिनाशविषयकत्वस्य तुल्ययुक्तिसिद्धत्वेन ब्रह्मणो दुःखरूपात्वापतेश्च। अहमर्थस्यानात्मत्वविचारे वैषयिकसुखानुभवसयात्मान्यत्वादिति त्वयैवोक्तत्वात् तद्विरोधापत्तेश्चेति॥५४॥

॥ परिच्छिन्नत्वविचारः

**पूर्वपक्षः** परिच्छिन्नत्वमप्यस्तु हेतुर्मिथ्यात्वसाधने।
दिक्कालवस्तुविच्छेदशून्यत्वादात्मगं न तत्॥

स्वान्यूनसमसत्ताकाभावैकप्रतियोगिता।
अस्त्यज्ञानवियन्मुख्ये नातोऽसिद्धिरिहेष्यते॥

तस्माद्वेति श्रुतिः प्राह जन्यत्वं विषयादिषु।
अतोन्यादार्तमित्याह ब्रह्मभिन्नं विनश्यति॥

घटाद्याः स्वानुगस्फूर्तिवस्तुन्यारोपिता इमे।
विभक्तत्वाद्यथा सर्पमालाद्या रज्विदं लवे॥

**सिद्धान्तः** इत्युक्तं यत्त्वया तन्न ब्रह्मणि व्यभिचारतः।
आरोपितस्य सत्त्वेन सत्तात्रैविध्यसिद्धितः॥५५॥

**प्राग्धर्मप्रतियोगिभ्यां समसत्वनिवेशनम् ।**
**कर्तुं न शक्यं यत्तस्मादनैकांत्यं ध्रुवं भवेत् ॥५६॥**

परिच्छिन्नत्वहेतुमपाकर्तुं तत्पक्षलोकमाह **परिच्छिन्नत्वमप्यस्त्विति** । देशतः परिच्छिन्नत्वं-अभावप्रतियोगित्वम् । कालतः परिच्छिन्नत्वं - ध्वंसप्रतियोगित्वम् । वस्तुतः परिच्छिन्नत्वं- भेदप्रतियोगित्वम् । ब्रह्मणोऽभावाभावात् नाभावप्रतियोगित्वमिति न तत्र व्यभिचारः । एवं ब्रह्मणो ध्वंसाभावात् भेदस्य च वस्तुद्वयसापेक्षत्वाद्भेदस्यैवाभावात् न तत्तत्प्रतियोगित्वमिति नानैकानिकतेति तत्पक्षाशयः । यस्य प्रतियोगित्वं तस्य स्वाभावाधिकरणसमसत्ताकत्वमिति विशेषणं विवक्षितमिति नात्मनि व्यभिचारः । अत एव न तुच्छेऽपि व्यभिचारः । अज्ञानाकाशादावीदृशसमसत्ताकाभावप्रतियोगित्वाभावदसिद्धिरिति तदर्थं समसत्ताकत्वं स्वान्यूनसमसत्ताकत्वरूपमपेक्षितमित्याह **स्वान्यूनेति** । तथा चाभावाधिकरणस्यात्मनः पारमार्थिकत्वेऽपि प्रतियोगिनः आकाशस्य व्यावहारिकत्वेऽपि नानुपपत्तिः । ननु कथं नित्ये आकाशे परिच्छिन्नत्वं । इत्यत श्रुतिमुदाहृत्याकाशस्य जन्यत्वमपुपादयति पूर्वपक्षकारः **तस्मादिति** । तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै ब्र व १ ) तथाचोत्पन्नस्य यावतोऽपि विनाशाभ्युपगमत् तत्र ध्वंसप्रतियोगित्वरूपं कालतः परिच्छिन्नत्वम् । ब्रह्मभिन्नस्य सर्वस्य विनाशित्वे प्रमाणमुदाहरति पूर्वपक्षकारः **अतोन्यदिति** । एष ते आत्मासर्वान्तरोऽतोन्यदार्तं ततो होषस्तश्च क्रायण उपरराम ( बृ ५ अ ४ ब्राह्मणम् ) अतः एतस्मादात्मनः । अन्यत इतरत् । आर्तकार्यं शरीरं करणात्मकं लिङ्गं वा विनाशि इत्यर्थः । अनुमानमप्युदाहरति **घटाद्याइति** । घटाद्याः [1] स्वानुगतप्रतिभासवस्तुनि कल्पिताः, विभक्तत्वात्,रज्जवाः इदमंशे स्वानुगतप्रतिभासे कल्पितसर्पमालादिवदि त्यनुमानम् । रज्जिदं लवे रज्ज्वा इदमंशे इत्यर्थः ( लवः -अंशः ) एवं सन् घटः, सन् पटः इत्यादि प्रतिभासेऽनुगच्छद्ब्रह्मणि घटादयो विभज्यन्तेऽत एव कल्प्यन्ते इत्यानन्दबोधीयमनुमानम् । तदेतत्खण्डयति **इत्युक्तमिति** । **ब्रह्मणीति** । देशतः वस्तुतः परिच्छिन्नत्वस्य ब्रह्मणि सत्त्वादिति भावः । **तथा हि** अत्यंताभावप्रतियोगित्वं हि

---

1 लघु।टि।स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतावतीत्यर्थः ( लघुचन्द्रिका )

देशतः परिच्छिन्नत्वम् । ब्रह्मणः समवायादि संबन्धेनाभावाभ्युपगमस्यात्यवश्यकतयाऽभावप्रतियोगित्वस्य निर्बाधात् । एवं प्रकृतपक्षे ब्रह्मान्यत्वविशेषणस्य भवतैव विहितत्वात् ब्रह्मणो भेदप्रतियोगित्वमप्यस्तीति व्यभिचारः स्यादेव । यदि ध्वंसप्रतियोगित्वमात्रं हेतुः तर्ह्यात्मनि व्यभिचारपरिहारेऽपि ध्वंसे मिथ्याभूतेऽसिद्धिः स्यात् । दोषान्तरं चाह **आरोपितस्येति** । उक्तहेतोः परिच्छिन्नत्वरूपस्य कल्पितस्य ब्रह्मणि सत्वेन व्यभिचारात् त्वयोक्तं न युक्तमिति भावः । (देशतः) अत्यन्ताभावप्रतियोगित्वस्य यत्किञ्चित्संबन्धावच्छिन्नत्वमभ्युपेयमेव । स संबन्धः यदि समवायः ब्रह्मणः क्वाप्यसमवेतत्वात् व्यभिचारः । यदि च संयोगाद्यन्यतमः, तर्ह्यपि ब्रह्मण्यनेकान्तिकता स्यादेव । तस्य कुत्राप्यसंबद्धत्वात्, संबद्धानां चाकाशादीनां तत्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य विरुद्धत्वादसिद्धिः स्यादेव ।

नन्वत्यन्ताभावेऽन्योन्याभावे च प्रतियोगिसमसत्ताकत्वं विशिष्यते । तथा च नात्मनि व्यभिचारः । नाप्यज्ञानाकाशादावसिद्धिः, तत्र स्वसमानसत्ताकयत्किञ्चित्संबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावान्योन्याभाव प्रतियोगित्वस्य सत्त्वादित्यत आह **सत्तात्रैविध्यसिद्धितः प्रागिति** । एतदनुमानं प्रयुज्यैव प्रपञ्चस्य व्यावहारिकत्वं प्रसाध्य दृष्टान्ते प्रातिभासिकत्वोपपादनमिति सत्त्रैविध्यस्य तन्नान्तरीयकत्वादेतदनुमानप्रयोगकाले तत्सिद्ध्यधीनहेतुघटकविशेषणस्यायुक्तत्वादिति भावः । **निवेशनं कर्तुं न शक्यमिति** । अन्योन्याश्रयादित्यर्थः । यदिति - पञ्चम्यर्थः यस्मादित्यर्थः । यस्मात् समसत्वनिवेशनं न शक्यं तस्मादात्मनि व्यभिचारः ध्रुवो भवेदित्यन्वयः । एतेन अविद्याकाशादेः व्यावहारिकस्य पारमार्थिकाभावपक्षे स्वान्यूनसत्ताकेति विशेषणं देयं, अत एव प्रातिभासिकशुक्तिरूप्यादेः व्यावहारिकाभाव प्रतियोगित्वेऽपि न साधनवैकल्यमित्यसिद्धिकारवचनमपि प्रत्याख्यातम्।

यत्तु निरुक्तमिथ्यात्वप्रकाराणामेवंरूपत्वाभावान्न साध्या विशिष्टता इत्युक्तं अद्वैतसिद्धिकृता तत्तु सर्वथा दृष्टापलापः । निरुक्तानां पञ्चानां मिथ्यात्वलक्षणानामप्युक्तपरिच्छिन्नत्वरूपेण, अत्यन्ताभावप्रतियोगित्वेन वा

ध्वंसप्रतियोगित्वेन वा, अविशेषस्य सुस्पष्टत्वात् । तथाहिः-[1] स्वप्रकारधीविशेष्यताव्यापकाभावप्रतियोगित्वस्य स्वप्रतियोगिकाभावाधिकरणे एव प्रतीयमानत्वस्य द्वितीयचतुर्थमिथ्यात्वस्याभावप्रतियोगित्वरूपहेत्वविशेषात् ।[2] एवं ज्ञानविनिवर्त्यत्वरूपस्य ध्वंसप्रतियोगित्वविशेषात् ।[3] सदसद्विलक्षणत्वरूपस्य सद्विविक्तत्वरूपस्य च भेदप्रतियोगित्वाविशिष्टत्वात् । न च द्वितीये स्वप्रकारकधीविशेष्यकाव्यापकत्वांशस्य, अधिकरणे प्रतीयमानत्वांशस्य पञ्चमे, ज्ञानजन्यत्वांशस्य तृतीये सदसत्वांशस्य प्रथमे, सत्वांशस्य चतुर्थे चाधिक्यान्न हेतुना पञ्चविधमिथ्यात्वरूप साध्यस्यैक्यमिति वाच्यम् । आकाशादौ प्रकृतहेतु सिदध्यर्थं दृश्यत्वादिहेतुभिरेवतत्साधनावश्यकतया तत्र च स्वसमानाधिकर-

---

[1] लघु।टि। अभावः-त्रैकालिकसार्वत्रिकनिषेधः।तत्प्रतियोगित्वंयद्याकाशादौत्वद्रीत्यासिद्धं,तदासिद्धमेव स्वप्रकारकधीविशेष्येऽपि विद्यमानाभावप्रतियोगित्वमपीति सिद्धसाधनात् । एष च साध्याविशेषः गौडव्याख्यानेप्युक्तमेव।एवपञ्चमेप्यवधेयम्।

[2] ज्ञानजन्यध्वंसप्रतियोगित्व हि ज्ञाननिवर्त्यत्वम् । तस्य ध्वंससामान्यप्रतियोगित्वसिद्ध्यैव सिद्धत्वात्

[3] सदसद्विलक्षणत्वस्य मिथ्यात्वस्योक्तात्यन्ताभावप्रतियोगित्वरूपत्वाभावान्न साध्याविशेष इति गौडब्रह्मानन्दीयं मतम् । सद्विविक्तत्वोक्तौ वा सदसद्विलक्षणत्वोक्तौ वाऽभावप्रतियो गित्वरूपहेत्वविशेषाभावे भेदप्रतियोगित्वरूपसाधनस्य साध्याविशेषस्तु स्यादेव । इदमत्राकूतम् । साध्याविशिष्टता सिद्धसाधनताद्वारा पक्षताविघटनद्वाराचानुमित्यसिद्धिः वा हेत्वसिद्धिनिश्चये सति बाधो वा । साध्यसंदेहवत् हेतोरपि सन्दिग्धत्वापत्या सदिग्धासिद्धिर्वा फलं भवति । तत्राकाशेऽत्यन्ताभावप्रतियोगित्वस्यासिद्धया तदविशिष्टसाध्यस्य साधने बाधः स्यात् । वियदादौ ध्वंसप्रतियोगित्वस्य वा, भेदप्रतियोगित्वस्य निश्चिते सिद्धसाधनतास्यात् । न च सद्भेदानुयोगित्वं सद्विविक्तत्वम् । परिच्छिन्नत्वं तु भेदप्रतियोगित्वमिति कथं साध्याविशेषः इति वाच्यम् सत्प्रतियोगिकभेदानुयोगित्वस्य हेतोः प्रपञ्चे सत्वाभ्युपगमे सतः भेदप्रतियोगित्वङ्गीकारः स्वयं सिद्ध इति सति व्यभिचारवारणाय सदनुयोगिकभेदप्रतियोगित्वस्यैव मिथ्यात्वपदेन वक्तव्यात्एवमसदनुयोगिकभेदप्रतियोगित्वमित्येवासद्विलक्षणत्वपदेन तदर्थस्य करणीयत्वं ज्ञेयम् । यद्वा यस्य यत्प्रतियोगिकभेदानुयोगित्वतस्य तदनुयोगिकभेदप्रतियोगित्वमिति व्याप्तेः । यदि सत्वानधिकरणत्वे सति असत्वानधिकरणत्वं मिथ्यात्वं, त्रिविधपरिच्छिन्नत्वस्यैतद्रूपत्वाभावात् न साध्याविशेषः । तर्हि सत्वस्याभावाप्रतियोगित्वेनैर्वानिरुच्यमानत्वात्,तदनधिकरणत्वोक्तावभावप्रतियोगित्वे एव पर्यवसानात् साध्यवैशिष्ट्यस्य दुर्वारत्वात् । क्वचिदप्युपाधौ सत्वेन प्रतीत्यनर्हत्वरूपस्यासत्वस्यापि सत्वघटितत्वात् । स्वप्रकाशाद्वितीयशुद्धचैतन्यरूपस्य चात्र प्रकृतेऽनुपयोगात् । उपयुक्तत्वेऽर्थान्तरातापत्तेः ।

कण्ठकोद्धार नचानिर्वचनीयत्वादिसाध्यांतरहेतुत्वात न साध्यावैशिष्ट्यमिति [illegible] म । तथाप्य- [illegible]दृष्यनिस्तारात् । न च दृश्यत्वादिहेतुभिरेतादृशहेतुसिद्धिरिति वाच्यम् । दृश्यत्वादौ निरस्तत्वा [illegible]दित्युक्तम्।

णाभावाप्रतियोगित्वाद्यन्यतमस्यैव साध्यत्वात् साध्यावैशिष्ट्यस्य दुर्वारत्वात् । प्रकृतहेतुसाधकानुमाने यदि तन्मात्रस्य साध्यत्वं तर्हि निरुक्तमिथ्यात्वरूपसाध्येधिकांशसद्भावेन विशेषत्वात् । सामान्येन परिच्छिन्नत्वहेतोस्तद्व्याप्यत्वस्य व्यभिचरितत्वात् । विशेषेण सामान्यसाधनसंसंभवेपि सामान्येन विशिषस्य साधयितुमशक्यत्वात् । किञ्च न केवलमभावप्रतियोगित्वमात्रमाकाशादावसिद्धं किन्तु ध्वंसप्रतियोगित्वमपीत्यसिद्धिर्दुर्वारैव । न च "आत्मन आकाशः संभूतः" इति श्रुतेराकाशस्य जन्यत्वसिद्ध्या तन्नाशास्याप्यनुमितत्वात् कथमसिद्धिरिति वाच्यम् । आकाशवत्सर्वगतश्च नित्यः, अनादिर्वायमाकाशः स यथानन्तोयमाकाश इति श्रुत्यन्तरविरोधवारणार्थं जन्मोक्तिश्रुतेः अनादिनित्याव्याकृताकाशातिरिक्त भूताकाशपरत्वाभिप्रायेण योजनीयत्वात् । न च नित्यत्वश्रुतेरेव सृष्टिकालाविनाशित्वाभिप्रायत्वं सर्वगतत्त्वोक्तिश्च सर्वमूर्तसंयोगित्वाभिप्रायेणे ति कुतो न वाच्यमिति वाच्यम् । अनादिश्रुतेरनन्तत्वश्रुतेश्चार्थान्तरकल्पनासंभवात् । आकाशवदिति ब्रह्मनित्यत्वे दृष्टान्तोक्तेः तत्रानिष्पत्वस्य वक्तुमशक्यत्वात् स एवाधस्तात् स एवोपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरत इति श्रुतिसिद्धाया भगवद्व्याप्तेः सर्वगतप्रदेशाधीनत्वेन, ध्वंसस्य प्रतियोगिपरिणामकारणरूपाधिकरणावश्यंभावात्, अत्र देशो नष्टः इत्यस्य व्याहतत्त्वाच्च । देवदत्तः शिखी जातः, युवापि ययातिः शापात् वृद्धो जातः इति व्यवहारैः ऋचः सामानि जज्ञिरे ब्रह्मा देवानां प्रथमः संबभूवेति श्रुतिभिश्च नित्यानामपि विशेषणविवक्षया अभिव्यक्तितात्पर्यकतया वा उत्पत्तिवाचां बहुलमुपलंभात् । त्वद्रीत्यैवाकाशसंभवनवचनस्य सावकाशत्वं प्रकल्प्यानादिश्रुतिविरोधपरिहारसंभवात् । न चात्मातिरिक्तसामान्यस्य दृश्यत्वेन नाश्यत्वादीदृशनित्यत्ववचनानामाभूतसंप्लवावस्थायित्वाभिप्रायकत्वात् (सृष्टिकालाविनाशित्वाभिप्रायकत्वात्), सावकाशत्वमस्त्विति वाच्यम् । तथा सति आत्मनोपिनित्यत्वपत्तेः । आत्माकाशयोः सर्वगतत्वनित्यत्वविषये दृष्टान्तदार्ष्टान्तिकभावोक्त्यनुपपत्तेश्च । नन्वस्त्वाकाशोत्पत्तिवक्त्रीणां श्रुतीनां सावकाशत्वं, "सर्वमिदमसृजते"ति श्रुत्या, "अतोन्यदार्त"मिति श्रुत्या चात्मातिरिक्त सर्वस्य सादित्वं विनाशित्वं च न शक्यवारणे इति चेन्न । 'अथ ह

वार्व नित्यानि पुरुषःप्रकृतिरात्मा काल इति श्रुत्यात्मातिरिक्तानां केषांचन। नित्यतवस्य प्रतिपादितत्वात् क्वचिच्छरीररसंबन्धात्, क्वचिद्विकारतः कुत्रचित् विशेषणानित्यतया वा सर्जनविषयत्वस्य, प्राचीनव्यवहारसिद्धस्याङ्गीकर्तव्यत्वात् । "अतोन्यदार्त" मिति श्रुतौ तु गुणपरिपूर्णपरमात्मातिरिक्तस्य जीवजातस्य दुःखित्वमात्रस्य प्रतिपादनाच्च।

आङ्पूर्वकादृच्छतेः क्ते दुःखिते रूढत्वात् । "तस्यार्तस्य यथौषधमिति" रघुः "नाशिवनावार्तं भेषजेनोपपादयेतामि" ति चरके इत्येवं सर्वत्र दुःखिते पुरुष एवार्तशब्दप्रयोगदर्शनात् । कुत्रापि विनाशिनि प्रयोगादर्शनाच्च । "आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ" (भ - गी ७ - १६ ) इत्यत्र आर्तशब्दव्याख्यानावसरे आर्तः आर्तिपरिगृहीतः तस्करव्याघ्ररोगादिनाऽभिभूतः आपन्नः इति त्वत्पूर्वाचार्येण व्याख्यातत्वात् । त्वयापि तथैव व्यख्याततत्वाच्च । अद्वैतपरहनुमत्कृतपैशाचभाष्येऽपि आर्तः दुःखीत्येव व्याख्याततत्वात् ।

यत्तूक्तं घटाद्याः[1] "स्वानुगतप्रतिभासे वस्तुनि कल्पिता विभक्तत्वात् सर्पमालादिवदिति अनुमानं प्रमाणमि"ति । तन्न-विभक्तत्वस्य दुर्वचत्वस्य न्यायामृत एव दृढमाम्नातत्वात् । न च विभक्तशब्देन स्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वान्न ब्रह्मतुच्छयोर्व्यभिचारः इति वाच्यम् । सत्तावैविध्यस्याद्याप्यसिद्धत्वेन दुर्वचत्वस्य दुर्वारत्वात् । ब्रह्मभेदस्य जडेऽपारमार्थिकत्वेऽभेदस्य तत्रैव जडे पारमार्थिकत्वापत्त्या ब्रह्मणो जडत्वापत्तेः। भेदस्य पारमार्थिकत्वे तु स्वसमानसत्ताकभेदप्रतियोगित्वस्य ब्रह्मणि वर्तमानात् व्यभिचारः स्यादेवेत्यादि दोषजातमुक्तं पूर्वमेव । अत्र च नैके दोषाः मूले , तरङ्गिण्यां , सौगन्ध्ये चोक्ता द्रष्टव्याः । तद्रजतं , स सर्प इति वत् तद्ब्रह्मेत्यनुगच्छत्तदंशे ब्रह्मणोऽपि रजतादेरिव आरोपापत्तेश्च । सन्घटः सन्पटः इतिवत् सद्ब्रह्मेत्यपि साम्यात् व्यभिचारः ॥५६॥

---

लघु।टि।स्वान्प्रत्यनुगतप्रतिभासरूपं यद्वस्तु, तत्र कल्पिता इत्यर्थः।वस्त्वात्मना परिणतवृत्तिरेव प्रतिभास इत्युच्यते। इद रजतं, इदं रज्जु इमे रङ्गरजते इति वस्त्वात्मना परिणतप्रतिभासरूप-इदंपदार्थे रजत-रज्ज्वावादीनां कल्पितत्ववत् सन्घटःसन्पटसन्वृक्ष इत्येवं सत् सर्वत्रपदार्थेषु विभक्तेष्वप्यनुगच्छति।तत्र सति घटादीनामध्यस्तत्वं साध्यते।सदेकांशस्य घटत्वेन,अपरांशस्य पटत्वादिना विभागकरणात्तेषां घटादीनां विभक्तत्वमिति।

**आकाशाभाववद्ब्रह्माभावस्ते केवलान्वयी ।**
**अनाधेयतया तस्य स्यात्तद्वद्भेद ऐक्यतः ॥५७॥**

**समनियताभावतो हेतोर्ब्रह्मणि सत्त्वतः ।**
**अनैकान्त्यं परिच्छेदत्रये मिलित ईर्यते ॥५८॥**

**स्वान्यूनसमसत्तेति विशेषणमनर्थकम् ।**
**दृश्यत्वादित्रयं हेतुत्वेनोक्तं युक्तमेव न ॥५९॥**

ब्रह्मणि व्यभिचारं युक्त्यन्तरेण साधयति **आकाशाभाववदिति** । ते तव मते इत्यर्थः । आकाशस्यावृत्तिपदार्थत्वेन तदभावस्य केवलान्वयित्ववत् त्वन्मते ब्रह्मणोऽपि सर्वसंबन्धशून्यत्वेन अवृत्तित्वादेव तदभावस्य केवलान्वयित्वं स्यादेव। तथा आकाशवद्भेदवत् ब्रह्माभाववच्च ब्रह्मभेदोऽपि स्यात् ।

तथा चाकाशस्य यथाऽभावप्रतियोगित्वं भेदप्रतियोगित्वं चाभ्युपेयते तथा ब्रह्मणोऽप्यभावप्रतियोगित्वं भेदप्रतियोगित्वं च स्यादिति व्यभिचारः स्यादेवेति भावः। समनियताभावानामैक्यनियमादाकाशाभाव ब्रह्माभावयोरैक्यमित्याकाशस्याभावप्रतियोगित्वे ब्रह्मणोऽप्यभावप्रतियोगित्वं भवत्येवेति परिच्छिन्नत्वसामान्यस्य ब्रह्मण्यनैकान्त्यम् ॥ ५७ ॥ ५८ ॥

स्वान्यूनसमसत्ताकाभावप्रतियोगित्वंलक्षणमुच्यतेत्युक्तौ सत्ताद्वैविध्यासिद्ध्या अप्रयोजकत्वमाह **विशेषणमनर्थकमिति** । विश्वं मिथ्या इत्येतत्साधकतया साक्षादंशित्वस्य प्रयोगाभावात् चित्सुखोक्तमनुमानमप्रयुज्यैव न्यायामृतसारं संगृण्हाति **दृश्यत्वादित्रयमिति** ॥ ५९ ॥

**दृश्यत्वादित्रये हेतौ परमार्थास्तिता न हि ।**
**पारमार्थिकमिथ्यात्वसाधकत्वं कथं भवेत् ॥६०॥**

**साधकं चेदवश्यं तु परमार्थास्तिता भवेत् ।**
**सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते**
**इति त्वत्पूर्ववचनं स्मृत्वा त्यज दुराग्रहम् ॥६१॥**

किञ्चात्र हेतुभूतानां दृश्यत्वादीनां पक्षकोटिप्रवेशे मिथ्यात्वाभावे बाधः व्यभिचारो वा । तेषामपि मिथ्यात्वे व्याप्तिपक्षधर्मताज्ञानस्य भ्रमत्वेन यथार्थानुमितिजनकत्वासंभवादित्याशयवानाह **दृश्यत्वादित्रय इति** । हि-यस्मात् (त्वन्मते) दृश्यत्वादित्रये हेतौ परमार्थास्तिता नास्ति तस्मात्पारमार्थिकमिथ्यात्वसाधकत्वं प्रमाभूतानुमितिविषयमिथ्यात्वसाधकत्वं कथं भवेत् । न कथमपीत्यर्थः ॥६०॥ तत्र प्रमाणशंकायां तत्पूर्वाचार्यवचनमेवोदाहरति **साधकमिति** । अधिकं त्वन्यत्र ॥६१॥

**पञ्चभङ्गी**



श्रीः

## ॥ सोपाधिकत्वविचारः ॥

पूर्वपक्षः - मिथ्यात्वसाधकाः सर्वे ये दृश्यत्वादिहेतवः ।
सोपाधिके न सन्त्येव उपाधेरनिरूपणात् ॥

सिद्धान्तः - इति श्लोके यदुक्तं देहात्मैक्येऽस्ति साध्यमिथ्यात्वम् ।
ब्रह्मज्ञानैकबाध्ये स्वबाधकाबाध्यदोषतो धीर्नो ॥६२॥

साध्यव्यापकतायाः भङ्गपाधौ त्वदीरिते यः स्यात् ॥

परोक्तसाध्यहेतुषु असाङ्गत्यं समर्थ्य तेषां पररीत्या दुर्निरूप्यत्वं च प्रतिपाद्य प्रकृतानुमाने दोषान्तरं मूलोक्तं उद्विधीर्षोः पूर्वपक्षिणः श्लोकं अनूद्य तदभिप्राय-मपि अनुवक्ति इति श्लोक इति । उपाधेरनिरूपणादिति । तत् अयुक्तं इति शेषः । न्यायामृतोक्तयुक्त्यनालोकादिति उत्तरग्रन्थेन संबन्धः । युक्तिः निरूपणप्रकारः ।

न्यायामृतीयनिरूपणप्रकारस्य अनवलोकात् (प्रकारं अनवलोक्य उक्तत्वात्) यदुक्तं उपाधेरनिरूपणादिति तदयुक्तं इति भावः । न्यायामृते "सोपा-धिकाश्च दृश्यत्वादयः । स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वस्य,तदबाध्य-बाधकं प्रति निषेध्यत्वेन विषयत्वस्य वा पक्षाद्व्यावृत्तस्य समव्याप्तिमतः व्यतिरे-कव्याप्तिमतश्च उपाधित्वात्" इति उपाधिनिरूपणं वर्तते ।

तन्निरूपणप्रकारस्तु इत्थं उपाधित्वनिरूपकाधिकरणं स्वम् । साध्याधिकरणं-शुक्तिरूप्यादि साधनाधिकरणं पक्षश्चः स्वपदेन ग्राह्याः । साध्यं मिथ्यात्वम् । तदधिकरणं रजतं । तन्निष्ठो योऽभावः इत्युक्तौ न हि स्वबा-धकाभिमताबाध्यदोषप्रयुक्तभानत्वाभावः । शुक्तिरजते उक्तेदृशभानत्वस्य सत्त्वात् । स्वं शुक्तिरूप्यम् । स्वबाधकाभिमतं नेदं रजतं इति ज्ञानं तदबाध्या ये

दोषाः काचादयः । तत्प्रयुक्तभानत्वं काचादिजन्यज्ञानविषयत्वं रजतेस्तीति न तदभावः रजते । तथा च शुक्तिरूप्यवृत्त्यभावाप्रतियोगित्वात् उक्तोपाधेः साध्यव्यापकत्वम् । एवं साधनाधिकरणे वियदादौ उक्तोपाधेरभावात् साधनाव्यापकत्वम् । स्वं वियदादि स्वबाधकाभिमतं ब्रह्मज्ञानं तदबाध्यदोषाणां एव अभावात् तत्प्रयुक्तभानत्वं नास्ति वियदादौ इति । सिद्धान्ते नेदं रजतं इति ज्ञानस्य इदं रजतं इति ज्ञानं प्रत्येव बाधकत्वात्, स्वरूपत एव प्रपञ्चबाधकस्याभावाद् बाधकाभिमतेत्युक्तम् ।

एवं स्वबाधकाभिमतअबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वमपि उपाधिः मिथ्यात्वाधिकरणं शुक्तिरजतम् । तद्बाधकाभिमतं-नेदं रजतं इति ज्ञानम् । तदबाध्यं यत् बाधकं तदेव नेदं रजतमिति ज्ञानं । तस्मिन् निषेध्यत्वेन विषयत्वं - तन्निरूपितविषयतावदभावप्रतियोगित्वं शुक्तिरजते अस्त्येवेति साध्यव्यापकत्वम् साधनाधिकरणे दृश्ये प्रपञ्चे स्वबाधकाभिमताबाध्याबाधकं प्रति निषेध्यत्वेन विषयत्वं नास्ति । स्वं प्रपञ्चः । तद्बाधकाभिमतं ब्रह्मज्ञानम् । तदबाध्यं यद्बाधकं इति चेत् न ब्रह्मज्ञानं ब्रह्मज्ञानस्य स्वबाधकत्वात् । अतस्तत्र निषेध्यत्वेन विषयत्वं नास्त्येव प्रपञ्चे इति साधनाव्यापकत्वम् । एवं निरूपिते पि अनिरूपणं प्रतिजानतः परस्याशयमेवाह **देहात्मैक्ये इति** । इदमत्राद्वैतिनां हार्दम् तैः देहात्मैक्यभ्रममभ्युपगत्य तद्विषयीभूतदेहात्मैक्यस्य ब्रह्मज्ञानमात्रबाध्यत्वमपि अङ्गीकृतमिति । ब्रह्मज्ञानाबाध्यदोषाणां वा तदबाध्यबाधकस्य वा अप्रसिद्धत्वात् साध्याव्यापकत्वम् उक्तोपाधिद्वयस्यापीति ॥६२॥

**पक्षेतरत्वसदृशोऽत उपाधिर्नो भवेद् युक्तः ॥६३॥**

**पक्षेतरत्वसदृशः इति** ॥ पर्वतो वन्हिमान् धूमादित्यत्रापि अपर्वतत्वस्य (पक्षेतरत्वस्य) उपाधित्वे सर्वानुमानोच्छेदप्रसङ्गात् पक्षेतरत्वस्य यथा अनुपाधित्वं शास्त्रकृदभिमतं तथा तत्सदृशस्य व्यतिरेके व्यर्थविशेषणस्य, साध्यव्यापकत्वार्थं निविष्टपक्षमात्रव्यावर्तकविशेषणवतः पर्वतावयववृत्त्यन्यत्वादेरपि अनुपाधित्वं अवश्यमभ्युपेयमिति, उक्तोपाधेरपि पक्षमात्रव्यावर्तकविशेषणवत्त्वात्, व्यतिरेके व्यर्थविशेषणवत्त्वाच्च अनुपाधित्वमेवेति नानुमाने सोपाधिकता इति मायावादिनां मानसम ।

**इत्याद्युक्तं भवतो (भवता) न्यायामृतोक्तयुक्त्यनालोकात्।**
**स्वस्या तात्विकताया हेतुः स्वबाधकेति शब्देनोक्तः ॥६४॥**

तदेतत् सर्वं मूले न्यायामृतोक्तयुक्तीनां अनवलोकनमूलकं इत्याशयवान् सिद्धान्तोत्तरं वक्तुं उपक्रमते **इत्याद्युक्तं भवतः इति** अभिमतेति वदतो मूलकारस्य आशयं उद्घाटयन् देहात्मैक्येऽपि उपाधिमुपपादयति **स्वस्यातात्विकताया इत्यादिना।** स्वस्य साध्याधिकरणतया निश्चितस्य। अतात्विकतायाः मिथ्यात्वस्य। हेतुः निश्चायकः उक्तः अभिमतः। अयं भावः। सति मिथ्यात्वनिश्चये तद्धेतुतयोभयवादिसंमतस्यैव बाधकता संभवति। असति च निश्चये एकदेश्यभिमतस्यापि बाधकता अङ्गी काराधिकारिणी। नेदं रजत मिति विज्ञानानुमितमिथ्यात्ववद्रजतं प्रति नेदं रजतं इति ज्ञानस्यैव बाधकत्वं उभयवाद्यभिमतम्। निश्चयस्य उभयवादिनिष्ठत्वात्। वियदादिप्रपञ्चमिथ्यात्वं तु नाद्यापि निश्चितमिति अनुमान प्रयोक्तृमात्राभिमतस्य ब्रह्मज्ञानस्यापि बाधकत्वं युज्यते, तत्र उभयवाद्यभिमत बाधकस्यैवाभावात्।

अवश्यं चैवं वक्तव्यम्। अन्यथा (यदिपराभिमतमात्रं बाधकं स्यात्) रजतबाधकत्वेनापि ब्रह्मज्ञानस्य पराभिमतत्वात् तदन्तर्भावेनापि साध्यव्यापकता भज्ये त। तथाच पराभिमतब्रह्मज्ञानं न देहात्मैक्य। बाधकमिति,[1] ब्रह्मज्ञानेतरस्य स्वबाध्यज्ञानजनकदोषाबाधकत्वात् अस्त्येव देहात्मैक्ये प्रकृतोपाधिरिति ॥ ६४ ॥

**स च वेदादिरतोऽबाध्यो दोषस्त्वविद्यादिः।**
**ततः प्रयुक्तं यज्ज्ञानं तद्विषयत्वमस्ति देहात्मैक्ये ॥६५॥**

---

1 लघु।टिप्पणि। ... वेदेमुक्तंभवति।स्ववृत्तिमिथ्यात्वनिश्चायकत्वेनोभयवादिसमतत्व,सदिग्धमिथ्यात्ववत्स्वबाधकत्वेन वाद्यभिमतत्व एतदन्यतरवद्बाधकाबाध्यदोषप्रयुक्तभानत्वं उपाधिरित्यर्थः। एतेन वियदादौ संदिग्धत्वान्मिथ्यात्वस्य साधनाव्यापकत्वम्। वाद्यभिमतब्रह्मज्ञानस्यैव बाधकत्वेन ग्रहणात्। शुक्तिरूप्यदेहात्मैक्यादौ मिथ्यात्वनिश्चयसद्भावात् नेदंरजतं इतिज्ञान,वेदादेरेव उभयसिद्धबाधकत्वमितिसाध्यव्यापकत्वम्। उभयवादिनिश्चितसाध्याधिकरणप्रतिउभयवादिसिद्धस्यबाधकत्वेनग्रहणस्यन्यायसंमतत्वात्।एकदेशनिश्चितसाध्याधिकरणंप्रति एकदेशिसिद्धस्यबाधकत्वेनग्रहणस्ययोग्यत्वात्अयमुपाधिःसाधुः।

किमदो निश्चायकं यद्देहात्मैक्यबाधकत्वेनोभयवाद्यभिमतं तद्भ्रमकारणं न बाधते इत्यत आह **स च वेदादिरिति** । वेदः आदिः साधनं यस्य स तथोक्तः । श्रुतिजन्यसप्रकारकशाब्दबोध इत्यर्थः। उत्पन्नं हि बाधकज्ञानं स्वप्रतिबध्यज्ञाने भ्रमत्वमासादयत् सत् तद्विषयमिथ्यात्वं अवगमयति । अन्यथा नेदं रजतं इति बाधोत्पत्तेः पूर्वमपि इदं रजतं इति ज्ञानस्य भ्रमत्वसिद्धौ प्रवृत्त्यभावः प्रसज्येत। ब्रह्मसाक्षात्कारस्य अनुमानप्रयोगकाले अद्यापि अजातत्वात् तत्प्रतिबध्यतया अभिमतस्य देहात्मैक्यज्ञानस्य भ्रमत्वासिद्धेः तद्विषयदेहात्मैक्यमिथ्यात्वनिश्चयानुदयात् तन्निश्चायकस्य वेदादेरेव बाधकत्वं वाच्यं, न तु तदनिश्चायकस्य ब्रह्मज्ञानस्येति,वेदाद्यबाध्याविद्यादिदोषप्रयुक्तभानत्वात् देहात्मैक्यस्य तत्र उपाधिः वर्तेते एव । अथवा वेदस्यैव स्वजन्यज्ञानद्वारा बाधकत्वम् । आदिपदेन ममदेहः इत्यादि प्रत्यक्षं यथोचितं अनुमानं च ग्राह्ये । विमतं-मिथ्या दृश्यत्वादित्युक्तौ देहात्मैक्ये साध्यसिद्धौ[1] सिद्धसाधनतावारणाय परेण तदसिद्ध्या पक्षकुक्षिनिक्षेपस्य वा तत्सिद्धावपि ब्रह्मप्रमेतरबाध्यसपक्षगर्भनिवेशस्य वा अवश्यं कर्तव्यत्वात् ब्रह्मप्रमाबाध्यत्वं मिथ्यात्वनिश्चयं च देहात्मैक्यस्योक्त्वा उक्तोपाधेः साध्यव्यापकताभञ्जनं अयुक्तमिति भावः । अन्यथा देहात्मैक्ये मिथ्यात्वनिश्चयात् पक्षबहिर्भावेन व्यावहारिकसत्तां, ब्रह्मप्रमामात्रबाध्यत्वेन सपक्षादुदूष्य प्रातिभासिकसत्त्वं, बाध्यत्वेनैव विपक्षानन्तर्भावात्पारमार्थिकसत्तां च वारयन्त्या चतुर्थ्यामुयाऽद्वैतसिद्ध्या स्वपूर्वाचार्यानभिमता चतुर्थी सत्ताप्युत्पाद्येत ।

यत्तूक्तं केनचित् देहात्मैक्यभिन्नत्वस्यापि पक्षविशेषणत्वेन तत्र सिद्धसाधनताभावात् वादिमतेन सिद्ध साधनस्यादोषत्वात् ब्रह्मप्रमातिरिक्ताबाध्यमिथ्याभूतदेहात्मैक्यस्वीकर्तुः अद्वैतिभिन्नस्य अभावात् सिद्धसाधना भावाच्च । अपि च

---

1 इद च देहात्मैक्ये साध्यनिश्चयेनोक्तोपाधेःसाध्याव्यापकत्वसमर्थनं स्वानुयायिनैव खण्डित स्वव्याहत च दृश्यते।"सिंहमाणवकयोरिवममशरीरंइतिदेहात्मनोःस्पष्टतरभेदावभासेन देहात्मैक्यारोपासभव इति मताश्रयणात् न देहात्मैक्ये सिद्धसाधन इतितरङ्गिणीवचन खण्डयितुप्रवृत्तसौगन्ध्यविमर्शकृतःवचनंदेहात्मैक्येमिथ्यात्वन निश्चितमितिप्रतिपादितम्।तथाहितद्वाक्यं"अद्वैतमते देहात्मैक्यमनारोपितमिति मतमेव नास्ति।तथा च तस्यापि व्यावहारिकत्वेन पक्षत्वेऽपि घटादीनामिव मिथ्यात्वसंशयस्यैव विद्यमानत्वात् ।अधिष्ठानसाक्षात्काराभावे मिथ्यात्वानिर्धारणात् न सिद्धसाधनावकाशः" इति।तथा च अधिष्टानसाक्षात्कारस्यैव बाध्यमिथ्यात्वनिर्धारकत्व स्वय अद्वैतिभिरभ्युपगतमेव।

ब्रह्मज्ञानाव्यवहितपूर्ववर्तिभ्रमसिद्धे प्रातिभासिके साध्याव्यापकत्वान्नायमुपाधिः" इति।

तत्तुच्छम् । दत्तोत्तरत्वात् । देहात्मैक्यभिन्नत्वस्य पक्षविशेषणत्वे तस्य असद्ब्रह्मणोरिवामिथ्यात्वप्रसङ्गः । प्रातिभासिकत्वापातो वा । मिथ्यात्वसंशयस्यैव विद्यमानत्वादिति स्वपक्षीयोक्तिविरोधश्च । निश्चतमिथ्यात्वस्य व्यावहारिकत्वायोगश्च । भ्रान्तिव्यवहारादेः विषयमिथ्यात्वनिश्चयप्रयुक्तत्वात् । न हि रजतं मिथ्येति जानतः तदादानादौ प्रवृत्तिर्दृष्टा । अद्वैतिभिन्नेन येनोक्तव्यावहारिकदेहात्मैक्यं न स्वीकृतं, यतस्तत्र न सिद्धसाधनं दूषणं , तन्मत रीत्यैवास्योपाधेरपि उद्भाव्यत्वेन साध्यव्यापकताभङ्गायोगश्च । अर्धजरतीयत्वापत्तेः । यदुक्तं "ब्रह्मज्ञानाव्यवहितपूर्ववर्तिभ्रमसिद्धप्रातिभासिकेत्यादि" तदप्ययुक्तं । त्वयैव तत्र सिद्धसाधनं परिहर्तुं या रीतिरनुसृता तस्या अत्राप्युपयोक्तुमर्हत्वात् ।

**नातो दोषः सर्वमेतत्सम्यक् समर्थितं हि मत्पूर्वैः ॥**

एतत्सर्वं मत्पूर्वाचार्यैरेव तरङ्गिण्यादिषु समर्थितं इत्याह **नातो दोषः इत्यादिना** । तरङ्गिण्यां न च ब्रह्मज्ञानमात्रबाध्ये देहात्मैक्ये मिथ्याभूते साध्याव्यप्तिः । तस्य ब्रह्मज्ञानमात्रबाध्यत्वासिद्धेः । मम देहः इति देहात् भेदस्य सर्वैरनुभूयमानत्वेन देहात्मैक्याध्यासासंभवस्य वक्ष्यमाणत्वेन मिथ्याभूतदेहात्मैक्यासिद्धेः इति समर्थितं । कण्टकोद्धारे च देहात्मैक्यभ्रमस्यैवाभावात् मम देहः इति सर्वेषां प्रमैव न तु देहोऽहमिति भ्रमः कस्यापि इति । अङ्गीकृतं चैवं मधुसूदनसरस्वतिनाऽपि सिद्धान्तबिन्दौ तदुक्तं "तद्विशिष्टे स्थूलदेहाध्यासः धर्मपुरस्कारेणैवाहं मनुष्यः इत्याद्याकारः (भ्रमः) न तु स्वरूपतः अहं देहः इत्यध्यास" इति । शंकराचार्यस्तु अपरोक्षानुभूत्यां देहोऽहमित्ययं मूढः धृत्वा तिष्ठत्यहो जनः" इति (श्लोक १ ३ ) तादृशभ्रमस्य प्रसिद्धिमनुमोदते । ब्राह्मणोऽहम् स्थूलोहं कृशोऽहमित्यादिप्रत्ययास्तु सिंहो देवदत्त इत्यादिवत् औपचारिका एव । तद्बीजंतु एकदेशस्थत्वम् । सन्निकृष्टत्वं वा । अथवा कृशादिपदानां कृशत्वविशिष्टदेहस्वामी अर्थः । मुख्यार्थस्य देहस्य आत्मनाऽ भेदस्य मम शरीरं इत्यादिना बाधितत्वात् । तथाचोक्तप्रत्ययानां अभ्रमत्वेन बाधावताराप्रसक्तिः। तेन केनचिदुक्तं "अहं देहः

इत्यध्यासस्याननुभवेन अनुभूयमानं अहं ब्राह्मणः स्थूलः इत्याद्यध्यासं प्रति तद-भावानवगाहिनः नाहं देहः इति ज्ञानस्य बाधकत्वासंभवात् नाहं ब्राह्मणः इत्यादेः प्रत्यक्षस्याभावादि "ति । तदपास्तम् । अहं ब्राह्मणः स्थूलः इत्यादीनां अभ्रमत्वात् । तेषां ब्राह्मण्यादिविषिष्टदेहस्वामित्वसामानाधिकरण्यविषयकत्वात् । भ्रमत्वे वा देहाभेदसामान्यबाधकस्य "मम देहः" इति प्रत्ययस्य ब्राह्मण्यादिविशिष्टदेहविशे-षाभेदबाधक त्वस्यापि सुलभत्वाच्च ॥६५॥

**अथवायमुपाधिः यत्स्वमात्रबाधकाबाध्यदोषहेतुकं भानम् ॥६६॥**

**तद्विषयत्वं तच्च देहात्मंक्यअस्त्यतो न क्षतिः व्याप्तेः ।**

**चरमे साक्षात्कारे स्वमात्रबाधकत्वस्य राहित्यात् ॥६७॥**

प्रकारान्तरेणापि उपाधिरुपपाद्य इति दर्शयति **अथवेति** ॥ स्वमात्रबाधकाबाध्यदोषप्रयुक्तज्ञानविषयत्वंउपाधिरितिविवक्षणात्, ब्रह्मज्ञानस्य स्वेतरजगद्बाधकत्वात् स्वमात्रबाधकत्वाभावात् स्वमात्रबाधकेतिपदेन ब्रह्मज्ञानग्रहणायोगात् तदबाध्यअविद्यादिदोषप्रयुक्तभ्रमविषयत्वात् देहात्मैक्यस्येति साध्यव्यापकत्वसमर्थनात् भवत्येवायं उपाधिरित्यर्थः । साधनाधिकरणे दृश्ये प्रपञ्चे तु स्वमात्रबाधकाबाध्यदोषप्रयुक्तभानत्वं नास्ति । स्वपदेन दृश्यमात्रस्यग्रहणे तद्बाधकस्य चरमसाक्षात्कारस्य अदृश्यासद्ब्रह्माबाधकत्वात् स्वमात्रबाधकब्रह्मज्ञानाबाध्यदोषाणामप्रसिद्ध्या पक्षे उपाधिर्नास्ति । साध्यव्यापकत्वसमर्थनावसरे स्वपदंनिश्चितमिथ्यात्ववत्परम् । साधनाव्यापकत्वकथनावसरे तु स्वं व्यावहारिकम् । ब्रह्मज्ञानं तु प्रागेव बाधितं प्रातिभासिकंनबाधतेइतिसर्वमनवद्यम्।

अथवा स्वमात्रबाधकबाध्यीयत्वावच्छिन्नं साध्यं विवक्षणीयमित्येतदर्थपरं इदं वचनम् । तथा च साध्याधिकरणपदेन देहात्मैक्यग्रहणायोगात् न साध्यव्याप-कत्वभंगः । साधनाश्रयत्वेन वियदादिग्रहणे च तद्बाधकत्वेन ब्रह्मज्ञान स्वीकारसं-भवात् साधनाव्यापकत्वं संभवति इति । यथा हि प्रागभावो विनाशी प्रमेयत्वा-दित्यत्र जन्यत्वरूपोदासानधर्मावाच्छिन्नसाध्यव्यापकस्य भावत्वस्योपाधित्वं

तथाऽत्रापि इति ज्ञेयम् । न च तस्याप्यस्त्वलक्ष्यत्वं इति वाच्यम् । हेतोः साध्येन व्याप्तिं विघटयतः कस्यापि निमित्तस्याभावेन व्यभिचारित्वस्यापि भङ्गप्रसङ्गात् । न हि येन क्वचित् सहचरितोपि धर्मः निर्निमितं क्वचित्स्थानान्तरे तं व्यभिचरति । ध्वंसे विनाशित्वं परित्यज्य वर्तमानस्य प्रमेयत्वस्य घटादौ भावत्वसाहचर्यनिमित्तमैव भावत्वप्रयुक्तविनाशसामानाधिकरण्यं अङ्गीकर्तव्यम् । प्रयोजकान्त रस्य अदृष्टत्वात् । जन्यत्वस्य तु विनाशवत्प्रागभावव्यावृत्तत्वेन न नाशप्रयोजकत्वम् । न च भावत्वस्यापि तथात्वात्कथं तस्य प्रयोजकत्वं इति वाच्यम् । जन्यत्वावच्छिन्नं प्रति प्रयोजकत्वस्वीकारात् । तथा सति भावत्वावच्छिन्नं प्रति जन्यत्वस्यापि तद्भवत्येवेति चेदस्तु समानयोगक्षेमत्वात् । ध्वंसो प्रागभावो वा विनाशी प्रमेयत्वादिति प्रयुक्ते जन्यत्वरूपोदासीनधर्मावच्छिन्न साध्यव्यापकस्य भावत्वस्य वा भावत्वरूपोदासीनधर्मावच्छिन्नसाध्यव्यापकस्य जन्यत्वस्य वा उपाधित्वं युज्यते एव ॥ ६७ ॥

## [1]स्वबाधकाभिमते सप्रकारेति शेषतो न दोषश्च ॥६८॥

उपाध्युपपत्तौ क्रमान्तरं चास्तीत्याह **स्वबाधकाभिमते इति**।देहात्मैक्यबाधकत्वेनाभिमते ब्रह्मज्ञाने इत्यर्थः । सप्रकारेति शेषतः सप्रकारकेति विशेषणविवक्षणात् । न दोषः न साध्यव्यापकताभङ्गः । चात् देहात्मैक्यस्य

---

[1] लघु । टी । तथा चेदमुक्त भवति । स्ववृत्तिमिथ्यात्वनिश्चयजनकतानवच्छेदकस्वस्वघटकविषयकत्व, स्वाभावाद्यप्रकारकत्व एतदुभयाभाववद्बाधकाबाध्यदोषप्रयुक्तभानत्व उपाधिरिति । निर्विकल्पकं हि हि ब्रह्मज्ञान ब्रह्मज्ञानत्वेनैव देहात्मैक्य वियदादि च बाधते । न तु स्वबाध्यघटकविषयकत्वेन ।देहात्मैक्यभ्रमस्यात्मत्वावच्छिन्नआत्मविषयकत्वेपिवियदादिज्ञानस्यतथात्वाभावात्।सविकल्पकंतुज्ञानदेहात्मैक्यंबाधमानमपिवियदाद्यबाधकमेव । तथा च निर्विकल्पज्ञान ब्रह्मज्ञानत्वेनैव स्वबाध्यमिथ्यात्व निश्चाययति । सविकल्पक तु स्वबाध्यघटकआत्मविषयकत्वेन स्वबाध्यदेहात्मैक्यमिथ्यात्वनिश्चायक भवतीति प्रकृते सविकल्पकमेव देहात्मैक्यबाधकत्वेन ग्राह्यभवेत्।तथाहि-स्वदेहात्मैक्यस्ववृत्तियन्मिथ्यात्वंतन्निश्चयजनकतावच्छेदक-स्वस्वघटकविषयकत्वम्।तदनवच्छेदकस्वस्वघटकविषयकत्व( वत्व ) सविकल्पके नास्तीति तदुभयाभाववद्बाधक भवति । निर्विकल्पके तु ब्रह्मज्ञानत्वस्यैव देहात्मैक्यनिश्चयजनकतावच्छेदकत्वात्, स्वस्वघटकविषयत्वस्य ब्रह्मज्ञाननिष्टत्वेऽपि देहात्मैक्यनिश्चयजनकतानवच्छेदकत्वात्, स्व देहात्मैक्य तद्वृत्तिमिथ्यात्वनिश्चयजनकतानवच्छेदकं यत् स्वस्वघटकविषयकत्ववत्वंस्वाभावाद्यप्रकारकत्वंचतत्रस्तएवेतिउभयाभावाभावाद्नतस्यदेहात्मैक्यबाधकत्वेन ग्रहणयुक्तम्।स्वस्वघटकविषयकत्ववत्वस्यैवअभावात्निर्विकल्पब्रह्मज्ञानेवियदादिबाधकतयातद्ग्रहणंसंभवति ।नेदरजतइतिज्ञानबाध्यप्रतियोगिकाभावप्रकारकमेवेतिरजतबाधकः भवति।

ब्रह्मज्ञानबाध्यत्वानुपपतिरपि समुच्चिता। सप्रकारकब्रह्मज्ञानस्य निर्विकल्पकब्रह्मसाक्षात्कारजनकत्वेन अद्वैतात्मयाथार्थ्यबोधकत्वात्। आत्मभ्रमीयदेहात्मैक्यबाधकत्वे बाधकाभावात्, तस्य च देहात्मैक्यभ्रमप्रयोजकीभूताविद्यादिदोषाबाधकत्वं सुगममिति उपाध्युपपत्तिरिति भावः। वियदादिप्रपञ्चबाधकत्वेन सप्रकारकज्ञानस्य विवक्षायां तु निश्चितमिथ्यात्वकत्वापत्तेः बाधकत्वात् निर्विकल्पकब्रह्मज्ञानस्यैव प्रतिबन्धकत्वाभ्यु पगमावश्यकतया तदबाध्यदोषाणामेवाभावात् न साधनाव्यापकत्वक्षतिः॥ ६८॥

**यच्चोक्तं दोषधिया पक्षेतरतासाम्यमीरितोपाधेः।**
**बाधितहेताविष्टं अनौष्ण्यसाधकहेतौ तु वन्हिभेदवत्॥६९॥**

[1] पक्षेतरत्वसदृशः उपाधिःन युक्तः भवेदिति उक्तस्य न्यायामृतोक्तयुक्त्यनालोकमूलकत्वं उपपादयितुं पूर्वपक्षं पुनरनूद्य मूलोक्तदूषणमेव विशदयति। **यच्चोक्तमित्यादिना** इतिशब्दाध्याहारेण, ईरितोपाधेःपक्षेतरत्वसाम्यं इति दोषधिया यदुक्तं तदयुक्तं इति शेषेण च योज्यम्। ईरितोपाधेः उक्तोपाधेः। दोषधिया कथंचित् दोषः वक्तव्य इति धिया। चः एवमुक्तेः न्यायामृतोक्त युक्त्यनालोकप्रयुक्तत्वसमुच्चायकः। बाधितहेतौ इति तत् इति अध्याहार्यम्। पक्षेतरत्वसाम्यं इत्यर्थः। बाधितं यत्साध्यं तत्साधकहेतौ विद्यमाने सति उपाधेःपक्षेतरत्वसाम्यं इष्टमित्यर्थः। तत्रदृष्टान्तमाह **वन्हिभेदवदिति**॥

---

[1] ल। टि। पक्षेतरत्वसाम्यमिति। पक्षादितरत् पक्षेतरत्। तस्य भावः। पक्षेतरत्व पक्षेतरत्वेन पक्षेतरत्वस्य वा सदृशः इति विग्रहः। दीधितिकारस्तु "पक्षः इतरः यस्मात्सः पक्षेतरः उपाधिः भावप्रधानो निर्देश इति पक्षेतरत्व तस्य अर्थः" इति व्याख्याति। पक्षेतरे अतिव्याप्तिश्च इति मणिकारवचनसामञ्जस्यार्थ बहुव्रीहिसमासं भावप्राधान्यच आश्रित्य व्याख्याततेनेतिज्ञेयम् 'पक्षेतरस्मिन्' इतिवा पक्षेतरत्वे इतिवा वक्तव्ये पक्षेतरे इति प्रयुक्तत्वात् न बहुव्रीहौ इति बहुव्रीहिसमासघटक इतरादिशब्दाना सर्वनामसञ्ज्ञाया निषेधात् न तत्कार्य इति बहुव्रीहिः आश्रितः इति गदाधरः पक्ष इतरयति व्यावर्तयतीति पक्षेतरः। इति मिश्राः। इतरपदस्य लक्षणया भेदपरत्वे भावप्रत्यययस्यानुपयोगात् पक्षेतर एव उपाधिरिति गदाधरः। सादृश्य च व्यतिरेके व्यर्थविशेषणवत्वाभिव्यग्य बोध्यम्। अथवा पक्षमात्र व्यावर्तकविशेषणवत्वाभिव्यग्यसादृश्यम्॥

ननु साध्यव्यापकः साधनाव्यापक एवोपाधिः[1] तत्वं पक्षेतरत्वेऽप्यस्तीति तदप्यस्तूपाधिरिति । न च पक्षमात्रव्यावर्तक विशेषणवत्त्वात्, व्यतिरेके व्यर्थविशेषणत्वाच्च नायं उपाधिरिति वाच्यम् । अनाद्रेन्धनवत्, धूमवत् वन्हेरित्यत्र संयोगस्य साधनव्यापकत्वात् आर्द्रेन्धनेति पक्षमात्रव्यावर्तकविशेषणस्योपादेयतया, आर्द्रेन्धनसंयोगोप्यनुपाधिः स्यात् । केवलेतरत्वस्य केवलान्वयित्वेन, इतरान्यत्वस्य, इतरत्वाभावस्य वा अप्रसिद्ध्या, तद्वारकतया पर्वतेत्यादि विशेषणस्य सार्थक्यसंभवाच्च । न च उपाधिव्यतिरेकेण पक्षे साध्याभावसाधनेऽसाधारण्यात् दूषणा क्षमत्वान्नायमुपाधिः इति वाच्यम् । प्रोक्तानुमानेऽपि आद्रेन्धनसंयोगरूप-उपाध्यभावस्य अनार्द्रएन्धनवन्मात्रवृत्तितया तद्धेतुकसत्प्रतिपक्षानुमानेऽसाधारण्यात्, आर्द्रेन्धनसंयोगस्याप्यनुपाधित्वापत्तेः । न चेयं इष्टापत्तिरितिवक्तव्यम् । अन्यत्राऽपि वन्हिधूमयोः परस्परसंबन्धस्य निष्प्रयोजकत्वेन स्वाभाविकत्वापत्त्या, साधनवद्विपक्षस्य व्यभिचारनिरूपकस्यालाभात् अनुमानस्य निर्दुष्टत्वापत्तेः । अतः वन्हेः क्वचित् धूमजनकत्वस्य, क्वचिदजनकत्वस्य चोपपत्त्यर्थ वन्हिना धूमोत्पत्तौ कस्यचन प्रयोजकस्य अवश्यंभावात् आर्द्रेन्धनसंयोगातिरिक्तस्य तस्यालाभात्, तस्यैव प्रयोजकत्वे सिद्धे सर्वत्र वन्हिना धूमसाधने तस्यैवोपाधित्वं च वक्तव्यम् । नहि पक्षभेदेन प्रयोजकं भिद्यते । ततश्च प्रकृतपक्षे साध्यसंबन्धो व्यावर्तनीयः । तथा च व्यतिरेकेण साध्याभावसाधनेऽसाधारण्यस्य क्वचिद-किञ्चित्करत्वं वा, उपाधेः व्यभिचारमात्रोन्नायकत्वेन दोषत्वं वा अङ्गीकृत्य हेतु-साध्यसंबन्धप्रयोजकत्वेन दूषणसमर्थस्य पक्षेतरत्वस्यापि उपाधित्वमङ्गीकर्तव्यं इति चेन्मैवम् । अनुमानमात्रोच्छेदप्रसङ्गात् । न चेत् पक्षेतरत्वमुपाधिः, उक्तोपाधिलक्षणं तत्रातिव्याप्तं स्यादिति चेन्न । साधनवद्विपक्षाव्यावर्तकविशेषणशून्यत्वेन विशेषणीयत्वात् । तथा च पर्वतो वन्हिमान्धूमादित्यत्र पर्वततरत्वस्य वा अपर्वतीयवन्हिसामग्रीयुक्तत्वादीनां वा साधनवद्विपक्षाव्यावर्तकविशेषणत्वेन उपाधित्वव्यावृत्तिः । तत्र साधनवद्विपक्षस्यैव अभावात् । प्रागुक्तानुमाने वह्निरनुष्णः कृतकत्वादित्यत्र च आर्द्रेन्धनसंयोगस्य वन्हिभेदस्य च संग्रहः । तत्र पक्षस्यैव

---

[1] उपाधिः-उप-समीपेस्थित्वा ( साधनाभिमतसहचरितेन) कार्यआधीयतेअनेनेतिउपाधिः।उपसर्गेघोः किःइतिकिप्रत्ययेआतोलोपइटिचेतिआकारलोपेउपाधिरितिरूपम्॥

साधनवद्विपक्षत्वेन तद्व्यावर्तकविशेषणवत्वात् वन्हिभेदस्य,[1] आर्द्रेन्धनसंयोगस्य वा तदव्यावर्तकविशेषणशून्यत्वात् भवत्येव उपाधित्वम्। बाधोन्नीतस्य पक्षेतरत्वस्य [2] शास्त्रकारैरुपाधित्वेन स्वीकारात् बाधानुन्नीतस्य तस्य अनुपाधित्वार्थं उक्तविशेषणं सार्थकम्।

पर्वतीयवन्हिसामग्रीयुक्तविपक्षीभूतवृक्षादिव्यावर्तकविशेषणवत्त्वात्[3] अपर्वतीय वन्हिसामग्रीयुक्तत्वमपि उपाधिः स्यादिति विपक्षे साधनवदिति-विशेषणम्। ननु बाधस्य हेतुदोषत्वेन अनुमितिप्रतिबन्धसंभवे का नामोपाधेरावश्यकता ? इति चेन्मैवम्॥

असङ्कीर्णोपाधिमद्दुष्टानुमानस्यैवाभावात् उपाधिमात्रोच्छेदापत्तेः। अयमत्रविवेकः। यत्र साधनवत् पक्षस्यैव निश्चितसाध्याभाववत्त्वेन विपक्षत्वात् व्यभिचारनिरूपकता तत्र व्यभिचारोपपादकतया उपाध्यन्वेषणम्। यथा वन्हिरनुष्णः कृतकत्वात्, अनार्द्रेन्धनवत् धूमवत् वन्हेः, प्रध्वंसो विनाशी जन्यत्वादित्यादि। यत्र बाधासिद्ध्योः संकीर्णता तत्र पक्षस्य व्यभिचारानिरूपकत्वात् नोपाधेरपि मृग्यता। यथा ह्रदो वन्हिमान् धूमात् इत्यादि। एवं बाधानुन्नीतस्यैव पक्षेतरत्वस्य अनुपाधित्वेन न तस्य कथायामपि उद्भाव्यत्वम्। बाधोन्नीतस्य तु निर्दुष्टत्वेन वादे उद्भावनेऽपि न निग्रहादिकमित्याशयवान् आह **इष्टमिति**। अत्र बाधोनीतस्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वरूपोपाधेः पक्षेतरत्वसाम्यं इष्टमेव तस्य अदोषत्वादिति भावः। तर्हि पूर्वपक्षिणा कथं तदापादनं कृतं इत्यत आह **दोषधिया इति**। पक्षेतरत्वसदृशसामान्यस्य दोषत्वभ्रमेण इत्यर्थः।

---

[1] लघुटि बाधोन्नीतस्येति। बाधेन पक्षसाध्यसदेहप्रतिबन्धेनोपाधेः पक्षान्तर्भावेन साध्यव्यापकत्वसन्देहानकाशेन बाधबलनिश्चितसाध्यव्यापकत्वमेव उपाधौ बाधोन्नीतत्वं इति॥द्वैतद्युमणिः॥

[2] शास्त्रकारैरिति "बाधोन्नीतस्याप्यनुपाधितापत्तेः। न चेष्टापत्तिः। इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहेण तत्सार्थक्यात्। अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रं उच्छिद्येत" इति चिन्तामणिः॥

[3] साधनवदिति - एतेन जन्याणवः सकर्तृका कार्यत्वादित्यादौ अनणुत्वस्य उपाधित्वेन उद्भावनेऽपि तत्र साधनवद्विपक्षस्यैवाप्रसिद्ध्या तदव्यावर्तकविशेषणवत्त्वेन अतिव्याप्तिः परास्ता इति ज्ञेयम्।

**अनौष्ण्यसाधकहेताविति**। सति इति शेषः। **वन्हिभेदवदिति**। वन्हिभेदरूपोपाधेःपक्षेतरत्व साम्यवदित्यर्थः। इदं च उपलक्षणम्। यथा वन्हिना धूमसाधने अनुकूलतर्कादिसहकारेण निश्चितसाध्यव्यापकत्वस्य आर्द्रेन्धप्रभववन्हिमत्त्वादेः उपाधित्वं तथा प्रकृतेऽपीति भावः। तथा च पक्षमात्रव्यावर्तकविशेषणवत्वं वा व्यतिरेके व्यर्थविशेषणत्वं वा, व्यतिरेकेण साध्याभावसाधने असाधारण्यं वा न कस्यचनानुपाधित्वे बीजं, किन्तु अनुकूलतर्कसद्भाव एव। बाधोन्नीतोपाधौ अपि अनुकूलतर्कसद्भावेनैव साध्यव्यापकत्वनिश्चयः। बाधानुन्नीते तु पक्षेतरत्वे अनुकूलतर्काभावात् साध्यव्यापकत्वनिश्चयादनुपाधिता। तच्चोक्तं चिन्तामणिकारेण। "न च पक्षेतरे स्वव्याघातकत्वेनानुपाधौ अतिव्याप्तिः। तत्रानुकूलतर्काभावेन साध्यव्यापकत्वनिश्चयात् बाधोन्नीते चानुकूलतर्कोस्त्येवेति। "अत एव धूमे आर्द्रेन्धनप्रभव वन्हिमत्वं,द्रव्यबहिरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्वं मित्रातनयश्यामत्वे शाकपाकजत्वं ,जन्यानित्यत्वे भावत्वमुपाधिः इति।

एवमेव हि दीधितिकृताप्यभिहितम्। तथा हि साध्यव्यापकत्वनिश्चयात् उपाधित्वौपयिकतदनिश्चयात्। अनुकूलतर्कादिना तादृशव्यापकत्वनिश्चये तु बाधोन्नीतवत् भवत्येव निश्चितोपाधिः। न च स्वव्याघातकत्वान्नायमुपाधिः। तद्धि न सर्वानुमानसाधारण्यं, अनुकूलतर्कादिनिश्चितव्याप्तिके हेतौ तदभावात् इति। तथा यद्यपि पर्वतावयवरूपादेरपि व्यावर्तकं तत्। तथापि तस्य व्यावृत्तिः नोपाधिताया मुपयुज्यते ,अपि तु पक्षस्यैवेति तन्मात्रव्यावर्तकत्वमुक्तम्। इदं चानुपाधितायां न बीजम्। परिभाषामात्रत्वात्। किन्तु अनुकूलतर्काभावेन तादृशसाध्याव्यापकत्वनिश्चयः इति द्रष्टव्यं "इति।

एतेन "यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वं; इतरांशेऽनुकूलतर्काप्रसरात् तथा च क्षित्यङ्कुरादिकं न कर्तृजन्यं शरीराजन्यत्वादित्यत्र यथा शरीरविशेषणवैय्यर्थ्यात् न शरीरजन्यत्वं कर्तजन्यत्वव्यापकं, एवं वियदादिकं न मिथ्या स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वाभावात् इति साध्यव्यतिरेकसाधने स्वबाधकाभिमताबाध्यभागस्य वैय्यर्थ्यात्, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं न मिथ्यात्वव्यापकम्। दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकं, तच्च

साधनव्यापकमपीति नोपाधिः। दृश्यत्वादिनैव मिथ्यात्ववत्तस्यापि ,साधनात् "- इत्यादि सिद्ध्युक्तमपि प्रत्युक्तं भवति।तथाहि - यदि वियन्मिथ्या स्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानं स्यात् । वियन्न भवति स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानं तस्मान्न मिथ्येत्यनुकूलतर्केण बाधेन च साध्यव्यापकत्वनिश्चयः भवति । स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वाभावस्याखण्डत्वेनातिरिक्तत्वात्।

यद्वा अस्तु स्वरूपासिद्धिपरिहारकत्वमस्य विशेषणस्य । व्यभिचारावारकत्वेन व्यर्थविशेषणत्वेऽपि स्वव्यापकसाध्यसामानाधिकरण्यरूपायाः व्याप्तेरक्षतत्वात् । न्याये कथंचित्सार्थकमपि न व्यर्थम् । न च व्याप्तिग्रहे तस्यानुपयोगात् एकामसिद्धिं परिहरतो द्वितीयापत्तिरिति व्याप्यत्वासिद्धिः स्यादेवेति वाच्यम्।

व्यर्थविशेषणस्य व्याप्यत्वासिद्धित्वेन अदोषत्वात् । न हि शुक्तिरूप्यादौ मिथ्यात्वं दोषप्रयुक्तभानत्वसहचरितमुक्तविशिष्टं तद्व्यभिचरति । न वा ब्रह्मणि सत्यत्वं दोषप्रयुक्तभानत्वाभावेन समानाधिकृतंस्वबाधकाभिमता बाध्यदोषप्रयुक्तभानत्वाभावं परित्यजति । तस्माद्व्याप्त्यादिविघटनद्वाराऽनुमितिप्रतिबन्धकत्वाभावान्न दोषः। नन्वेवं सति नीलधूमादित्यनुमानप्रयोगे कथं निग्रहः ? इति चेदुच्यते । तत्र नीलपदस्य स्वरूपासिद्धिवारकत्वस्याप्यभावादाधिक्यादधिकप्रयोगस्यापि दृष्टान्ते साध्यवैकल्यादिवत् निग्रहस्थानत्वस्य ग्राह्यत्वात् । तदुक्तंतर्कताण्डवे ( I–३५६ ) " तस्माद् व्यर्थविशेषणस्य न क्वापि व्याप्यत्वासिद्धित्वेन दूषणता । किन्तु विशिष्टस्य हेतुत्वाभिप्रायेण प्रयोगेऽधिकत्वेन" इति । तथाचोक्तं मथुरानाथतर्कवागीशेन "वस्तुतस्तु व्यर्थविशेषणत्वेपि स्वव्यापकसाध्यसामानाधिकरण्यरूपा वा साध्याव्यभिचरितसंबन्धरूपा वा व्याप्तिः दुर्वारा । न चैवं वन्हिमान् नीलधूमादिति प्रयोगे कथं निग्रह इति वाच्यम् । उद्भावितदृष्टान्तस्य साध्यादिवैकल्यवदधिकप्रयोगस्यापि निग्रहस्थानविभाजकसूत्रस्थचकारेणानुक्तसमुच्चयपरेण तस्यापि समुच्चयादि" ति । न चैवं सति ईश्वरानुमाने शरीरजन्यत्वमुपाधिः स्यादिति वाच्यम् । इष्टापत्तेः । दोषप्रयुक्तभानत्वं न दोषजन्यं यज्ज्ञानं तद्विषयत्वम् । तस्याधिष्ठानेऽपि सत्त्वेन मिथ्यात्वाप्रयोजकत्वात् । किन्तु दोषप्र-

युक्ता या ज्ञाननिरूपितविषयता तदाश्रयत्वम्। तथा च निर्विषयकवृत्तेरसंभवात् ब्रह्मनिष्टविषयतायाः निर्विकल्पकचरमसाक्षात्कारनिरूपिताया अपि दोषप्रयुक्तत्वेन केवलदोषप्रयुक्तभानत्वाभावेनामिथ्यात्वसाधने, दृष्टान्ते आत्मनि साधनवैकल्यमिति दोषप्रयुक्तभानत्वाभावत्वावच्छेदेन सत्यत्वनिरूपितव्याप्तेरग्रहात् स्वबाधकेत्यादि विशेषणम्। अत्र च स्वपदं स्व, स्वविषयज्ञान एतदन्यतरपरमवधेयम्। बाधस्य भ्रममात्रबाधकत्वस्य द्वैतिभिङ्गीकारात्। तेन ब्रह्मज्ञानस्य ब्रह्माबाधकत्वेऽपि न क्षतिः। ब्रह्मज्ञानस्यापि यद्बाधकं स्वमेव ब्रह्मज्ञानं तदबाध्यदोषाणामप्रसिद्ध्या तादृशदोषप्रयुक्तभानत्वाभावः दृष्टान्ते सङ्गच्छत इति न साधन वैकल्यम्। अतः स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वाभावत्वस्यैव व्याप्यतावच्छेदकत्वान्न दोषः। तथा च दोषप्रयुक्तभानत्वेन मिथ्यात्वसाधने ब्रह्मणि व्यभिचार इतितद्वारकस्योक्तविशेषणस्य व्यभिचारवारकतयैव सार्थक्यं संपन्नमिति न कश्चित् क्षुद्रोपद्रवः। स्वबाधकाभिमता बाध्यदोषप्रयुक्तभानत्वस्य मिथ्यात्वेन,तदभावस्य च सत्यत्वेन समनिततयोभयत्र प्रकृतविशेषणं सार्थकम्।

यद्वा संभवति लघुधर्मस्यावच्छेदकत्वे गुरुधर्मस्यानवच्छेदकत्वमिति दोषप्रयुक्त भानत्वाभावत्वस्य व्याप्यतावच्छेदकत्वे संभवति उक्तविशिष्टाभावत्वस्य व्याप्यतानवच्छेदकत्वमिति व्याप्यत्वासिद्धिकथनं व्यक्तमलीकम्। निषेधप्रतियोगित्वस्य व्यापकतावच्छेदकत्वे प्रतिपन्नोपाधौ त्रैकालिकेतिघटितस्य तदनवच्छेदकत्वेन, व्यापकतानवच्छेदकसाध्यतावच्छेदककत्वरूपव्यापकत्वासिद्धेरपि दोषत्वापातात्। तथा च इदं सौरभविशेषवद्धूमरहितं चन्दनप्रभववन्हिरहितत्वात्, अयं धूमाभाववान् आर्द्रेन्धनप्रभववन्ह्यभावात् इत्यनुमानं न स्यात्। न च तदिष्टम्। कारणविशेषाभावेन कार्यविशेषाभावानुमितेर्दर्शनात्। यदि विशिष्टस्य कारणतया व्यापकत्वात् विशेषव्यतिरेकस्थले विपक्षबाधकेनानन्यगतिकतया तदुपपादनं तर्ह्यस्त्वत्राप्येवम्। विशिष्टस्यैव प्रयोजकत्वात्। तच्चोपपादितम्। तथा चासिद्धिवारकतया सार्थकविशेषणघटितहेतोरपि व्याप्यतावच्छेदकं सुलभम्। उक्तं च तर्कताण्डवे "नाप्यर्थान्तरं असिद्धिवारकत्वेन प्रकृतोपयोगात्" इति। अत एव घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादिति प्रयोगे मध्यान्तविशेषणस्य व्यभिचारावारकस्यासिद्धिवारकतया सार्थकस्योपादानं मणिकारेण कृतम्। तदुक्तं मणौ येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेद-

कत्वनियमात्। अत एव गन्धस्यैव व्यञ्जकत्वादित्यत्राप्रसिद्धत्वेन रूपादिषु मध्ये इति विशोषणं विना व्याप्ति गृहीतुं न शक्यते इत्यप्रसिद्धवारकमपि विशेषणं सार्थकमेवे"ति। न च तत्र हेत्वप्रसिद्धिः अत्र तु पक्षे हेत्वसिद्धिरिति कथं न वैषम्यमिति वाच्यम्। त्वद्रीत्या दोषप्रयुक्त भानत्वाभावस्याप्यप्रसिद्धेः। अधिकंतु द्वात्रित्कोटिभूषायां द्रष्टव्यम्।

अपि च यदुक्तं "दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकत्वमि"ति। तदपि न युक्तम्। तन्मते ज्ञानविषयत्वस्यैव वा विषयत्वमात्रस्यैव वा साध्यव्यापकत्वेन दोषप्रयुक्तभानत्वस्य साध्याव्यापकत्वात्। यदप्युक्तं तच्च साधनव्यापकमिति। तदपि न। द्वैतिभिस्तदनङ्गीकारेण तन्निश्चयाभावात्। नच वाच्यं तदपि मिथ्यात्ववत् दृश्यत्वेनैव साध्यते इति उक्तमिति। अस्माभिरपि दृश्यत्वेन मिथ्यात्वसाधने दोषप्रयुक्तभानत्वमुपाधिः, दोषप्रयुक्तभानत्वसाधने मिथ्यात्वमुपाधिः युगपदुभयसाधने अर्थान्तरतेति उक्तत्वात्॥ ६९॥

**वन्हिरनुष्णो भवति इत्यत्रेव बाधकोऽस्त्येव।**

**सन्घट इत्यादेरबाधतः स्वभावतश्च बलवत्त्वात्॥ ७०॥**

नन्वस्तु कुत्रचित् बाधोन्नीतपक्षेतरत्वं उपाधिः अत्र मिथ्यात्वानुमाने तु बाधाभावान्न बाधोन्नीतोपाधिरित्यत आह **वन्हिरिति**। नन्वस्तु अनुष्णत्वसाधकानुमाने बाधः तथापि कोऽत्र बाध इत्यत आह **सन्घट इति**॥ ननु तस्यापि बाध्यत्वेन बाधकत्वासंभवात् तस्यैव प्रकृतानुमानबाध्यत्वात् नैवमित्यत आह **अबाधतः स्वभावतश्चलवत्तवादिति**॥ सन्घटः इत्येतत् प्रत्यक्षं घटः न सन् इतिबाधाद्यभावात् भवत्येव बाधकं इति भावः। अनुमानस्य प्रत्यक्षोपजीवकत्वात् **प्रत्यक्षापेक्षया दुर्बलत्वात्** उपजीव्यत्वेन प्रकृत्या प्रबलप्रत्यक्षबाधकत्वं न संभवति इति भावः। एतच्च प्रागेवोक्तम्। उपपादयिष्यते च। एतेन अधिष्ठानाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः इति समर्थितं भवति। अनात्मवृत्तित्वरूपपक्षधर्मावच्छिन्न साध्यव्यापकत्वविवक्षणात्।

यद्वा उक्तदिशा सति मिथ्यात्वनिश्चये उभयवाद्यभिमतबाधकज्ञानविशेष्यस्यैव अधिष्ठानत्वेन अभिमतत्वं संभवति। क्षणिकत्वादिमिथ्यात्वस्योभयवादि-

भिरपि निश्चितत्वात् । [1] पूर्ववद त्रापि इत्थं विवेक्तव्यम् बाधकज्ञानविशेष्यत्वं हि अधिष्टानत्वं । न तु भ्रमविशेष्यत्वं । बाधकोत्पत्तेः पूर्वं बाध्यस्य भ्रमत्वस्यैवा-निश्चात् आधिष्टानत्वनिश्चयानुदयप्रसङ्गात् । सति उभयवादिनोः मिथ्यात्व-निश्चये एकदेश्यभिमतबाधकस्य तन्निश्चायकत्वस्याप्रयोजकत्वात्, उभयसंमत-बाधकज्ञानादेव इदमधिष्टानं इति निश्चेतव्यम् । अधिष्टानं निश्चितमेव उपाधि-घटकमुपयुज्यते । यद्यपि बाध्यज्ञानविशेष्यं एव बाधकज्ञानेऽपि विशेष्यमिति भ्रमविशोष्यत्वमपि अधिष्टाने सुगमं, तथापि लाघवात्, भ्रमत्वस्यापि बाधकज्ञा-नाधीनधीविषयतयोक्तस्यैवाधिष्टान त्वोपपत्तेः । ब्रह्मानन्दस्तु स्वजनकाज्ञानविष-यतावच्छेदकत्वं अधिष्टानत्वं मनुते । तदेतत्स्वजनकस्य अज्ञानत्वासिद्धौ अधिष्टानत्वासिद्धेरयुक्तम् । अविज्ञातधर्मघटितस्य [2] लक्षणस्य लक्ष्यानिर्धार-कत्वात् । प्रतिवादि भिरपि क्षणिकत्वे मिथ्यात्वस्य निश्चितत्वेन ब्रह्म न क्षणिकं इति ज्ञानस्यैव तद्बाधकत्वोपगमे बाधकाभावात्, तस्य च सप्रकारकत्वेनाद्वैति-रीत्या निष्प्रकारकज्ञानमात्रगोचरशुद्धविषयकतया तद्विषयीभूतव्यावहारिक सत्ताकब्रह्मरूपाधिष्ठानसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वात्क्षणिकत्वादेः न साध्याव्यापकत्वम् । साधनाधिकरणजगतः मिथ्यात्वं नाद्यापि निश्चितमिति, यस्याद्वैतिन एवायं निश्चयः तज्जनकतया तेनैवाभिमतं यद्ब्रह्मज्ञानं तद्विशेष्यस्य शुद्धस्यैवाधिष्ठानत्वाभिमतत्वेन तत्समसत्ताकाविद्यादिदोषवद्धेतुजन्यज्ञानविष-यत्वाभावात् साधनाव्यापकत्वं च युज्यते एव । द्वैतिरीत्या तु सत्ताया [3] एकविधत्वेन दोषाणामपि पारमार्थिकत्वाभ्युपगमात्तैः, न साध्यव्यापकत्वक्षतिः ॥ अधिष्टान-समसत्ताकेत्यादि अनुक्त्वा अधिष्टानाभिमतसमसत्ताकेति विशेषयतोऽयमेवा-भिप्रायः विज्ञेयः । स्वमात्राभिमतस्य वा परमात्राभिमतस्य वा अधिष्ठानत्वस्य

---

[1] ल।टी। उक्तरीत्यामिथ्यात्वनिश्चायकंबाधकभवति।तेनबाधकत्वेनवेदादेरपिग्रहणसभवः॥

[2] लघु टि अभिप्रेत चैतत्त् ब्रह्मानन्देन तथाहि तद्वाक्य - अन्यतमरूपेण दोषाणा निवेशेऽनन्त दोषघटि-तान्यतमत्वस्य दुर्ज्ञेयतापत्तिः । तावदन्यतमत्वोक्तेः स्वरूपतो निवेशेऽविद्यान्यदोषाणामेव तावदन्यतमत्वस्वरू-पेण निवेशासंभवेन अबाध्यान्तवैय्यर्थ्यापत्तिः । तेन रूपेण साध्यव्यापकताग्राहकतर्काभावश्च इति।

[3] ल । टी । उभयवादिगतमिथ्यात्व निश्चयजनक तदुभयसमत बाधकज्ञानविशेष्यत्व, वादि (मात्र) वृत्ति प्रतिवाद्यवृत्तिमिथ्यात्वनिश्चयजनकधीविशेष्यतया वादिमात्राभिमतत्व एतदन्यतरत्वद-धिष्टानसमसत्ताकदोषवद्धेतुजन्य ज्ञानविषयत्व उपाधिरिति पर्यवसितार्थः ।

स्वसंमतत्वे अधिष्टानसमसत्ताकेत्येवावक्ष्यत् । सूचिता चैषा स्वस्य क्षणिकत्वस्य ब्रह्मारोपाविस्मृतिः ब्रह्मणोऽपि बौद्ध कल्पितदोषवद्वेदजन्यज्ञानविषयत्वादिति उत्तरग्रन्थेन यत्प्राक् पक्षतावच्छेदकशरीरे उक्तक्षणिकत्वे सिद्धसाधनपरिहारकं सप्रकारेणाबाध्यत्वविशेषणं विवक्षितम् अधिष्टानसमसत्ताकेत्यनेन व्यावहारिकबाधाबाध्यत्वस्य दोषविशेषणत्वेन विवक्षितत्वात्, ब्रह्मणि क्षणिकत्वादि कल्पनाहेतोर्दोषस्य वा, शून्यवाद्युत्थापिततर्कादेर्वा व्यावहारिकबाधाबाध्यत्वेन विशिष्टोपाधिविरहस्य तत्राप्यसत्त्वादिति तरङ्गिणीकारा अद्वैतसिद्धिकृदुक्तदोषं परिहरन्ति।

तदा तदाशयमजानन् आह ब्रह्मानन्दः "व्यावहारिकेत्यादिकं तु न युक्तं। शुक्तिरूप्यादिज्ञापके दोषेऽपि व्यावहारिकस्य यत् बाधकं ब्रह्मज्ञानं तद्बाध्यत्वस्य सत्वात्,व्यावहारिकविषयकबाधाबाध्यदोषोक्तावपि व्यावहारिकदोषमात्रस्य तत्त्वेन शुक्तिरूप्यादाविव वियदादौ, क्षणिकत्वादि ज्ञानविषयत्वमादाय ब्रह्मणि चोक्तोपाधेरसत्त्वेन साध्यसमव्याप्त्यभावात् इति । तदसत् । व्यावहारिको यो बाधः तदबाध्यदोषवद्धेतुजन्यज्ञानविषयत्वस्यैवोपाधित्वेन विवक्षितत्वात् । व्यावहारिकत्वं च त्वद्रीत्या ब्रह्मप्रमेतराबाध्यत्वमेव । ब्रह्मप्रमापि निर्विकल्पकचरमसाक्षात्कारएवेह विवक्षिता । न तु ब्रह्मविषयका । तथा च चरमसाक्षात्कारेतरानिवर्त्यो यो बाधः तदबाध्यदोषवद्धेतुजन्यज्ञानविषयत्वं उपाधिः। चरमसाक्षात्कारो वा "नेदं रजतं" इत्यादि बाधज्ञानं वा "ब्रह्म न क्षणिकं" इति सप्रकारकबाधकज्ञानं वा ब्रह्मप्रमामात्रनिवर्त्यमिति तत्सर्वं व्यावहारिकमेव । रजतज्ञानहेतुर्वा ब्रह्मणि क्षणिकत्वभ्रमहेतुर्वाउक्त व्यावहारिकबाधज्ञानान्न बाध्यते इति न साध्याव्याप्तिः । जंगद्भ्रमहेतोरविद्यायास्तु व्यावहारिकब्रह्मज्ञानरूपबाधात् बाध्यत्वेन व्यावहारिकबाधाबाध्यदोषवद्धेतुजन्यज्ञानविषयत्वस्य पक्षेऽभावेन न साधनव्यापकत्वं च।

इह व्यावहारिकबाधश्च बाधकत्वेन संप्रतिपन्नः एव ग्राह्यः। न तु यःकश्चित् । तेन शुक्तिरूप्य क्षणिकत्वादिबाधकतया ब्रह्मज्ञानस्य ग्रहणायोगात् न तदादाय साध्याव्याप्तिः। विषयत्वं चेहाधिष्ठानातिरिक्तनिष्टं विवक्षितमिति न वियति शुक्त्यादौ ब्रह्मणि वा उपाधेः सत्त्वं इति समव्याप्तिरपि न भज्यते।

श्रु तितात्पर्या विषयत्वं यतो मिथ्यात्वसाधकं दृ ष्टम् ।
तस्यो पाधितयो क्तौ साधनव्यापकता त्वयो दिता ॥ ७१ ॥

श्रुतितात्पर्यं ब्रह्मण्येव नान्यगं तस्मात् ।
साधनदृ श्यत्वस्य व्यापक उपाधिरित्यतो नो पाधिः ॥ ७२ ॥

इत्युक्तं तदयुक्तं अवान्तरतात्पर्यमस्ति यज्जगति
श्रुतेर्सर्वोत्कर्षे मुख्यंत्वित्यादिकं श्रुतितोऽपि ॥ ७३ ॥

श्रुतिः

"सर्वोत्कर्षे देवदेवस्य विष्णोः महातात्पर्यं नैव चान्यत्र सत्यम् ।
आान्तरं तत्परत्वं ततोऽन्यत्सर्वागमानां पुरुषार्थः ततोऽतः
इति पैङ्गिश्रुतिः ।
मुख्यं तु सर्ववेदानां तात्पर्यं श्रीपतेः परम् ।
उत्कर्षं तु तदन्यत्र तात्पर्यं स्यादवान्तरम् " । इति च ।

ननु न्यायामृतोक्तं श्रुतितार्त्पर्याविषयत्वं नोपाधिः श्रुतितात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतया साधनव्यापकत्वादिति चेत् तन्निरसितुं तदनुवदति **श्रुतितात्पर्याविषयत्वमित्यारभ्यनोपाधिरितिपर्यन्तग्रन्थेन नान्यगं न जगन्निष्टम्** ॥

तदेतत्खण्डयति **इत्युक्तमित्यादिना** । अयं भावः । यतः श्रुतितोऽपि श्रुते मुख्यं तात्पर्यं परब्रह्मणि, जगति अवान्तरता. त्पर्यं अस्तीति विज्ञायते अतः दृश्यत्वाधिकरणे जगति श्रुतितात्पर्यविषयत्वसद्भावात् न श्रुतितात्पर्यविषयत्वं साधनव्यापकमिति । केयं श्रुतिः या स्वस्या मुख्यामुख्यवृत्त्या ब्रह्मजगतोः तात्पर्यं वक्ति इत्यत आह **सर्वोत्कर्षे इति** । अयं भावः । तात्पर्यं द्विविधं मुख्यं अवान्तरं चेति । तच्चासक्तिरूपत्वेन चेतनाश्रितमपि स्वविषयवाचक त्वेन शब्दनिष्ठं इति

व्यवह्रियते । यथा हि आकांक्षा चेतनधर्मोऽपि तद्विषयाः साकांक्षाः, तत्प्रति पादकत्वात्पदान्यपि साकांक्षाणीत्युच्यन्ते । यथा च वेदवाक्यं स्वतन्त्रप्रयोक्त्र-भावेऽपि (कर्त्रभावेऽपि) साकांक्षमित्युच्यते तथेहापि श्रुतेर्जडत्वेऽपि, कर्त्रभावेऽपि तात्पर्यं युज्यते । शब्दश्च तात्पर्याधीनः सन् क्वचिदेकं क्वचिदर्थान्तरं च अवगमयति । तत्र प्रचुरोत्कटासक्तिः (इच्छा) मुख्यतात्पर्यमित्युच्यते । इतरस्तु अवान्तरममुख्यं इत्यादि शब्देन ।

यद्वा सः परः प्रतिपाद्यः यस्य सः तत्परः । तस्य भावः तात्पर्यं । प्रतिपाद-कत्वं इत्यर्थः तच्चमुख्यामुख्यवृत्तिभेदेन द्विविधम् । तत्रामुख्यं अवान्तरमित्युच्यते । इति ।

अत्र कश्चित् (ब्रह्मानन्दः) "ब्रह्ममात्रनिष्टतयेति । अवांतरतात्पर्य विषयत्वं तु यागादिनिष्टे स्वर्गसाधनत्वे न तु यागादौ "[1] अनुपलब्धेस्तत्प्रमाणं" इति जैमिनिसूत्रैकदेशेन मानान्तरानुपलब्धे एव श्रुतितात्पर्योक्तेः ।

साधनत्वादिविशिष्टतया यागादाविव मिथ्यात्वविशिष्टतया दृश्यमात्र एव श्रुतितात्पर्यात् . साध्याव्यापकत्वापत्तेः परमतात्पर्यमेव निवेश्यमिति भावः" इत्याह । तदेतदत्यान्तासङ्गतम् । मिथ्यात्वविशिष्टतया शुक्तिरूप्यादेः मानान्तरनिश्चिततया तत्रावान्तरतात्पर्यस्याप्यभावात् साध्याव्यास्यभावात् । तथा च परमतात्पर्यनिवेशस्य अनवश्यकत्वेन अवान्तरतात्पर्यविषये वियादादौ उक्तोपाधेरभावान्न साधनव्यापकत्वमपीति भवत्येवायं उपाधिः ।

ननु शुक्तिरूप्यत्वावच्छेदेन तत्र मिथ्यात्वस्य मानान्तरावगतत्वेपि दृश्यत्वावच्छेदेनानवगतत्वात् संभवत्येव श्रुत्यवान्तरतात्पर्यं शुक्तिरूप्ये इति चेन्न । सर्वत्र यत्किञ्चिदवच्छेदेन मानान्तरानवगतत्वस्य संपादयितुं शक्यत्वेन उक्तसूत्रैकदेशवैय्यर्थ्यापत्तेः । ब्रह्मप्रमान्याबाध्यत्वावच्छेदेन असद्विलक्षणत्वा-

---

[1] न । टी । (१-१-५) औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणंबादरायणस्यानपेक्षत्वादि"ति ॥

वच्छेदेन ब्रह्मा ऽन्यत्वावच्छेदेन मिथ्यात्वस्य श्रुतितात्पर्योक्ति संभवाच्च । ब्रह्मप्रमेतराबाध्यत्वावच्छेदेन दृश्यमिथ्यात्वे श्रुतितात्पर्यकल्पनायां वा बाधकाभावाच्च।

अत्र तरङ्गिणीकाराः श्रुतितात्पर्याविषयत्वं नाम श्रुतिजन्यप्रमां प्रति अविषयत्वम् । धर्मादिसिद्ध्यर्थं तेषां श्रुतिजन्यप्रमाविषत्वाङ्गीकारावश्यकतया साधनाव्यापकत्वं इति सिद्धिकृतं खण्डयन्ति । अत्रापि ब्रह्मानन्दः प्रत्यवतिष्टते। तथा हि (तद्वाक्यं) "श्रुतिजन्येत्याद्यपि न युक्तम् । नेह नानास्तीत्यादिश्रुतिजन्यप्रमाविषयत्वस्य दृश्यमात्रे सत्त्वस्योक्तत्वात् । निषेध्यत्वेन विषयत्वान्यविषयत्वोक्तावपि इदगँ सर्वमसृजत, सत्यं चानृतं च सत्यमभवत् इत्यादिश्रुत्या मानान्तरनैरपेक्ष्येण ब्रह्मोपादानकत्वादिना कार्यमात्रप्रमापनात् कार्यमात्रनिष्टकार्यतायाःव्यवहारकालाबाध्यत्वात्। अन्यथा घटादेरपि तादृशप्रमां प्रत्यविषयत्वात्, पृथिवी ब्रह्मेत्यपासीत इत्यादिश्रुतिजन्यज्ञानस्य मानान्तरज्ञातपृथिव्याद्यंशे प्रमात्वाभावात् । किंञ्चिदंशे प्रमात्वविवक्षायां प्रातीतिकपृथिव्यादेरपि तादृशविषयत्वसम्भवान्मिथ्या नोपास्यमिति सङ्क्षेपोक्तेः मिथ्यात्वेन ज्ञातं नोपास्यमित्यत्रैव तात्पर्यात् । तथा च साध्यव्यापकत्वरक्षार्थमबाध्यविषयकत्वरूपप्रमात्वनिवेशे साधनव्यापकत्वस्य दुर्वारत्वात्" इति। तन्मन्दम् । केवलविषयत्वस्य प्रमाविषयत्वस्य वा केवलान्वयित्वेन तदभावस्य अप्रसिद्धेः साध्याव्यापकत्वात् श्रुतिजन्येति प्रमाविशेषणत्वेन विवक्षणीयत्वात्, तस्य च श्रुतिजन्यप्रमाविषयत्वस्य अद्वैतिरीत्या सर्वथा अविषयीभूतासद्ब्रह्मणोरपि साध्यसमव्याप्तिभङ्गप्रसङ्गात्, श्रुतीतरजन्यज्ञानविषयत्ववैशिष्ट्येन निवेशनावश्यकत्वात्, तदपेक्षया लाघवात् श्रुतिभिन्नजन्यप्रमां प्रति निषेध्यत्वेन विषयत्वस्यैवोपाधित्वेन विवक्षणात् । किञ्च यदुक्तं "नेहनानास्तीत्यादि श्रुतिजन्यप्रमाविषयत्वस्य दृश्यमात्रे सत्त्वस्योक्तत्वादि"ति । तदयुक्तम् । शुक्तिरूप्यस्य तन्निषेधस्य वा मानान्तरावगतत्वात्, तदतिरिक्तविषय एव श्रुतेः प्रमापकत्वात् । व्यावहारिकप्रपञ्चविषये तु स्वरूपमात्रस्य मानान्तराधिगतत्वेऽपि तन्निषेधसत्त्वादीनां अनधिगतत्वात् श्रुतेः प्रमापकत्वम् । प्रागुक्तन्यायं प्रचालयता

जैमिनिनाप्येतदेवाभिप्रेतम्[1] । अपि च श्रुतिजन्यप्रमां प्रति निषेध्यत्वेन विषयत्वान्यविषयत्वाभावस्योपाधित्वोक्तावपि न नो हानिः । शुक्तिरूप्यादीनां "इदं सर्वं असृजत इत्यादिश्रुतिबोध्यत्वासंभवात् । तदुपगमे मायामात्रोपादानत्वापत्त्या सादृश्यादीनां तद्धीं प्रति अनिमित्तत्वप्रसङ्गात् । भ्रमीयव्यवहारोच्छेदापत्तेः मूलाज्ञानविलयोक्त्ययोगात् । व्यवहारोपयोगित्वापत्तेश्च । शुक्तिरूप्यनिष्ठकार्यताया अपि व्यवहारकालाबाध्यत्वे बाध्यत्वलिङ्गेन सद्वैलक्षण्यसाधनायोगात् ।

घटादेस्तु उक्त "नेहनानेत्यादिश्रुतिजन्यप्रमायां निषेध्यत्वेन विषयत्वेन तदन्यविषयत्वाभावेऽपि यतो वा इमानि भूतानि जायन्ते इत्यादि श्रुतिजन्यप्रमाविषयत्वेन साधनाव्यापकत्वात् । यच्चोक्तं मिथ्यात्वविशिष्टदृश्यमात्रे श्रुतेरवान्तरतात्पर्यमस्ति न तु अन्यत्रेति । तत्स्वव्याहतम् । बिन्दुटीकायां न्यायरत्नावल्यां श्रवणादिनिष्ठतया तदभिधानात् । तथाहि तद्वाक्यं " तस्य च विचारशास्त्रस्य विचार्यवेदान्तावाक्यद्वारा परमं तात्पर्यमुक्तैक्ये । अवान्तरं तु शुद्धजीवब्रह्मस्वरूपयोः तदैक्यसाक्षाकारहेतुश्रवणादौ च प्रत्यक्षादिप्रमाणसिद्धदृश्याद्यनेक भागभागिन्यां प्रक्रियायां तु अनुवादकत्वं" इति ॥

**॥ इति सोपाधिकत्वविचारः ॥**



---

[1] लघु टि प्रमाणान्तराधिगतनिषेधकश्रौतविध्यनुद्देश्यत्वमुपाधिरित्युक्त भवति।

श्रीः

## आभाससाम्यविचारः

पूर्वपक्षः आभास साम्यं नाप्येषां नैते बाधितगोचराः ॥

सिद्धान्तः इतिश्लोकेन यत्तूक्तं प्रातिभासिकता न हि ।
देहात्मैक्येऽस्ति दृश्यत्वं व्यभिचारिततोऽभवत् ।७४ ।

इति त्वदुक्तं युक्तं न प्रातिभासिकतात्र हि ।
देहात्मैक्ये भवेद्देही ह्यहमित्येव बोधतः ॥ ७५ ॥

बाधात् प्रत्यक्षजं नैव किन्तु स्यादानुमानिकम् ।
देहात्मैक्यं साध्यमत्रास्त्यतो न व्यभिचारिता ॥ ७६ ॥

आभाससाम्यं चोक्तं न्यायामृते, विमतं प्रातिभासिकं दृश्यत्वात् शुक्तिरूप्यवत् ब्रह्म मिथ्या व्यवहारविषयत्वात् असद्विलक्षणत्वाद्वा शुक्तिरूप्यवत् इति । आभास साम्यं च आभासानुमानत्वेन निश्चितेन अनुकूलप्रतिकूलादिमत्त्वे साम्यं इत्यर्थः । तथाच यथा आभासानुमानं न साधकं तथा प्रकृतानुमानमपि इति भावः । आभाससाम्यं च प्रकृतानुमाने अनुमानाभासवृत्तिदोषसमानदोष-ज्ञापकतया दूषणं भवति । तदेतद्दोषजातं परिहर्तुकामंस्य परस्य भावमनूद्य निरस्यति **इति श्लोके यत्तूक्तं इति** । चोऽध्याहार्यः । उक्तश्लोके यदुक्तं प्रातिभासिकता न हि देहात्मैक्येऽस्ति दृश्यत्वं व्याभिचारि ततोभवदिति च यदुक्तं तदुभयं न युक्तं इत्यर्थः । **भवेदिति** । उत्तरैणैवकारेण संबन्धः भवेदेवेत्यर्थः। बाधात् बोधतः इति च सामानाधिकरण्येनान्वयः ॥

ननु देहस्य ऐन्दियकत्वेन, आत्मनः स्वप्रकाशत्वेन कथं अधिष्ठानज्ञाने जागरूके आत्मदेहयोरैक्यज्ञानं इत्यत तस्य अप्रत्यक्षत्वेऽपि आनुमानिकत्वमस्तु इत्यङ्गीकृत्याह **किन्तु स्यादानुमानिकमिति** ।

अयं भावः। नाहं देहः किन्तु देहीति बाधात् ब्रह्मज्ञानेतरस्मात् देहात्मैक्यस्य बाध्यत्वेन ब्रह्मज्ञानेतरबाध्यत्वरूपप्रातिभासिकत्वस्य साध्यस्य तत्र सत्त्वान्न व्यभिचारः । अन्यथा तत्र मिथ्यात्वं न निश्चितं स्यात् एतेन प्रतिभासमात्रशरीरत्वस्य प्रातिभासिकत्वेऽपि न दोषः दृष्टिसृष्टिमतेन सिद्धसाधनत्वोक्तौ स्वोक्ताया एव व्यावहारिकसत्त्वबाधे व्यवहारानुपपत्तेः तन्मते सुस्थत्वप्रसङ्गात्। अयमभिसन्धिः- (१) विमतं प्रातिभासिकं दृश्यत्वादिति प्रयोगे अद्वैतसिद्धिकृता "व्यावहारिकसत्त्वबाधे व्यवहारानुपपतिः" इति प्रत्यवस्थितम् । तन्न शोभनम्। जगतः मिथ्यात्वे सत्त्वव्यवहारानुपपत्तेरुक्तमिथ्यात्वानुमानेऽपि साम्यात् । न च "घटोस्ति सन्घटः "इत्यादि व्यवहाराणामन्यथाप्युपपत्तेः न प्रतिकूलतर्कसाम्यं इति वाच्यम् । यथा हि "नासीन्नास्ति न भविष्यति" इति कालत्रयेऽपि सत्त्वाभाववतां घटादीनां व्यवहारो युज्यते इति त्वन्मतं, तथा भासानुमानप्रयोक्तृमतेऽपि तेषां प्रातिभासिकत्वेऽपि व्यवहार उपपद्यते एवेत्युभयत्र साम्यात्।

किञ्च त्वन्मते स्वाप्नगजाभावज्ञानबाध्यस्वाप्नगजस्य प्रातिभासिकत्वे स्वप्नकाले व्यवहार उपपन्नस्तद्वत् जगतः प्रातिभासिकत्वेऽपि व्यवहारोपपत्तिरस्तु। न च प्रातिभासिकत्वेऽपि व्यवहारोपपत्तौ नाममात्रवैलक्षण्येऽपि व्यावहारिकसत्त्वमभ्युपगतमेव भवेत्, व्यवहारोपयोगिसत्त्वस्यैव व्यावहारिक-सत्त्वस्वरूपात्वादिति वाच्यम् । तुल्ययुक्त्या व्यवहारोपयोगिसत्वस्यैव मन्मते पारमर्थिकत्वेननाममात्रवैलक्षण्येऽपि सत्यत्वमङ्गीकृतमेव स्यात् इति युक्तेस्तत्रापि साम्यात्।

अत्र तरङ्गिणीकृतः "सुखानुभवपर्यन्तव्यवहारस्याप्यव्यवहारिकत्वेन अप्रतिकूलत्वात्।स्वप्नोत्थापिततर्कवत्" इत्याहुः।तेषामयमाशयः।यन्मते मोक्षा-नुभवप्राक्कालीनानुभवादीनां व्यावहारिकत्वमपि नाभ्युपेयते तं प्रति उक्तापत्तेः रनिष्टत्वाभावात्, यतस्तेषां व्यवहारत्वस्यैवानभ्युपगमात् । दृष्टान्तोक्तिस्तु अद्वैतिनांआभासप्रयोक्तृसाम्योपपादनायैवइति॥२॥

गुरुचन्द्रिकायां "तत्तुच्छं घटादिज्ञाने अन्वयव्यतिरेकसिद्धस्य चक्षुषादिजन्यत्वस्य प्रत्यभिज्ञादि सिद्धस्य पूर्वोत्तरकालीनयोरैक्यस्य च व्यावहारिकत्वं स्वीकृत्यैव घटादौ व्यावहारिकत्वपक्षप्रवृत्तेः" इति प्रयुक्तंब्रह्मानन्देन । तदेतदेव तुच्छं जरीजृंभते । रजतादिज्ञानेऽपि चक्षुराद्य न्वयव्यतिरेकसिद्धस्य चक्षुरादिजन्यत्वस्य, असञ्जातबाधवत्पुरुषीयया प्राग्दृष्टमेवेदं रजतं इदानीं तत्रैवास्ति इति प्रत्यभिज्ञया सिद्धस्य चैक्यस्य प्रातिभासिकत्वस्वीकारवत् एवं सिद्धस्य सुखानुभवप्राक्कालीनस्य सर्वस्यापि प्रातिभासिकत्वं स्वीकृत्यैव घटादावपि प्रातिभासिकत्वपक्षप्रवृत्तेः । अन्यथा प्रातिभासिकत्वस्य व्यवहारविरोधाभ्युपगमवत् मिथ्यात्वस्यापि व्यवहारविरोधत्वाभ्युपगमे मिथ्यात्वसाधनेऽपि उक्तापत्तेः सत्त्वात् । यदि च मिथ्यात्वं न व्यवहार विरोधि इत्युच्यते तर्हि स्वीक्रियतां प्रातिभासिकत्वमपि तथाविधम् ।

(२) ब्रह्म मिथ्या व्यवहारविषयत्वात्, असद्विलक्षणत्वाद्वा शुक्तिरूप्यवदिति प्रयोगेऽपि प्रतिकूलमाह अद्वैतसिद्धौ ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिरिति । एतदप्यसारम् । शून्यवाद्युक्तेदृशाभासानुमानेऽस्या आपत्तेरप्रतिकूलत्वात् । न च शून्यवादित्वं स्वरूपतोऽनिष्टं किन्तु दोषवत्वेन । अनुमानदोषमनुक्त्वा केवलवादापत्तेरनुपयुक्तत्वात् । अन्यथा यदि जगन्मिथ्या उच्यते (स्यात्) तदा तव अद्वैतवादिता स्यादित्यापत्तेरनिष्टत्वप्रसङ्गात् ।

अस्मिन् विषये गौडः । "शून्यवादस्यैव स्वयं स्वीकृतत्वेनापत्त्यनर्हत्वादिति" इति यदुक्तंतरङ्गिणीकृता । तत्तुच्छम् । त्वन्मतसिद्धस्य सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वस्यापि मिथ्यात्वस्य अत्यन्तासति ब्रह्मणि च सत्त्वे मानाभावस्य उक्तत्वेन शून्यवादेऽस्मत्स्वीकारोक्तेरुन्मत्तप्रलापत्वान्न हि दृश्यमात्रमिथ्यात्वेन शून्यवादः किन्तु. सर्वासत्यत्वेन" इति स्वस्यैवोन्मत्ततां निरूपयति । अहो तस्य सुविस्मृतिः । द्वितीयमिथ्यात्वविचारे प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वसाधनेऽत्यन्तासत्त्वापत्तिपरिहारार्थं यद्यपि सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं तुच्छानिर्वाच्ययोः साधारणं इत्याद्यु क्त्वा यदिदानीं तत्सत्त्वे मानाभावस्योक्तत्वेन" इति वदति । किञ्च ब्रह्मण्यपि शुद्धे असद्वैलक्षण्य हेतोरसिद्धिमुक्त्वाऽर्थतस्तस्याप्यसत्त्वाङ्गीकारेण तदतिरिक्तस्य

मिथ्यात्वेन च शून्यवाद एव तेन वस्तुतोङ्गीकृत इति "शून्यवादोऽस्माभिरनङ्गीकृत" इत्युक्तिः केवलं प्रलापमात्रमिति सिद्धम् । इदं चोपलक्षणं योगाचारवादस्तु सर्वात्मनाऽभ्युपगत एवेति तदापत्तेः सुस्थत्वात् स्वव्याघातकं हि तद्वचनम् ।

किञ्च यदुक्तं व्यवहारविषयत्वरूपो हेतुरसिद्धः इति । तदयुक्तम् । आत्मनः स्वतोऽविषयत्वेऽपि अहंप्रत्ययव्यवहारविषयत्वस्य त्वत्पूर्वाचार्यैः सिद्धान्तितत्वात् । तदुक्तं नारायणसरस्वतिना वार्तिकाख्ये स्वग्रन्थे अहमित्यभिलापो द्विविधः एकः शुद्धात्मविषयोऽनुभविनां, अन्यः सर्वेषां चिदाभासविशिष्टाहंकारविषयः । परन्तु प्रथमो लक्षणया द्वितीयः शक्त्या इति भेदः एतदुभयविधाभिलापस्य वृतेरिव आत्मा विषयः"। एतेन अन्तःकरणविषयत्वमप्यात्मनः सिद्धं भवति । आलोकस्येव रूपिद्रव्येण, राहोरिव चन्द्रमसा अन्तःकरणेनात्मनः स्पष्टतयाऽभासनात् । एवं अनुभवस्वरूप आत्मा स्वयं निर्विकल्पतया व्यवहारायोग्योऽपि, स्वयं प्रकाशतयाऽदृश्योऽप्यविद्ययास्वाध्यायस्तान्तकरणं प्रकाशयन् तेन व्यवहारयोग्य इव दृश्य इवावभासते । अहमित्यनुभवे विशेषणतया भासमानम् अन्तःकरणं स्वविशेष्यं निर्विकल्पकं आत्मचैतन्यं विकल्पयद्विशिष्टव्यवहारगोचरं करोति इति । अन्यथा शुद्धे व्यवहारविषयत्वरूपो हेतुरसिद्धः" इति व्यवहारोपि न स्यात् । मूकोऽहं इतिवत् स्वव्याहतेश्च । किञ्च शुद्धे फलव्याप्यत्वानङ्गीकारेऽपि अद्वैतमते वृत्तिव्याप्यत्वस्याभ्युपगतत्वात्, वृत्तिव्याप्यत्वस्यैव हेतुत्वेनोक्तौ असिद्धेरभावात् । तदुदाहृतं न्यायरत्नावल्यां (पत्र १५५) "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् । ब्रह्मणोऽज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यत" इति । उक्तं च ब्रह्मानन्देन तत्रैव "वृत्तेराकाराख्यसंबन्धस्तु न मुख्यविषयता इति ब्रह्मणि स्वीकारेऽपि न विरोधः इति भावः" । इति ।

(३) यदुक्तं "वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽप्यप्रयोजक इति । यच्च यदि ब्रह्म मिथ्या न स्यात्तदा वृत्तिविषयो न स्यादिति न तर्कः मिथ्यात्वाभावेऽपि तत्र कल्पितस्य वृत्तिविषयत्वस्य संभवात् । ब्रह्मणः साक्षित्वेन बाधकप्रमाणस्य तत्र अनवतारादिति भावः "इत्युक्तमद्वैतसिद्धिगुरुचन्द्रिकयोः । तन्न । अभ्युपगतस्यैव कल्पितस्य वा वास्तवस्य वा वृत्तिविषयत्वस्य अभावः आपाद्य इति तस्य च परानिष्टत्वात्। अन्यथा मिथ्यात्वाभावेऽपि कल्पितस्य दृश्यत्वस्य वियदादावपि संभवात् ,

दृश्यत्वानुमानेऽपि तर्को नावतरेत् । एवं धूमानुमानेऽपि कल्पितधूमस्य वन्ह्यभाववति संभवेन अनुकूलतर्काप्रसरादप्रयोजकत्वं स्यादिति सर्वानुमानोच्छेदापत्तेः ।

(४) यच्चोक्तं असद्विलक्षणत्वमपि ब्रह्मण्यसिद्धमेव । क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं हि असत्त्वम् । तद्विलक्षणत्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपम् । तच्च ब्रह्मणि नास्त्येव । न च बाध्यत्वमसत्त्वं, तद्विलक्षणत्वं च अबाध्यत्वं तच्च ब्रह्मण्यस्त्येवेति वाच्यम् । अबाध्यत्वेन बाध्यत्वलक्षणमिथ्यात्वसाधनेविरोधात्, शुक्तिरूप्यदृष्टान्तस्य साधनविकलत्वाच्च शून्यवादस्याग्रे निराकरिष्यमाणत्वाच्च" इति । तत्तुच्छम् । शुद्धे असल्लक्षणाभावात् । तथा हि- कचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं यदि तुच्छलक्षणं तर्हि ब्रह्मणि त्वद्रीत्याऽतिव्याप्तिः । तस्य तुच्छत्वे शून्यवादापत्तिः। ब्रह्मणः सद्रूपत्वासामञ्जस्य प्रसङ्गश्च। अनिर्वाच्यत्वलक्षणे ऽसद्वैलक्षण्यपदवैय्यर्थ्यं च स्यात् । यदि तुच्छब्रह्मसाधारणं धर्ममात्रं तत्तर्हि किमत्र प्रकृतानुपयुक्तेन ? अस्माभिरपि असन्निष्ठ्यत्किञ्चिद्धर्माभावमात्रस्य हेतुत्वेन अविवक्षणात् । यदि च बाध्यत्वमसल्लक्षणं तर्हि (मायावादिरीत्या) अनिर्वाच्येऽतिव्याप्तिरित्यनिर्वाच्यब्रह्मावृत्ति किञ्चिल्लक्षणं वक्तव्यम् । तच्च यद्यखण्डोपाधिः तदा सिद्धमसद्वैलक्षण्यं शुद्धे । यदि च बाध्यत्वविशिष्टक्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमसल्लक्षणं तदापि फलितमस्मन्मनोरथद्रुमेण । विशेषणाभावादेव विशिष्टस्याप्यभावात् । "ब्रह्मभिन्ने शून्यवादिभिरस्माकं साम्यमिष्टमेव" (१३५ अद्वैतसिद्धिव्याख्योक्तेः) ब्रह्मण्यप्यसद्वैलक्षण्यस्यासिद्धत्वोक्तौ स्वस्यैव शून्यवादित्वेन, तन्मतनिराकरणं स्वाश्रयशाखाच्छेदनवत् स्वशिरश्छेदनवद्वा मूर्खत्वि धेयमेव।

अत्र सौगन्ध्ये शून्यवादस्यानिष्टत्वेन परं प्रत्यापाद्यमानत्वात्, जगन्मिथ्यात्वेऽपि तदापत्तेस्तुल्यत्वाच्च। न च सर्वासत्त्वे एव तदापत्तिः तच्च नास्ति मे । अधिष्ठानब्रह्मणः सत्त्वस्वीकारादिति वाच्यम् । प्रमाणासिद्धस्य त्वन्मते मिथ्यात्वात् ब्रह्मणः प्रमाणागोचरत्वेनाप्रामाणिकत्वात् सुतरां तदापत्तेः "इत्युच्चरितम् । तद्विमर्शे च "अस्मन्मते प्रमाणासिद्धत्वं न मिथ्यात्वप्रयोजकं। शशशृङ्गादीनामपि मिथ्या त्वापत्तेः किन्तु बाध्यत्वमेवेति प्रतिस्थातु प्रयतितम् । तद्व्यर्थं विपरीतं च । वनमालिमिश्रैः मिथ्यात्वपदेनासत्त्वस्याप्युपलक्षणतया

विवक्षितत्वात् । तथा च प्रमाणासिद्धत्वं मिथ्यात्वासत्त्वान्यतरप्रयोजकमित्युक्तं भवति । अतो नासतोऽपि मिथ्यात्वापत्तिः । प्रमाण सिद्धस्य मिथ्यात्वे साधकस्य प्रामाण्याऽयोगेन व्याघातप्रसङ्गः । न च प्रामाण्यव्यवहृतिरौपचारिकी । निर्विकल्पकस्य तथात्वप्रसङ्गेन जगद्बाधनासंभवापत्तेः । अन्यथा बाध्यत्वस्य ( मिथ्यात्वस्य ) वा औपचारिकत्वयुक्त्या सत्यस्यापि तत्संभवेनार्थान्तरतापत्तेः।

किञ्चैवं सति त्वन्मते मिथ्यात्वं बाध्यत्वरूपमेवेति प्रयोज्यप्रयोजकभावायोगः । अपि चैवमपि असतोऽपि त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वेन मिथ्यात्वापत्तेः दुर्वारत्वात् । यदि बाध्यत्वं नाभ्युपेयते तथा सत्य बाध्यत्वलक्षणसत्त्वस्यासत्यङ्गीकारार्हत्वप्रसङ्गश्च । ब्रह्मातिरिक्ते तत्र तस्येष्टत्वे ऽद्वैतहानिः । ब्रह्मानितरस्मिन् तत्र तस्य संमतत्वे शून्यवादः वज्रलेपायितः ।

अयं सौगन्ध्यकृदाशयः सप्रकारकज्ञानसामान्यस्यप्रमाणत्वेन तद्विषयस्य जगतः, निष्प्रकारकस्य प्रामाण्याभ्युपगमेऽपि ब्रह्मणः तुच्छस्य वा तदविषयत्वोपपादनाच्च न किमपि प्रमाणसिद्धमिति, प्रमाणासिद्धत्वहेतुना ब्रह्मतुच्छयोरपि मिथ्यात्वसाधने बाधकाभावात्, सर्वत्र हेत्वविशोषाच्च त्वन्मते ब्रह्म तुच्छे अपि मिथ्या संवृत्त एवेति तव शून्यवादित्वं दुष्परिहरमेव इति ॥



**॥ इति आभाससाम्यविचारः ॥**

**प्रत्यक्षबाधितं विश्वमिथ्यात्वं सद्घटादिकम् ।**
**प्रत्यक्षसिद्धं यत्तस्मात् प्रत्यक्षं तु स्वतो बलि ॥ ७७ ॥**

**लिङ्गात्तवाप्यभिमतं बाधोच्छेदप्रसङ्गतः ।**
**प्रत्यक्षबाधितं विश्वमिथ्यात्वं तदभूत् स्फुटम् ॥ ७८ ॥**

**सन्घटश्चेत्यधिष्ठानब्रह्मवस्त्ववभासते ।**
**यथेदं रूप्यमित्यत्र भातीदं रजताश्रयः ॥ ७९ ॥**

**इति त्वदुक्तं युक्तं न घटो रूपी पटस्तथा ।**
**इत्यादावपि तत्किं न तत्स्यादब्रह्मसधर्मकम् ॥ ८० ॥**

ननु प्रागुक्तोपाधेः, पक्षेतरत्वेऽपि दोषोन्नायकत्वं तस्य बाधोन्नीतत्वे एव संभवतीति, प्रकृतानुमाने च बाधाभावात् नोक्तस्योपाधित्वम् इत्यतः प्रात्यक्षिकबाधं तत्प्राबल्यं, मिथ्यात्वरूपपूर्वानुमानसाध्यविरोधि सत्त्वस्य प्रत्यक्षगोचरत्वम्, चोपपादयितुमुपक्रमते **प्रत्यक्षबाधितमिति** । यत् यस्मात् सद्घटादिकंप्रत्यक्षसिद्धंतस्मात्विश्वमिथ्यात्वंप्रत्यक्षबाधितंइत्यन्वयः।

ननु प्रकृतानुमानेनैव प्रत्यक्षस्य बाधः कुतो न स्यात् इत्यत आह **प्रत्यक्षं त्विति** । प्रत्यक्षस्य प्राबल्ये हेतुमाह[1] **स्वत इति** । "लिङ्गादिति" पूर्वेणान्वयःलिङ्गापेक्षया इत्यर्थः । लिङ्गापेक्षया प्रत्यक्षं स्वभावत एव प्रबलमिति भावः । प्रत्यक्षस्य स्वरूपप्राबल्यं तवापि सम्मतमन्यथा बाधसामान्योच्छेदप्रसङ्ग इत्याह **तवाप्यभिमतमिति** । प्रतिज्ञातमर्थं निगमयति **प्रत्यक्षेति** । सन् घट इति प्रत्यक्षं घटस्य सत्त्वमवगाहमानं सत् मिथ्यात्वं विरुणद्धि इति त्वदनुमानं बाधितम् मिथ्यात्वस्य सत्त्वस्य च परस्परं विरोधादित्यर्थः ।

---

[1] लघुटि स्वतइति।एतच्चोपपादयिष्यतेप्रत्यक्षप्राबल्यविचारेवैशेष्यमितिश्लोकव्याख्यानावसरे॥

ननु किमिदं सत्त्वं यत्प्रात्यक्षिकमानुमानिकमिथ्यात्वविरोधि ? द्रव्यत्वादिव्यापकजातिर्वा । असद्भिन्नत्वं वा । अर्थक्रियाकारित्वं वा । न सत्त्वरूपाणि । तेषां मिथ्यात्वविरोधित्वानभ्युपगमात् तादृशस्य सत्त्वस्य प्रत्यक्षयोग्यत्वोक्तौ मायावादिना सिद्धसाधनतोद्भावनात् । प्रमाविषयत्वं तु न भवति सत्त्वरूपम् । तथा हि प्रमाया प्रमाणजन्यत्वेन, प्रमाणप्रवृत्तेश्च । विषयसत्त्वातिरिक्तहेतुकत्वात्, सत्त्वस्य प्रमाविषयत्वरूपत्वेऽन्योन्याश्रयात्, असति प्रमाणाप्रवृत्तिं प्रति सत्त्वाभावस्य नियामकत्वात् सत्वं न प्रमाणजन्यप्रमाणविषयत्वरूपं भवितुमर्हति । सत्त्वाभाववति असति असन्नास्ति इति जानामीति प्रमाविषयकत्वेन, शशविषाणं शशविषणमसदिदितित्यसत्वप्रकारकप्रमाविषयत्वेन चातिव्याप्तेश्च ॥ नापि प्रमायां सत्त्वप्रकारकेति वाऽसत्त्वाप्रकारकेति वा असत्वाप्रकारेकति वा निवेशितुं शक्यम् । सत्त्वस्य सत्त्वलक्षणघटकत्वे आत्माश्रयादसत्त्वस्य सत्त्वाभावरूपत्वेनाभावज्ञानस्य प्रतियोगिज्ञाना धीनत्वेनान्योन्याश्रयाच्च । एतेन प्रमाविषयत्वयोग्यत्वं, भ्रमाविषयत्वं वा सत्त्वमित्यपि परास्तम् । सतोपि[1] असत्त्वप्रकारक भ्रमविषयत्वात् स्वसमानाधिकरणस्वसमानकालीननिषेधाप्रतियोगित्वं सत्त्वमित्यपि वक्तुं नोचितम् । संयोगस्य सतोऽपि अतथात्वात् अव्याप्तेः । रजताभावस्य निरधिकरणकरजतसामनाधिकरण्यायोगात् मिथ्याभूतस्य रजतस्यापि तदप्रतियोगित्वात्, अतिव्याप्तेः अबाध्यत्वमपि सत्त्वघटितमेवेत्यन्योन्याश्रयान्न सत्त्वं भवती इतिचेत्तत्राहुः न्यायामृतकाराः "उच्यत" इति । अत्र अद्वैतसिद्धौ न्यायामृतोक्तान् अष्टौकल्पानपि अनूद्य खण्डयित्वा कल्पान्तराणि च न्यायामृतोक्तानि पूर्वपक्षत्वेन कल्पयित्वा खण्डितानि । तत्र नापि पराभिमतमिथ्यात्वाभावः सत्त्वं, तुच्छेऽतिव्याप्तेः इत्युक्तम् । तन्नयुक्तम् । अद्वैतमते तुच्छब्रह्मातिरिक्तसर्वस्यापि मिथ्यात्वेन, तुच्छवैलशण्योक्तावपि तदुपपत्तेः। **सत्त्वेनाप्रतीयमानत्वमित्यत्र** सत्त्वशब्दस्य वर्तमानत्वमात्रार्थकत्वात् न

---

1 सतोपीति इद च समग्रदूषणपररीत्या। स्वमते तु अनारोपिततत्त्व इत्युक्तेः भवत्येव तत्सत्त्वम्। तत्र अनारोपिपस्य सामानाधिकरण्यप्रत्यय रूपभ्रमनिरूपितप्रकारत्वाभावपरत्वान्न सति असत्त्वप्रकारकभ्रमविषयत्वम्।

तुच्छलक्षणस्य सत्त्वघटितत्वम् । अन्यथा घटस्य स्वप्रकाशाद्वितीय चैतन्यत्वेन अप्रतीतत्वेन तस्याप्यसत्वापत्तेः।

(२) नाप्यसद्वैलक्षण्ये सत्यनारोपितत्वम् । अनारोपितत्वं हि आरोपाविषयत्वम्। तच्चासंभवि सर्वस्यापि क्षणिकत्वादिना आरोपविषयत्वादिति इत्युक्तम् तदपि युक्तंन । मन्मते सतो भ्रमविषयत्वानभ्युपगमात् । त्वन्मतेपि सतः सर्वथा प्रतीत्यनर्हत्वेन असंभवाभावात्।

(३) नाप्यत्यस्तित्वप्रकारकप्रमां प्रति कदाचित् साक्षाद्विषयत्वं प्रमात्वस्य सत्त्वघटितत्वेन चक्षुराद्यगोचत्वेन च पूर्वोक्तदोषात् वर्तमानत्वप्रकारकप्रमाविषयत्वेपि मिथ्यात्वाविरोधाच्चेति यदुक्तं तन्मन्दम् । मन्मते यथार्थज्ञानस्यैव प्रमात्वात् तस्य च सत्त्वाघटितत्वात् ।यथार्थत्वं च ज्ञाने स्वव्यधिकरणप्रकारावाच्छिन्ना या या विशेष्यता तत्तदनिरूपकत्वम्[1] यथावस्थित अर्थविषयीकारित्वं इति यावत् त्वन्मतेपि निष्प्रकारकज्ञानमात्रस्य प्रमात्वाङ्गीकारात्, तत्र सत्त्वस्यापि प्रकारत्वेनाभानात् विषेष्यावृत्त्यप्रकारत्वरूपप्रमात्वे च सत्त्वस्याघटकत्वात्, करणसन्निकर्षानुयोगित्वरूप विषयत्वस्य प्रात्यक्षिकप्रमेयेषु अवश्यमभ्युपेयत्वात् नेदृशस्य सत्त्वस्य चक्षुराद्य गम्यत्वम् ।एतच्चोपपादयिष्यते ॥ त्रैकालिकनिषेधप्रतियोगिनः वर्तमानकालिकत्वप्रकारकप्रमाविषयत्वासंभवात् भवत्येवेदृशसत्त्वं मिथ्यात्वविरोधीति अविरोधेत्युक्तिः प्रलापमात्रम्।

(४) द्वितीयमपि न मिथ्यात्वविरोधि शुक्तिरूप्यस्यापि। प्रतिभास कालसंबन्धित्वादिति । बाधेन तात्विक कालत्रयसंबन्धनिषेधेऽप्यतात्विककालसंबन्धस्यानिषेधात् । नापि तात्विककालसंबन्धित्वं तत्र तात्विकत्वस्याद्याप्यनिरूपणात् । निरूपणे वा शेषवैय्यर्थ्यादित्ययत्तूक्तमसिद्धौ तदसंगतम् अतात्विकरूप्य संबन्धिनः कालस्य तात्विकत्वे, तन्निषेधस्याप्रामाणिकत्वेन रूप्यस्य कालस्यचाबाध्यत्वापत्तेः ।

---

[1] लघुटि उक्तचैतत्प्रमाणलक्षणादौ।यथार्थज्ञानकेवलइतिमूलम्।साक्षाद्यथावस्थितार्थविषयीकारिकेवल इति टीकाचार्याः।येन प्रकारेण अवस्थित ज्ञेयं तथैव तेनैव प्रकारेण, विषयीकारि, ज्ञैयाव्यभिचारि इति यावत् इति राघवेन्द्रतीर्थाः(अत्रअवस्थितशब्दःविद्यमानत्वार्थकः ( वर्तमानत्वार्थक) नतुसत्त्वार्थकःयेनात्माश्रयस्स्यात्।)

अतात्विकत्वे च तस्य आश्रयत्वेनविषयीकृतस्यानारोप्यत्वात् "आभासस्य प्रसक्त्या अनाभासस्य निषेध इति न्यायेनापि निषेध्यत्वायोगात् । अन्यथा शुक्तेः तदाश्रयदेशस्य च बाध्यत्वापातात् । किञ्च धर्मिसंबद्धत्वेन भातस्य देशस्य, कालस्य वा प्रातिभासिकसंबन्धित्वे तस्यातात्विकत्वेन नैषेधिकेतरत्वावश्यकत्वात् समानधर्मिधर्मितावच्छेदककयोरेवज्ञानयोः प्रतिबध्यप्रतिबन्धकभाव इति नियमेन रजतस्याप्यबाध्यत्वप्रसङ्गात् । अन्यथा घटादीनामपि तत्संभवेनव्यावहारिककालबाध्यत्वापत्त्या अतिप्रसङ्गात् । किञ्च नेदं रजतं इति बाधस्य न प्रतिभासकाले तात्विकत्वनिषेधविषयकत्वं, किन्तु रजतस्य तात्विककालसंबध्दशुक्तितादाम्त्य निषेधमात्रविषयकत्वमस्तीति रजते तात्विककालत्रयसंबन्धनिषेधस्यार्थात् प्राप्तत्ववत् तात्विककालसंबद्धशुक्ति तादाम्त्यावगाहि, इदंरजतमिति ज्ञाने रजते तात्विककालसंबन्धस्य, अर्थात् प्रसक्तत्व प्राप्तौ तादृशकालस्यातात्विकत्वभानाभावात् । अपि च तात्विकत्वादीनामध्याप्यनिश्चयादेव रजते कालसंबन्धस्याप्यनिश्चितत्वेन न तत्र सत्त्वलक्षणस्यातिव्याप्तिरपि ।

"यादृशं ब्रह्मणः सत्त्वंतादृशं स्याज्जगत्यपि ।
तत्र स्यात्तदनिर्वाच्यं चेदिहापि तथास्तु नः"

इति प्राचीनोक्तेः "यः सर्वज्ञज्ञानस्वरूपब्रह्मणः स्वभावः स एव जगतोपि स्वभावः" इति नार्थः येन सार्वज्ञ्यादि धर्माणां ब्रह्ममात्रनिष्ठानां सत्त्वस्वरूपत्त्वोक्त्या जगतः सत्त्वाभावः आपद्यते । किन्तु यत्सत्त्वं ब्रह्मणि मिथ्यात्वं असत्त्वं च विरूणद्धि तदेव सत्त्वं जगत्यप्यङ्गीकारार्हमित्यर्थः।

एतेन "नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य "यदेव गोत्रं भवतस्तदेव मम इति वदतो वरस्य भ्राता भवान् । यतो जामातृश्वशुरयोः एकगोत्रत्वे विवाहानुपपत्तिवत्, जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात् तथा हि इत्यादि सिद्ध्युक्तम् । प्रत्युक्तम् दृष्टान्तस्यास्य विषमत्वात् । यद्येवं चेत् ब्राह्मण्यादिजातेः, स्वशाखादेः जामातृश्वशुरयोः एकविधत्वेपि विवाहोऽनुपपन्नः स्यात्। यथा हि भिन्नजात्योः वधूवरयोः विवाहोपपत्तिं कुर्वाणः वर्णसाङ्कर्यकारी तथैव जगद्ब्रह्मणोः भिन्नसत्तां वदन् भवान् नूनं तत्तनूनज एव । अथवा उपनयनसमये पुरोहितेन वटुगोत्रं पृष्टस्य, स्वात्मजस्य स्वकीयगोत्रातिरिक्तं गोत्रं

वदतः पितुः सखा भवान् । यतः ब्रह्मसृष्टस्य जगतः ब्रह्मसत्त्वातिरिक्तं सत्त्वं वदति। अपरिच्छिन्नत्वस्य नाद्वैतिरीत्या सत्त्वरूपता, परिच्छिन्नत्वहेतुना तदभावसाधने साध्याविशिष्टता स्यात् । मिथ्यात्वस्य सत्त्वाभावानात्मकत्वेनान्यादृशत्वे च सत्त्वमिथ्यात्वयोरविरोधेन ब्रह्मणि जगति वा तयोः समावेशः स्यात्।

ननु स्वप्रकाशाद्वितीयचैतन्यस्वरूपत्वमेव सत्त्वं तदेव चेत् जडस्यापि जगतः तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः" इति चेन्न । ईदृशस्य सत्वस्य मिथ्यात्वाविरोधित्वा।त् । स्वाभ्युपगतिमात्राधीनस्य अप्रयोजकत्वशंकापरास्तत्वात् । ईदृशचैंतन्यं मिध्या । अस्तु "इत्युक्तौ प्रतिकूलाभावात् । उक्तमिथ्यात्वानुमाने प्रथमपञ्चममिथ्यात्वस्य ईदृशचैतन्यस्वरूपत्वाभावात्मकस्य प्रपञ्चे सिद्धत्वाच्च । त्वन्मते सतः एकत्वेन सत्त्वद्वैविध्यासंभवात् पञ्चममिथ्यात्वविचारे प्रमाणसिद्धत्वस्य, सत्त्वरूपत्वप्रलपनं, द्वितीयलक्षणविचारेऽबाध्यत्वस्वरूपस्य सत्त्वस्य वल्गनं च व्यर्थ प्रसज्येत च । किञ्च यदि जडत्वविरोधिस्वप्रकाशसत्तया जडस्य मिथ्यात्वोपगमे, जडत्वमेव सत्त्वमुपगत्य स्वप्रकाशत्वविरोधिजडसत्तया ब्रह्मण एव मिथ्यात्वोपगमः किं नाद्रियते । न च रजते मिथ्याभूतेऽपि जडत्वसद्भावात् नेंद जडत्वं सत्त्वं भवितुमर्हति इति वाच्यम् । व्यवहारोपयोगित्वस्य तदर्थत्वात् ।

किञ्च न्यायरत्नावल्यां 'ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वशून्यत्वंसत्त्वं इत्यङ्गीकारात् इहोक्तस्य तथात्वाभावात् स्वोक्तिविरोधः। अन्यथा ज्ञानत्व, अनन्तत्व ब्रह्मत्वादीनामपि सत्तारूपत्वेन ज्ञानादिपदानां वैय्यर्थ्यापत्तेः। अथ "ज्ञानानिवर्त्यं सर्वं ज्ञेयं इत्याकारक यत्किंञ्चिद्धीविषयत्वावच्छिन्नप्रतियोगिताकभेदस्य साध्यत्वसंभवात् प्रपञ्चसत्यत्ववादिना उक्तधीविषयत्वस्य ब्रह्मणि इव प्रपञ्चेपि स्वीकारान्न सिद्धसाधनम् (न्यायरत्नावली पत्र ७०) इति चेत् तथा सति समागतं बुभुक्षितं प्रति परमान्नम् । ज्ञानानिवर्य्यं प्रमेयं इति यत्कि ञ्चिद्धीविषयत्वरूपसत्वत्य प्रत्यक्षयोग्यस्य मिथ्यात्वबाधकस्य ब्रह्मप्रपञ्चसाधारणस्य अङ्गीकारार्हत्वात् ॥ अभ्युपगम्योक्तमेतत् । वस्तुतस्तु नोदितरूपं

सत्त्वं नापि तदवच्छिन्नप्रतियोगिताकभेदवन्मिथ्या शुक्तिरूप्यस्यापि उक्ताकारकयक्तिञ्चिद्भ्रमविषयत्वसंभवेनातिव्याप्तेः । सर्वान्तर्गतत्वेन ज्ञातब्रह्मणोपि ईदृशसत्त्वाभांववत्वेनाव्याप्तेश्च ।

**त्रिकालसर्वदेशीय निषेधाप्रतियोगिता ।**

**सत्तोच्यतेध्यस्ततुच्छे तं प्रति प्रतियोगिनी ॥ ८१ ॥**

सर्वकालिकसर्वदेशीयनिषेधाप्रतियोगित्वं सत्त्वं तादृशात्यन्ताभावप्रतियोगि त्वाभावः । स च जगति सदिदं इत्यादिना प्रत्यक्षेण गृहीतः मिथ्यात्वविरोधी च ॥

ननु सर्वदेशीयत्वसर्वकालिकत्वादेः चक्षुरयोग्यत्वात् तद्घटितस्योक्तसत्त्वस्य न प्रत्यक्षयोग्यत्वम् । तत् कथं प्रत्यक्षयोग्यं सत्त्वं निरुध्यते इति । तन्न । प्रतियोग्य-परोक्षाभावेऽप्यभावप्रत्यक्षस्य त्वन्मतेऽपि सिद्धत्वात् । तथा हिः- नहि रूप्यं शुक्तिसन्निकृष्टेन्द्रियेण संबद्धम् । बाधायोगात् तदुक्तं पञ्चपादिकायां ( २५४पत्र डत ) "अपरोक्षाभासस्तु संस्कारजन्मनोपि रजतोल्लेखस्य दोष-बलादिन्दियजज्ञानान्तर्भावाच्चेति द्रष्टव्यं "इति । नापि तत्साक्षिवेद्यम् । साक्षिणःअबाध्यमात्रविषयत्वाङ्गीकारात् । रजतस्यानैन्द्रियकत्वेन रजतस्यापितथात्वापत्तेः । एवमपरोक्षविषयारोपित रजताभावस्य फलतो वा प्रत्यक्षत्वस्य शुक्तियाथात्म्यज्ञानस्य बाधरूपस्यैन्द्रियकत्वाद्यङ्गीकृतत्वात् । न च भासस्य प्रसक्त्याऽनाभासस्य निषेध इति न्यायस्यास्मन्मतत्वेन प्रत्यक्षयोग्यस्यापणस्थरजतस्यैव बाधधीविषयत्वमिति वाच्यम् । सर्वदान-परोक्षस्य पिशाचस्य स्तंभे निषेधस्याप्रत्यक्षात्वापत्तेः ।

अपि च [1] योग्यानुपलब्धेः अभावप्रमितिकरणतया षष्टप्रमाणतां वदता

---

[1] लघु टि अभावस्य प्रत्यक्षयोग्यताया तन्त्र किम् ? इति प्रष्टव्यम् । प्रत्यक्षयोग्यत्त्व इति चेन्न । तथात्वे जलपरमाणौपृथिवीत्वाभावःप्रत्यक्षःस्यात्।पृथिवीत्वस्यघटादौप्रत्यक्षयोग्यत्वात्।किनाममणिकारोक्तरीत्यायो-ग्यानुपलब्धिः । "तत्रापि" योग्यस्यानुपलब्धिः योग्यानुपलब्धिरिति नार्थः । कि नाम तर्कितप्रतियोगिसत्त्वप्रसञ्जितोपलब्धिप्रतियोगिकाभावएवहियोग्यानुपलब्धिःइति ( श्रीनिवासतीर्थीये ) ।प्रति-तयोगिनः सत्त्वं प्रतियोगिसत्त्व ज्ञानविषयभावप्रतियोगिनः सत्त्वम् । तर्कित च तत् प्रतियोगिसत्त्वं च । तर्कितप्रतियोगिसत्त्वतेनप्रसञ्जिता ( आरोपिता ) याउपलब्धिःतत्प्रतियोगिकाभावःइत्यर्थः।

"प्रत्यक्षयोग्यस्य प्रतियोगिनोऽनुपलब्धिः" इति तदर्थानङ्गीकारात्। तस्मादभावप्रत्यक्षं प्रति न प्रतियोगिनः प्रत्यक्षयोग्यत्वं नियामकं किन्तु यथासंभवं प्रत्यक्षादिष्वन्तर्भूताया अनुपलब्धेः स्वप्रतियोगिनः स्वंगम्याभावप्रतियोगिसत्तारूपाऽऽपादकेन आपादनयोग्यत्वमेव। तदुक्तं भाषापरिच्छेदे

**अस्ति चेदुपलभ्येतेत्येवं यत्र प्रसज्यते।**

**सा योग्यानुपलब्धिः स्यादभावज्ञानकारणं (६२) इति॥**

तथा च पिशाचादेः प्रत्यक्षयोग्यत्वेऽपि यदि स्तंभे पिशाचतादाम्त्येन स्यात् तर्हि स्तंभवत् प्रत्यक्षः स्यात् इति पिशाचाभावस्य प्रत्यक्षत्वं संभवति एवं स्फीतालोकवति भूतलेऽन्धकारे वा, घटः दृष्ट्या, हस्तप्रसारणादिना वा, उपलभ्येत इति प्रसङ्गस्य संभवादेव घटाभावस्य प्रत्यक्षता। उपलब्धेः आपादनयोग्यत्वे हि प्रकृताभावस्य प्रत्यक्षत्वं अन्यथा जलपरमाणौ पृथिवीत्वाभावः प्रत्यक्षः स्यात्। योग्यव्यक्तिवृत्तिजातेरेव योग्यत्वेन जलपरमाणौ यदि पृथिवीत्वं स्यात् तदा तदुपलभ्येत इति तदुपलब्ध्यापादनासंभवात्, पृथिवीत्वस्य च जलपरमाणौ वृत्त्ययोगादपादनाभावान्न पृथिवीत्वाभावस्य प्रात्यक्षिकत्त्वम्। सार्वकालिकसार्वदेशिकनिषेधाप्रतियोगित्वस्य प्रात्यक्षिकघटादिपदार्थेषु संभावितस्य योग्य घटादिव्यक्तिनिष्ठस्य योग्यत्वेन तदुपलब्धेरापादनार्हत्वात् भवत्येव तदभावः प्रत्यक्षः।

किञ्चैवं सति यदि प्रतियोग्यनपरोक्षेणाभावस्यापि परोक्षत्वेन सत्त्वस्यानपरोक्षत्वे त्रैकालिकसार्वदेशिका भावघटिततत्प्रतियोगित्वरूपमिथ्यात्त्वमपि न प्रत्यक्षं स्यात्। यदि तत् प्रत्यक्षं स्यात्तर्हि तत्प्रतियोगिकाभावोऽपि प्रत्यक्षः स्यात्। न च वर्तमानमात्रग्राहिचक्षुरादिना कालत्रयस्य स्वासन्निकृष्टसर्वदेशानां च ग्रहणस्यासंभवात्, त्रैकालिकाद्यघटितस्यैव मिथ्यात्वस्य निर्वाच्यत्वान्न दोष इति वाच्यम्। तथा सति कदाचिदप्रतिपत्तिदशायां देशान्तरे च घटस्यामिथ्यात्वेप्युपपत्त्याऽर्थान्तरतापत्तेः। यत्रेदानीं प्रतीतस्य तत्रैव तदानीमभावः तन्मिथ्यात्वमिति चेदन्यदन्यत्र तस्य सत्त्वेऽप्युपपत्तेरर्थान्तरता। न चेष्टापत्तिरियम् अनिर्वचनीयख्यातिभङ्गप्रसङ्गात्। न च

प्रत्यक्षादुक्तमिथ्यात्वसिद्धिः। त्रैकालिकनिषेधस्तु अनन्तरानुमेयः इति वाच्यम्। कादाचित्कैकदेशीयाभावीयप्रतियोगित्वस्य सार्वकालिकसार्वत्रिकाभावप्रति योगित्वेन व्याप्तेरभावात् । संस्कारसहकृतेन्द्रियेण कालान्तरविषयग्रहणस्य प्रत्यभिज्ञादौ सर्वैरभ्युपगमात् । योगयुक्तेन चक्षुरादिनैव सन्निकृष्टभूतभविष्यद्विषयाणामपि ग्राह्यत्वस्य बहुलमुपलंभात् । अन्त्यवर्णसन्निकृष्टस्य पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतस्य श्रोत्रस्यैव पदबुद्धिजनकत्वस्वीकारात्। अन्यथा वर्ण समुदाये सति, अन्त्यवर्णमात्रसंयोगस्य वर्तमानत्वेन पदवाक्यादिबोधानुत्पत्त्या शाब्दबोध एव न स्यात्।

ननु "योग्यप्रतियोगिनोऽनुपलब्धिः" इत्यर्थकरणेऽपि न क्षतिः। अनुपलब्धेः संसर्गाभावज्ञापकत्वाभ्युपगमात् स्तंभे पिशाचभेदस्य प्रत्यक्षत्वेऽपि पिशाचाभावस्य न तथात्वमिति ।मैवम् ।चक्षुर्योग्यरूपाभावः वायावपरोक्षो न स्यात् । विनिगमकाभावेन भेदाभावयोरुभयोरपि प्रत्यक्षत्वे बाधकाभावाच्च । तद्धर्मावच्छिन्नभेदस्य तद्धर्माभावाभिन्नतावादिमते तु तत्प्रत्यक्षस्यावश्यकत्वाच्च।

यद्वा अस्तु सत्त्वम् उक्ता प्रत्यक्षप्रतियोगित्वाभावरूपं, तथापि सन्घट इति प्रतीतेस्तु प्रत्यक्ष त्वस्य निर्बाधात् तद्बाधस्य दुर्वारत्वात् । न हि सत्वं परोक्षमित्येतावता सन्घट इति प्रत्ययोऽप्रत्यक्षोभवति । इन्द्रियग्रहीतो ऽपि पर्वतः यथा स्वविषयिकां" पर्वतो वन्हिमानित्याकारकमनुमितिं न ऐन्द्रियकीं करोति, यथा च त्वन्मतेऽनुपलब्धिमात्रग्राह्योऽपि इन्द्रियसंसर्गाननुयोगी अपि अभावः निर्घटं भूतलं पश्यामि इति अनुव्यवसायेन घटाभाववद्भूतलं इति प्रतीतेः प्रत्यक्षतां न हिनस्ति । तथा चोक्तं धर्मराजदृध्वरिणा "अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्यानुलब्धेः मानान्तरत्वात् । न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणता नियतत्वमस्ति । दशमस्त्वमसि इत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वे तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात् "इति । यथा व्यपगतघटे भूतले घटे सिषाधयिषितोनुपलब्धिगृहीतघटाभाववद्भूतलमिति प्रत्यक्षं भवत्येव

बाधकमिति तथा इह प्रमाणान्तरगृहीतसत्त्ववान् घट इति प्रमाणभूतोऽबाधितः प्रत्यक्षप्रत्ययो बाधक इत्यभ्युपगमे न कोपि क्षुद्रोपद्रवः । न हि प्रमाणान्तरसहकारसद्भावमात्रेणोक्तप्रतीतीनामप्रामाण्यमनपरोक्षता वा भवति । नन्वभावः अनुमाप्रत्यक्षं च परामर्शापरामर्शविशेषादितित्याचार्यैरनुपलब्धेः करणत्वं निराकृतं, तत्कथमिह तदादरणं ? इति चेन्न । यथा यथं त्रिविधप्रमाणेष्वन्तर्भूतस्याभावप्रमाणस्य पृथक्प्रमाणता खण्डनावसरेऽनुपलब्धेः प्रत्यक्षसामग्रीशरीरनिवेशमात्रस्य निराकरणात् । न तु प्रात्यक्षिकाभावत्वं प्रतियोग्यनुपलब्धिकत्वस्य व्यापकत्वं निराक्रियते । इन्द्रियकरणकाभावज्ञानस्य योग्यानुपलब्धितन्त्रकत्वस्यैव इह प्रक्रान्तत्वादविरोधात् ।

अत्राहुस्तराङ्गिणीकाराः सर्वदेशकालवृत्तिनिषेधप्रतियोगित्वस्य चक्षुराद्य योग्यत्वेऽपि तदभावरूपसत्त्वस्य तद्योग्यत्वं संभवति । घटे आकाशत्वाभाववत् । घटे आकाशत्व सत्त्वे तस्यानेकव्यक्तिगतत्वेन जातित्वापत्त्या घटत्ववत् तदुपलंभापादनवत् तादृशाभावप्रतियोगित्वोपलंभस्याप्यापादनसंभवात् । घटवृत्तिसंसर्गाभावं प्रतियोगित्वस्य प्रागभाव प्रतियोगित्वादिवत् योग्यत्वात्" इति' तदेतन्न सहते ब्रह्मानन्दः । स आह (२१५) "इति प्रलपितं, तत्स्वमतिः प्रकटिता । प्रागभावस्य हि सत्वे तत्प्रतियोगित्वं प्रत्यक्षं, तदसत्त्वे वा, । नाद्यः। तदा स्वाश्रयासन्निकर्षेण तत्प्रतियोगित्वस्य प्रत्यक्षासंभवात् । अन्त्येपि तस्य प्रागभावप्रतियोगितात्वेन प्रत्यक्षं प्रतियोगितात्वेन तद्व्यक्तित्वेन वा ? । नाद्यः । प्रागभावासन्निकर्षात् । न द्वितीयः। सम्बन्धप्रत्यक्षं प्रति सम्बन्धितावच्छेदकरूपेण प्रत्यक्षस्य हेतुत्वात्, प्रागभावप्रत्यक्षे तेन रूपेण प्रत्यक्षासंभवात् । अन्त्यकल्पे वक्षमाणदोषाच्च । नान्त्यः। तावतापि यथा तद्व्यक्तित्वेनोपलब्धिरापादयितुं शक्यते न तु प्रागभावप्रतियोगितात्वेन, तथोक्तात्यन्ताभावप्रतियोगितात्वेनोपलम्भो नापादयितुं शक्यत इति तदवच्छिन्नाभावस्यायोग्यत्वानपायात् । अत एव घटत्वत्वादिना नाभावप्रत्यक्षता इति शिरोमणिः" इति । तदुपेक्षणीयम् । तस्य युक्त्यनारूढत्वात् । तथा हि प्रतियोगिसत्त्वकाले हि तस्य प्रतियोगिनः प्रत्यक्षत्वेन तद्वृत्तिप्रागभावप्रतियोगित्वस्य प्रत्यक्षत्वस्वीकारो युक्तः । प्रागभावप्रत्यक्षाभावेऽपि प्रागभावासन्निकर्षेऽपि तत्प्रतियोगितात्वेन तत्प्रतियोगित्वप्रत्यक्षं संभवति । अन्यथा चक्षुर्मात्रग्राह्यगुणत्वेन रूपत्वेन

रूपप्रत्यक्षस्याप्यभावप्रसङ्गात् । तत्रापि चक्षुषः अतीन्द्रियस्यावच्छेदककोटिनिविष्टत्वात् । न हि खलु विशेषणप्रत्यक्षं विशिष्टप्रत्यक्षं प्रतिहेतुः। येनोक्तापत्तिर्युज्येत । अन्यथा त्वद्रित्या परजीवस्य तदभावस्य वाऽप्रत्यक्षत्वेन मूर्च्छिते सजीवोऽयं देहः, मृते निर्जीवमिदं गात्रमिति विशिष्टप्रत्ययो न स्यात् ।

अपि च संस्कारसहकृतचक्षुरुपनीतजिह्वायाः निमीलितचक्षुषः पुरुषस्याप्यपक्वाम्रफले पीतवर्णाभावस्य बोधवत् रजतानुभूतत्रैकालिकसार्वादैशिकनिषेध प्रतियोगित्वस्य कदाचित्कचित्वर्तमानघटादौ तत्संस्कारसहकृतचक्षुषा एव अविद्यमानत्वग्रहे झटिति जायमाने तस्य प्रत्यक्षत्वस्यावश्याभ्युपेयत्वात्। तस्मात् सत्त्वम् प्रत्यक्षसिद्धमेव तद्बाधश्चोक्तानुमानस्य दुरुद्धर एवेत्यलं बहुना ॥

॥ इति प्रत्यक्षयोग्यसत्त्वविचारः ॥

---

[1] लघुटि ( सबन्धप्रत्यक्षप्रतिसबन्धितावच्छेदकरूपेणप्रत्यक्षत्वस्यहेतुत्वनियमः)

॥ श्री ॥

## ॥ साक्षिबाधविचारः ॥

अद्वैतमते अन्तकरणोपहितं चैतन्यं वा अविद्योपहिता, अविद्यावृत्त्युपहिता वा चित् साक्षी इत्युच्यते। तत्त्ववादिमते तु नित्यं, अप्रामाण्यप्रयोजकदोषशून्यनियंतप्रामाण्यक प्रमातृस्वरूपं नित्येन्द्रियं सात्विकसाक्षी।

अत्रेत्थं शंका इन्द्रियजन्यप्रत्यक्षस्य साक्षिप्रत्यक्षस्य वा वर्तमानमात्रग्राहित्वाऽद्वैतवादेऽपि कथं शुक्तिरजते त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वसंप्रतिपत्तिः। न च साऽप्युनुमितिरेव। तथा सति प्रकृतानुमाने सपक्षासिद्धिरिति। अत्राद्वैतसिद्धिकारः "तत्र रजतत्वविरोधिशुक्तित्वे साक्षात्कृते, तदन्यथानुपपत्त्या च रजतत्वाभावे निश्चिते मिथ्यैव रजतमभादिति" तादृश - निषेधप्रत्ययः स्वसंबद्धसर्वभासकेन साक्षिणैवोपपन्नः । न च सत्त्वं त्रैकालिकनिषेधप्रतियोगित्वाभावरूपं साक्षिगृहीतगगनादावपि स एव साक्षीगृण्हातु इति वाच्यम् । साक्षिणः विद्यमानावभासकत्वेनाविद्यमानभाविबाधाभावावभासकत्वानुपपत्तेः । साक्षिज्ञानस्य भ्रमप्रमासाधारणत्वेन प्रमाणाबाधकत्वाच्च" इत्याह।

तत्तुच्छम् । "मिथ्यैव" इति प्रत्ययः किं त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वमवगाहते इत्युच्यते आहोस्विदन्यादृशम् ? । नाद्यः । वर्तमाननिषेधं स्वसंबन्धिनं रजतप्रतियोगिकतया अवगमयतोपि साक्षिणः भूतभाविकालयोः त्वद्रीत्या स्वासंबद्धयोःशंकितवृत्तिमन्निषेधावभासकत्वानुपपत्तेः । "अभादिति" इति लङा स्वासंसृष्टभूतकालस्य बोधात् अस्य प्रत्ययस्य साक्षित्वायोगाच्च। न च मास्तु प्रतीतेरस्याः साक्षित्वं नापि प्रात्यक्षिकं मिथ्यात्वं, अन्वयानुपपत्त्या मानेन त्रिकालादिघटितमिथ्यत्वं सेस्त्यति इति वाच्यम्। तस्याः रजते प्रतिभासकालमात्रप्रवृत्तिनिषेधप्रतियोगित्वप्रमापकत्वेऽपि कालान्तरीयेष्वमानत्वात्। अन्यथा मिथ्यैव रजतं अस्ति मिथ्यैव रजतं भविष्यतीत्यपि प्रत्ययप्रसङ्गात्। न हि कदाचिदनुपपन्नं सर्वदाप्यनुपपन्नमेव । शिशौ अनुपपन्नं जनकत्वं यून्यपि तथापद्येत । अतः भाविकाले पि शुक्तौ रजतत्वाभावः साक्षिणैव गृहीतव्यः। तथा च रजतस्य

कालत्रयेऽप्यभावमवगाहयन्साक्षी प्रत्यायत्येव त्रैकालिकाभावप्रतियोगित्वाभावं वर्तमानार्थक्रियाकारिणि घटे । नोत्तरः। तेषां खण्डितत्वात् । प्रकृतप्रश्नानुत्तरत्वाच्च । साक्षिणः भ्रमप्रमासाधारणत्वे "रजतांशेऽपि प्रमा किं न स्यात्" सुखाद्यंशेपि । भ्रमः किं न भवेदिति शं क'या सर्वत्रानाश्वसप्रसङ्गश्च । ब्रह्मज्ञानमपि किमित्यप्रमाणं नेति शंकाया निरुत्तरत्वं प्रसज्येत । साक्ष्यतिरिक्तस्य ज्ञानग्राहकस्याभावेन स्वतःप्रमाणेन साक्षिणा ज्ञानान्तरप्रामाण्यसिद्धौ तस्यैव भ्रमत्व कथनं नितरां भ्रममूलमेव । तस्मात् सुखवत् त्रिकालाबाध्यत्वकालाव्याकृताकाशमनस्तद्धर्मादीनामपि ग्रहणं साक्षिणैवेति तस्य भाविविषयकत्वेऽपि न दोषः ।

ननु एवं सति भाविसुखदीनामपि अनुसन्धानप्रसङ्गः इति चेन्मैवम् तेन भाविनः भावित्वेनैव विषयीकरणात् । सर्वेषां उत्तरकालानुसन्धानस्य विद्यमानत्वाच्च । तस्मात्

तस्मादध्यक्षायोग्यस्य सत्त्वस्येहानिरूक्तितः ।
नाध्यक्षबाधो मिथ्यात्वलिङ्गस्यात्रोपपद्यते ॥

न लौकिकं न सामान्यजन्यं साध्यात्मकं च न ।
प्रत्यक्षं बाधते लिङ्गमिथ्यात्वस्यानुमापकम् ॥

इत्युक्तिर्दुरुक्तिरेव । उपनीतचक्षुरादि लौकिकप्रत्यक्षं वा साक्ष्यादिकं वा प्रत्यक्षं लिङ्गसिषाधयिषितमिथ्यात्वं बाधते इति सत्वस्य प्रत्यक्षसिद्धतया प्रत्यक्षबाधो दुष्परिहर एव । अत एव भूतकालिकनिष्ठान्तबाधितशब्दप्रयोगेण बाधस्य पूर्वमेव सिद्धत्वं सूचितं "प्रत्यक्ष बाधितं विश्व मिथ्यात्वं" इति । तथा च बाधे अनुमानकाले सिद्धे ( विद्यमाने ) नानुमितिरुत्पद्यत इति भावः ॥

**॥ इति साक्षिबाधविचारः ॥**



॥ प्रत्यक्षबलविचारः ॥

॥ अधिष्ठानानुवेधखण्डनम् ॥

**पूर्वपक्षः** **सन्घटश्चेत्यधिष्ठानब्रह्मवस्त्ववभासते**
**यथेदं रूप्यमित्यत्र भातीदं रजताश्रयः ॥**

**सिद्धान्तः** **इति त्वदुक्तं युक्तं न घटो रूपी पटस्तथा ।**
**इत्यादावपि तत्किं न तत्स्याद्ब्रह्मसधर्मकम् ॥ ८ २॥**

"सन्घटः" इति प्रतीतौ सदिति प्रतीयमानं किमिति प्रश्नस्य पूर्वपक्षिणः उत्तरमनूद्य खण्डयति **इति त्वदुक्तमिति** ॥ अयमद्वैतवादिनोभिप्रायः॥ इद रजत-मित्येतद्यथा भ्रमः तथा सन्घटः इति प्रत्ययोऽपि भ्रम एव । तत्र सदिति ब्रह्मैव प्रस्फुरति । तस्यारोपाधिष्ठानत्वात् । घट इत्यारोप्यमानमियाघटः प्रतिभासते । तस्य निर्विकल्पकब्रह्मज्ञानादेव बाधः । यथा रजते इदंरूपशुक्तित्वाभावादिदं पदार्थस्यारोपाधिष्ठानत्वं तथेहापि सत्त्वं घटे नास्तीति सदारोपाधिष्ठानं भवतीति ।

सोऽसमीचीनः । केवलौपनिषदस्य ब्रह्मणः सन्घट इति चाक्षुषप्रत्यक्षविष-यत्वासंभवात् । चक्षुर्ग्राह्यत्वे च रूपसंबन्धापेक्षाया नियतत्वाच्च, ब्रह्मणो रूपाद्य-भावान्न तस्याधिष्ठानतयाप्यक्षिवेद्यता । ननु

"अतोऽनुभव एवैको विषयोऽज्ञात लक्षणः ।
अक्षादीनां स्वतः सिद्धः यत्र तेषां प्रमाणता ॥

इति [1] वार्तिकोक्तेः ब्रह्मणः सर्वेन्द्रियग्राह्यत्वात् । एकैकेन्द्रियमात्रग्राह्येष्वेव रूपाद्यपेक्षानियतिः, न तु सर्वेन्द्रिय ग्राह्ये । अतो रूपाभावेपि न क्षतिः । अथवा द्रव्यप्रत्यक्षे एव रूपाधीनता । ब्रह्म तु "अस्थूलमनणु" रिति

---

[1] बृहदारण्यकवार्तिक १००२

चतुर्विधपरिमाणानाश्रयत्वात् न द्रव्यम् । तस्मान्न तन्नायनत्वे रूपसापक्षतेति चेन्मैवम् । तथाहि नेन्द्रियाणि नानुमानं वेदाह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः "न तत्र चक्षुर्गच्छति न वा गच्छति नो मनः" इत्यादि श्रुतिभिः सर्वेन्द्रियग्राह्यत्वाभावावगमात् । ज्ञानानुपनीतघटप्रत्यक्षे विषयस्य ब्रह्मणः स्फुरणस्य साक्ष्युपनीतप्रत्यक्षग्राह्यग्राह्यकालवदुपपत्तेरसंभवाच्च । किञ्चैतस्मिन् प्रत्यये भासमानमधिष्ठानं ब्रह्म किमुपहितं ? वा अवच्छिन्नं ? वा शुद्ध वा ? । नाद्ये तयोर्मिथ्यात्वाङ्गीकारादधिष्टेयसमसत्ताकत्वेनाधिष्ठानत्वायोगात् । इदंत्वस्य रजते बाधवद्व्यावहारिकसत्त्वस्य घटे बाधाभावाद्भ्रमत्वासिद्धेः । पारमार्थिकसत्त्वस्य बाधेऽपि तयोः तदभावदधिष्ठात्वासंभवाच्च। नोत्तरः। भवद्रीत्या शब्दादजन्यधीवृत्तिविषयत्वरूपदृश्यत्वापत्त्या तस्याऽपि मिथ्यात्वापत्तेः । शुद्धज्ञानस्यैव मुकत्याधायकत्वेनास्यशुद्धविषयकत्वेऽविद्यानिवृत्त्यापत्त्या ब्रह्मज्ञानेन तत्क्षणादेव मोक्षापत्तेश्च । यद्यपि प्रतीत्यानया घटाज्ञाननिवृत्तावपि मूलाज्ञाननिवृत्तेर्न मोक्षापत्तिः तथापि यावन्मूलाज्ञानं, तावत् घटाज्ञाननिवृत्त्या घटावच्छिन्नचैतन्यप्रस्फुरणसंभवेऽपि सद्रूपशुद्धब्रह्मणः भानायोगः तदवस्थ एव । वस्तुतस्तु घटावच्छिन्नचैतन्यप्रस्फुरणे शुद्धस्यास्फुरणमसंभवि एव । अन्यथा दण्डी चैत्रः इति प्रतीत्या चैत्राज्ञानानिवृत्तिप्रसङ्गः स्यात् । तदुक्तं चन्द्रिकाप्रकाशे "न च घटावच्छिन्नचैतन्यविषया वृत्तिरज्ञानविषयचिदविषया सती तदज्ञानाऽविरोधिनीति वाच्यम् । दण्डी चैत्रइति वृत्त्या चैत्राज्ञानानिवृत्त्यापातात् इति"।

यच्चोक्तं परिमाणाभावान्न ब्रह्म द्रव्यमिति तदप्यसत् । "अणोरणीयान् महतो महीयान्" "आकाशवत्सर्वगतश्च नित्यः" सर्वभूतान्तरात्मा सर्वभूतेषु गूढः पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्" इति श्रुतिभिर्ब्रह्मणो परिमाणसद्भावस्यावगमात् । न च द्रव्यत्वेऽपि धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षू रूपमपेक्षते । यत्राध्यस्तद्रव्यत्वं तत्र ब्रह्मणि द्रव्यत्वादि यावद्धर्माद्यभाववति तादृशद्रव्यत्वस्य ब्रह्मापेक्षया न्यूनसत्ताकत्वेन

धर्मर्म्यन्यूनसत्ताकद्रव्यत्वाभावेन तद्ग्राहकचक्षुषो न रूपापेक्षेति वाच्यम् । ईदृश स्वकपोलकल्पितदुर्व्यवस्थाया मिथ्यात्वसिद्धेः पूर्वमसिद्धेः। किञ्च सदिति परिस्फुरद्ब्रह्म किं ब्रह्मत्वेन परिस्फुरत्युत सत्त्वेनाहोस्वित् स्वरूपतः ? नाद्यः । तथाऽनुभवाभावात् । अन्यथा ब्रह्म घट इत्युल्लेखः स्यात् । ब्रह्मत्वेन सद्ज्ञानादधिष्ठानब्रह्मज्ञानाभावात् भ्रमानुपपत्तेः । न हि शुक्तित्वेन विदितं इदं रजतत्वेन प्रतिपद्यते कश्चित् । द्वितीयेऽपि किमिदं विशेष्यतावच्छेदकाभिमतं सत्त्वं परमार्थतो ब्रह्मणि वर्तमानं ? उताविद्यमानं ? येन रूपेण ब्रह्म परिस्फुरेत् । नाद्यः । त्वया निर्धर्मके ब्रह्मणि सत्त्वस्याप्यनङ्गीकारात् । न द्वितीयः । विशेष्यतावच्छेदकरहितस्य सतः अधिष्ठानत्वानुपपत्तेः । भ्रमविशेष्यतावच्छेदकेदंत्वस्यानधिकरणं यः शुक्तिशकलस्तस्याधिष्ठानत्त्वस्यादर्शनात् । अन्यथा घटोऽप्यधिष्ठानं स्यादित्यतिप्रसङ्गात् । किञ्च

अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथञ्चन परिस्फुरति भ्रमेषु ।
रज्जुत्व शुक्तिशकलत्व मर्म्ाक्षितित्व चन्द्रैकता प्रभृतिकानुपलभनेन ।

इति संक्षेपशारीरिकवचनादध्यस्तातिरिक्तब्रह्मप्रस्फुरणायोगात् । अपि च नह्यज्ञातं ब्रह्म शुक्तिशकल इव स्फुरति । तदुक्तं विद्वन्मनोरञ्जन्यां "भ्रमकाले परिस्फुरदंशस्य मिथ्यात्वेऽप्यपरिस्फुरतो अंशान्तरस्य विद्यमानत्वादिति । तथा च "घटः सन् इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावादि"ति सिद्ध्युक्तं स्वमतापरिज्ञान-मूलमेव ।

यद्वा यदिदमवच्छेदकं सत्त्वं प्रत्यक्षगृहीतं तत्किं त्रिकालाबाध्यत्वरूपम् ? उत स्वप्रकाशाद्वितीयचैतन्यरूपम् ? अथवा दोषासहकृतमानसिद्धत्वम् ? जातिर्वा व्यवहारोपयोगित्वं वा ? अन्यादृशं यत्किञ्चिद्वा ? । नाद्यः । साक्ष्याद्यन्यतमेनानवगम्यकालत्रयघटितत्वात् । न द्वितीयः । तस्यावच्छेदकत्वायोगाद्योगेऽपि भ्रमासिद्ध्यादेरुक्तत्वात् । अत एव न तृतीयोऽपि । नापि चतुर्थपञ्चमौ । घटे तयोरबाधितत्वेन ब्रह्मण्यभावेन च प्रकृतानुपयोगात् । नान्त्यः । तस्याद्याप्य-निरुक्तेः । एवं स्वरूपतो भानमपि न युज्यते । अत्र सदित्युल्लेखात् स्वरूपतो भानायोगात् । योगेपि उक्तज्ञानस्यभ्रमत्वासिद्धेः ।

सदित्यधिष्ठानानुवेधे साधकाभावम् बाधकं चोपपादयति [1] **घटो रूपी पटश्चेति । किं न स्यादिति** । समानयोगक्षेमत्वादिति भावः। न च घटत्वं रूपिण्यस्तीति न भ्रमत्वम् । अत एव नाधिष्ठानानुवेधोऽपीति वाच्यम् । सत्त्वस्यापि घटे सद्भावात् । तथाऽनङ्गीकारादिति न च वाच्यम् । अस्माभिः परेण वा घटत्वस्य रूपिण्यनङ्गीकारे निरुत्तरत्वप्रसङ्गात् ।

ननु "सन्नित्यस्य घट इत्यनेन सामानाधिकरण्यं बाधितम् । तथा हि - सत्ताजातिस्फुरणनिबन्धनं वा स्वरूपसत्त्वनिबन्धनं वा कालत्रयाबाध्यत्वनिबन्धनं वा सामानाधिकरण्यं स्यात् । नाद्यः । अभावादिसाधारणप्रतीतावसंभवात् । वैशेषिकादिशास्त्रानभिज्ञस्य "अभावः सन् पटः सन्" इति प्रतीत्योर्विलक्षणसंबन्धानवगतेः क्वचित्साक्षात्क्वचित्परंपरयेति प्रतीत्युपपत्त्यनुपपत्तेश्च । अत एव न द्वितीयः एकविधव्यवहारं प्रति एकेन सर्वानुगतसंबन्धेनैव प्रतीत्युपपत्तेः बहुविधसंबन्धैः गुरुभूतप्रतीत्युपपादनापेक्षया लाघवात् । मानाभावाच्च । नान्त्योऽपि । दत्तोत्तरत्वात् । (चक्षुरगम्यत्वात्तादृश सत्त्वस्य) सदिदं रजतमिति भ्रमेऽभावाच्च । तस्मात्सर्वाधिष्ठानमेकमेव सदिति सर्वत्रानुभूयत इति युक्तं "इति चेन्मैवम् । त्रैकालिकनिषेधाप्रतियोगित्वाद्यन्यतमनिबन्धनस्यापि सामानधिकरण्यस्योपपत्तेः पक्षत्रयेऽपि दोषाभावात् तथाहि - भवत्येव सत्ताजातिस्फुरणनिबन्धनं सामानाधिकरण्यम् । सत्तायाः क्वचित्साक्षात्क्वचित्परंपरयाप्यधिकरणे सत्त्वादेव 'घटः सन्' 'अभावः सन्' 'संबन्धः सन्' इति समानाकारप्रतीतीनामुपपत्तेः।

---

लघुटिप्पणीः-रूपीइति।ननुकथमिद"रूपी"इतिरूपम् ? नतावत्"अतइनिटनौ(५-२-११५)इतिरूपशब्दस्यादन्तत्त्वादिनिप्रत्ययप्राप्तिः।शास्त्रस्यास्योत्सर्गत्वेनरसादिगुणभिन्नादन्तेषुप्रवृत्तेः।प्रकल्प्यचापवादविषयमुत्सर्गःप्रवर्ततइतिन्यायात्।नचरसादिभ्यश्च(५-२-९५)इत्येतत्मतुबर्थप्रवृत्तम्इहतु"इतिठनौ" विधीयेते इति कथमस्यरसादिभ्यश्चेत्यनेनापोद्यता,इतिवाच्यम्।तदस्यास्त्यस्मिन्निितिमतुप् ( ५-२-९४ ) इतिसूत्रेणैवरसवान् रूपवानित्यादि रूपसिद्धावपि रसादिभ्यश्चेति पुन र्मतुब्विधिः रसादीनामन्यमत्वर्थीयनिवृत्ति ज्ञापयति (व्यर्थसद्ज्ञापयति) इत्यवश्याङ्गीकार्यत्वात्।अन्यथा गन्धी, रसी, रूपीत्याद्यनिष्टरूपमापद्येत।न च कथ तर्हि "रूपिणी बाला" इत्यादिप्रयोगःइति वाच्यम्।"गुणादि"तिगणसूत्रेण रसादिसूत्रस्यगुणवाचिरसादिशब्दमात्रविषयकतया नियतत्वात्।प्रकृत प्रयोगे तु रूपशब्दः सौन्दर्यपर इति न दोषः।इति "रूपवान्" इत्येव साधु इति चेत्।उच्यते"-रसिकोशी तस्पर्शिक वारि इति प्रयोगदर्शनात् "रसादिभ्यश्च" इत्येतत् प्रत्याख्यात भाष्ये । मणिकारेण, रूपिद्रव्येत्यादिना बहुलप्रयुक्तत्वाच्च।

ननु विजातीयेन संबन्धेन समानाकारप्रतीत्यनुपपत्तेः। अन्यथा संबन्धभेद एव न सिद्ध्येदित्युक्तमिति चेन्न । घटः प्रत्यक्षः ज्ञानं प्रत्यक्षं, इन्द्रियं प्रत्यक्षं, सन्निकर्षः प्रत्यक्षः इति समानाकारप्रतीतिषु तात्पर्यसंबन्धवैविध्यस्य दर्शनात् । संबन्धनानात्वस्यानुभविकत्वेनाङ्गीकार्यत्वात् । न हि खलु "दण्डवान् देवदत्तः" इति प्रत्यये मतुपा देवदत्ते दण्डसंयोगः बोध्यत इति "धनवान् देवदत्तः इति प्रत्ययेऽपि तेन स एव धनसंयोगो बोद्धव्यः इति नियतिः। किन्तु मतुपा स्वामिता संबन्धस्य पारंपरिकस्यापि बोधनं दृष्टम् । अन्यथा "एकशतं षष्ट्यर्थाः" इति भाष्यकारेण व्याकरणे प्रयुक्ताया अपि षष्ट्याः साक्षात्परंपरासंबन्ध सामान्यवाचित्वं "यावन्तः सन्ति षष्टयर्थास्ते सर्वेऽपि षष्ट्यामुच्चरितायां प्राप्नुवन्ति "इत्युक्त्वाऽनुपपत्तिमाशंक्य नियमार्थकतया सूत्रसार्थक्यवर्णनं यत्कृतंतदयुक्तमापद्येत। ननु चोक्तमेवास्माभिः द्रव्यादित्रिकं साक्षात्संबन्धेन सत्तावत् इतरस्तु परंपरयेति तु वैशेषिकशास्त्रकारकल्पनामात्रम् । तदभिज्ञानहीनस्याऽपि लोके - "सामान्यादिपरंपरासंबन्धेन सत्" इति धीः स्यादिति इति चेत् । सत्यम्। समवायादिसंबन्धमजानतः शास्त्रप्रक्रियाद्यनभिज्ञस्याव्युत्पन्नस्य कस्यचिदेवमनुभवाभावेऽपि व्यत्पत्तिमतो विदितशास्त्रप्रक्रियस्य सामान्यादि चतुर्षु सत्तासमवायिताभावज्ञानिनः लोकसिद्ध "सन् अभावः" इति प्रत्ययः परंपरासंबन्धघटितः" - इत्यन्यथाऽनुपपत्त्या इयं बुद्धिर्भवत्येव ।

किञ्च कोऽयमाक्षेपः लौकिकस्य शास्त्रानभिज्ञस्य परंपरासंबन्धेन सत्त्वधियोऽभावात् तथा सामानाधिकरण्यनिर्वाहोऽप्रामाणिक इति ?, उत तच्छास्त्राभिज्ञस्य "द्रव्यादि त्रयमेव सत् "इति धियो विद्यमानत्वेन यो लोके अभावः सन् इत्यादिप्रत्ययः स भ्रमः स्यादिति ? अथवाऽव्युत्पन्नस्याऽपि द्रव्यगुणकर्माणि सत्ता समवायीनि इति बुंद्धिकाले तदन्ये सामान्यविशेषसमावायाभावाः परंपरया सन्त इति धीः उत्पद्येत इति ? नाद्याऽऽपत्तिर्लगति । तथा सत्यद्वैतमतानभिज्ञस्य सदिति ब्रह्मत्वेनाधिष्ठानानुवेधज्ञानाभावात्तव सामानादिकरण्योपपादनमप्यप्रामाणिकं स्यात् । न ह्यव्युत्पन्नमतेः किञ्चिदज्ञातमिति शास्त्रं तद्बोधकमप्रमाणं भवति । न द्वितीयोऽपि नो दूषणायालम् । तेनोक्तरीत्यैवाभावः सन्नित्याद्यबाधितप्रतीतेर्भ्रमत्वस्य निर्धारितत्वात्तादृशाऽऽक्षेपायोगात् ।

नान्त्योऽपि। इष्टापत्तेः। यस्यैवं सामान्यादि सत् इति लोकसिद्धबाधितबुद्धिस्तस्य द्रव्यादित्रयमेव साक्षात्सदिति प्रत्यय उदिते परिशेषादितरेषु परंपराबुद्धेरावश्य-कत्वात् ! यस्य तु नैवं धीः तस्य तादृशधीर्नापाद्या । आपादकाभावात्। विमृशतः साक्षात्संबन्धबाधेप्यबाधितप्रतीतिदर्शनमेव विनिगमकर्मिति न क्षतिः । यस्य मते सर्वथाऽभावादिषु सत्ता केनाऽपि प्रकारेण नाभ्युपेयते, तन्मते उक्त-धीः साक्षात्सबन्धविषयक भ्रम एवेति ।

अथवाऽस्तु स्वरूपसत्त्वम् सामानाधिकरण्यनिर्वाहकम् । न "चाननुगम इत्युक्त" मिति वाच्यम्। तस्यादोषत्वात्। तच्चान्यत्र निपुणतरमुपपादितम्। यदि भवत्याग्रह एव भवति तर्हि सद्ब्रह्म, सद्घटादिकमित्यादिष्वनुगताधिष्ठानसत्तया वा, स्वरूपसत्तया वा भाव्यमिति ब्रह्मणः मिथ्यात्वं वा घटादेः सत्यत्वं स्यात्। यद्वाअविशेषितदेशकालसंबन्धित्वं हि स्वरूपसत्त्वम्। तेन "यदि खण्डदेशकाल-भानं तदाननुगतत्वम् । यदि चाविद्यारूपमहाकालदेशभानं तदाऽनादिपदार्थेषु तत्संबन्धासंभवः। परंपरासंबन्धस्य तेषु भानेऽपि संबन्धस्यैकजातीयत्वाभावेना-ननुगमः" ( गुरूचन्द्रिका २५३ ) इत्येतदपि निरस्तम्। कालस्याप्यखण्डत्वेनाना-दित्वादनादिपदार्थेषु तत्संबन्धाभ्युपगमेऽपि बाधकाभावाद्वा कालस्याविद्यारूप-कस्य स्वमतमात्रपरिकल्पितत्वाच्च कालस्याविद्यारूपत्वेऽप्यविद्यायाऽना--दित्वात्तस्या अनादिजीवब्रह्मविभागकारिण्य अनिर्वेश्य संबन्धस्यावश्याभ्युपे-यत्वाच्च गोडोक्तमयुक्तम् । तथा च सर्वत्राबाधितसत्प्रतीतीनामनुगतकालसं-बन्धित्वेन वानुगत "अस्ति" इति प्रतीतिविषयत्वयोग्यत्वेन वा वैशेषिकरीत्या प्रमेयत्वादिना वा उपपत्तेः न कश्चित्क्षुद्रोपद्रवः। वस्तुतस्तु न समानाकारप्रतीतौ सर्वत्र सर्वानुगतस्यैव हेतुत्वनियतिः।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गे ऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ इति (वार्तिक-२६८३)

वचनात्संसर्गेपि साक्षात्परंपरासाधारणे मतुबर्थत्वस्य शाब्दिकैरनुशासनात्। अंकाधिरूढे पुत्रे" पुत्रवान् देवदत्तः " इति प्रयोगस्य यथा साधुत्वं तथा देशान्तरग ते पुत्रे वार्तमानिके "पुत्रवान् देवदत्तः" इत्यपि साधुः तथा चोक्तं हरदत्तेन "उत्पादनप्रतिग्रहादिक्रियाविषयकर्तृत्वजन्यो ह्यत्र संबन्धः नाधारपूर्वकः देशान्त-

रगतेऽपि पुत्रादौ तद्वानिति व्यपदेशस्य सद्भावात्। सामीपिकस्याप्यधिकरणस्या-संभवः "इति। न ह्यत्रोभयप्रयोगे एकसंबन्धानुगतिरस्ति। अस्ति च पुत्रवानित्ये-काकारानुगमः। तत्सिद्धमनुगतस्यैव संबन्धस्य हेतुत्वमितिनियमो नास्तीति। न च संयुक्ते पुत्रे देशान्तरगतत्वप्रत्ययो वाऽसन्निकृष्टेऽपि ऊर्वारूढत्वप्रतीतिर्वा स्यात्, विनिगमकाभावादिति वाच्यम्। तस्याक्षादिशब्दार्थवत् प्रकरणवेद्यत्वात्। एतदा-शयेनैव मूलोक्त नीलो घट इति लुप्तमतुबन्तप्रयोगं विहाय सत्त्वस्य सामानाधिकरण्यहेतुत्व, अधिष्टानानुवेधापत्ति एतदुभयेसंपादकः "**घटोरूपी**" - इति मतुबन्तप्रयोगः व्यधायि।

अपि च न हि कचित् मतुप् स्वप्रकृत्यर्थपदार्थसत्तां विनोत्पत्तुमर्हति। तदुक्तं भाष्यकारेण "अस्तीति प्रकृतिविशेषणं" इति । न हि घटादिष्वविद्यमान-रूपवाचिरूपशब्दः (स्वाथमन्तां विनाऽपि) मतुपं प्राप्नोति एवं सत्समानार्थक-सत्तावानित्यत्राऽपि घटाभावादिषु स्वसंबन्धं विनाऽपि मतुबन्तो भवति।

तस्माद्यथायोग्यं स्वप्रकृत्यर्थस्य सत्ताव्यभिचारितामुपगमयन् मतुबा-दिप्रत्ययः सामानाधकरण्यादिप्रत्ययं निर्वहतीत्याशयः शब्दानुशासनसम्मत इति सूचयति **घटोरूपी इति** मतुबन्तप्रयोगेण। तदेतदुक्तं "न सत्तां व्यभिचरीत पदार्थं" इति महाभाष्ये (५-२-९३) अथ मतुबन्तस्यैवं यथायोग्यमनेकविधसंबन्धवा-चित्वमस्तु तथाऽनुशासनसद्भावात् । सदिति कर्त्रर्थकशत्रन्तप्रयोगे तावत्सा-क्षात्क्रियानाश्रये कर्तृत्वस्य बाधितत्वादस्धात्वर्थसत्ताजातेः साक्षादनाश्रयेऽ-भावादौ कथं परंपरासंबन्धेन तत्प्रतीतिः? इति तदर्थमधिष्टानुवेधं ब्रूमः इति चेन्न। मतुबन्तसाम्याच्छत्रन्तस्याऽपि। तदेवं मनसि निधायाह सत्स्थाने **रूपीति**।

"रूपीं" इत्यत्र संबन्धसामान्येन यथा मतुप् तथा विवक्षितसंबन्धेन धात्वर्थव्यापाराश्रयत्वरूपकर्तृत्वमपि लादेशेन शत्रा बोध्यते। अन्यथा "स्थाली पचति" "देवदत्तः पचति" इत्यनुगतकर्त्रर्थक लादेशायोगात्। यत्र तु विवक्षायां न प्रमाणान्तराबाधः तत्र विवक्षितागुणीभावेन स्वातन्त्र्यमुपपद्यते एव। यथा रथो याति, जलं प्रवहतीत्यादि। यत्र तु बाधः तत्र विवक्षाया एवासंभवान्न स्वातन्त्र्यं'

यथा घटो जीवतीति । तस्मादभावोऽस्ति अभावः सन्नित्यबाधितप्रतीतीनां सद्भावात् तत्र चानुगमार्थ सर्वत्र अस्धातोः सत्ताजात्यर्थकत्वेऽपि न दोषः ।त्रैकालिकनिषेधप्रतियोगित्वेन पि प्रतीतिरुपपद्यते । न चैतच्छक्षुराद्यगम्यम् । तस्योपपदितत्वात् । "सदिदं रजतं" इत्यादिभ्रमे तूक्तेदृशसत्त्वस्यैव रजते आ-रोप्यत्वेन सामानाधिकरण्य भ्रमप्रयोजकत्वमिति ।

नीलो घटः इत्यादि प्रतीतीनां नैल्यघटत्वयोः सामानाधिकरण्ये किमपि बाधकं वदन् तत्राऽपि ब्रह्माधिष्टानानुवेधं वदेद्भवान् । तन्मात्रपरित्यागे हेत्वभा-वादित्याह **घटो रूपी पटस्तथेति** । "घटो रूपी" "पटः रूपी" इत्यादिप्रत्ययाः समानाकारकास्तु तावज्जगति प्रसिद्धाः । रूपघटत्वयोः [1] सामानाधिकरण्यं भाति तयोर्भिन्नप्रवृत्तिनिमित्तकशब्दबोध्यत्वाद्घटश्चैक एवाऽर्थः यस्मिन् रूपघटत्वे स्तः । रूपत्वस्य जातित्वेनानेकानुगतत्वेऽपि रूपस्य तथात्वाभावान्न ह्येकमेव रूपमनु-गतमिति वक्तव्यम् । अन्यथा रूपत्वस्यानेकव्यक्तीनामेवाभावदाकाशत्ववदजा-तित्वापत्तेः । समानाकारकप्रतीतिषु लाघवयुक्त्या एकस्यैव रूपव्यक्तेः सर्वत्रानुग-मेनैकस्मिन् रूपिणि घटत्वादीनामारोपितत्वमङ्गीकृत्य सर्वासामपि प्रतीतीनां भ्रान्तित्वमुपपाद्यताम् । किमननुगतेनाप्यनुगतप्रतीत्यङ्गीकारगौरवेण इति प्रति-बन्ध्याक्षेपमुद्घाटयति **इत्यादावपि तत्किं न तत्स्यात् ब्रह्मसधर्मकम् इति ।**

तत् रूपीत्येतत् । **ब्रह्मसधर्मकं** ब्रह्मणा समानो धर्मः अधिष्टानत्वादिः यस्य तत् । किं न स्यादित्याक्षेपः तत् तस्मात्त्वदुक्तं युक्तं नेति पूर्वेणान्वयः । - यस्मादित्यध्याहारेण पूरणीयम् । अयं भावः । स्वरूपसत्त्वेन सामानाधिक-रण्योपपत्तौ योऽननुगमो बाधकत्वेनाभिमतः । तस्याऽत्रा ऽपि साम्यात् त्वद्रीत्या रूपाधिष्ठानानुवेध एव एष्टव्यः । न चैष कृतःनीलादेस्तु घटादिसा-मानाधिकरण्ये किमपि नास्ति बाधकमिति इति वदता भवता । यदि अन्यत्राननुगतरूपनिबन्धनसामानाधिकरण्यप्रतीत्युपपत्तिस्तर्हि किमनिष्टं विहितं सदिति प्रतीत्या ? इति । नीलपदस्य [2] गुण तद्वदुभयार्थकत्वेपि रूपप-

---

लघुटिप्पणी [1] भिन्नप्रवृत्तिनिमित्तकानाशब्दानामेकस्मिन्नर्थेतात्पर्यसबन्थःसामानाधिकरण्यम् ।

लघुटिप्पणी [2] "गुणवचनेभ्यः मतुपो लुगिष्टः" इति लुकिगुणवदर्थः । मतुबप्राप्तौ गुणार्थः नीलशब्दः ।

दस्य तथाऽभावान्नीलादिरूपविशेषवाचकपदं विहायरूपपदग्रहणं चैतदर्थमेव । शुक्लनीलादिष्वभेदोपचारसंभवेऽपि "पटस्य शुक्लः" इति भेदव्यहारदर्शनात् मतुपः लुकि वक्तव्येऽपि रूपशब्दस्य "वस्त्रं रूपं" इति औपचारिकप्रयोगस्याप्यभावात् नेष्टः लुगित्यधिष्ठानानु वेधापत्ति कुर्वता न्यायामृताशयः स्पष्टं 'रूपी' ति ग्रहणेनाऽऽविरकारि ।

ननु नीलादेर्नाधिष्ठानत्वम् । प्रागसत्त्वत् । सत्त्वे वा प्रातिस्विकानन्ताधिष्ठानकल्पने गौरवात् । अधिष्ठेयतुल्योगक्षेमत्वाच्च । अधिष्ठेयविषमसत्ताकमेव ह्यधिष्ठानं भवति इत्यत आह **ब्रह्म सधर्मकं किं न स्यात्** इति । ब्रह्मणि यद्ब्रह्मत्वं तदस्तु नीलादेरपि । तेन ब्रह्म नीलात्मकं प्रागस्त्येव । अनादित्वात् । एकस्यैव ब्रह्मणः तत्राप्यधिष्ठानत्वकल्पनान्नास्ति गौरवमपि । अधिष्ठेयवैषम्यं चास्ति इति किं नाद्रियत इत्याक्षेपः । सत्प्रतीतिसमानयोगक्षेमत्वान्नीलादिप्रतीतेरपि । यद्येकत्राधिष्ठानतानभ्युपगमस्तर्हि सोस्त्वन्यत्राऽपीति । अन्यथा रज्जुशुक्तिशकलमरुक्षित्यादीनामपि लोकसिद्धाधिष्ठानत्वं हन्येत । रज्जुसर्पयोः शुक्तिरजतयोर्वा मिथ्यात्वेन समानयोगक्षेमत्वात् । न च शुक्तिरजतयोः रज्जुसर्पयोर्वाऽस्मन्मतरीत्या मिथ्यात्वे ऽपि अधिष्ठानस्य रज्जोः शुक्तेर्वाऽधिष्ठेयप्रातिभासिकसर्परजतापेक्षयाऽधिकव्यावहारिकसत्ताङ्गीकारात् समानयोगक्षेमत्वा न्नाधिष्ठानत्वहानिरिति वाच्यम् । अधिष्ठानस्याधिष्ठेयविषमसत्ताकत्वनियमवन्मिथ्यात्व विरोधिसत्त्वस्याप्यावश्यकत्वात् । अन्यथा प्रातिभासिकापेक्षयाऽपि न्यूनसत्ताककल्पनया प्रातिभासिकस्याप्यधिष्ठानत्वापत्तेः । अतः यदेव ब्रह्मणः सत्त्वं तदस्तु नीलादेरपि । एतदप्याह **ब्रह्म सधर्मकमिति** । नीलादि-ब्रह्मसत्तासमानसत्ताकं किं न स्यात् इत्यर्थः ।

ननूक्तमेव चैतन्यरूपं हि सत्त्वम् । तच्च जडे नीलादौ बाधितमिति, तत्कथं नीलादेर्ब्रह्मसत्तासमसत्ताकत्वापत्तिः ? इति चेत्तत्राप्याह **ब्रह्म सधर्मकमिति** । ब्रह्मणि यो मिथ्यात्वविरोधी धर्मः तत्समानधर्मकं नीलादि किं न स्यात्? इति भावः । अथवा ब्रह्म सधर्मकं तत् किं न स्यात् ? इत्यन्वयः । ब्रह्मणि यो मिथ्यात्वविरोधिसत्ताजाति, स्वरूपसत्त्वकालसंबन्धित्वादिः धर्मः तत्समानधर्मवत् तत् - घटादिविशेष्यं किं किमर्थं तत् अधिष्ठानं न स्यादिति प्रश्नार्थः । अयं भावः । विशेष्यावृत्तिप्रकारावगाहित्वेन हि ज्ञानं भ्रम इत्युच्यते न तु प्रकारीभूतावृत्तिवि-

शेष्यतावच्छेदकवत् विशेष्यावगाहित्वेन । अन्यथा इदंत्वस्य रजते एवारोप्यत्वापत्तेः तदेव मिथ्या स्यात् । तथा च सन् घट इत्यत्र यौगिकत्वेन उपसर्जनत्वेन विशेषणत्वात् प्रकारता । सत्त्वस्य घटेऽभावात् यद्यस्य भ्रमत्वं तर्हि भ्रमविशेष्यस्य घटस्यैवाधिष्ठानत्वं न तु सदित्यस्य सत्पदमसतो घटात् घटं व्यावर्तयतीति भवति विशेषणमिति तदर्थस्य[1] नाधिष्ठानत्वं युज्यते । अन्यथा अनीले उत्पले नैल्यग्राहि नीलोत्पल भ्रमेऽपि नीलमधिष्ठानं स्यात् ।

यद्वा इत्यादावादिपदेन "मिथ्या रूप्यं" असत् नृशृङ्गमित्यादि प्रतीतयः गृह्यन्ते । तत् मिथ्याभूतं मिथ्यात्वमसत् असत्त्वं वा ब्रह्मसधर्मकं अधिष्ठानत्ववत् किं न स्यात् । न नु तथासति शून्यवादापत्तिः इति चेत् तत्राप्याह **तत्किं न स्यादिति** । कुतो वा तव शून्यमेव वदतः शून्यवादितया भीतिः तत् शून्यवादित्वम्।

किमिति न स्यात् ? कुतः नास्ति ? । अस्त्येवेति भावः । ननु ब्रह्मणः सत्यत्वाङ्गीकारात् कथं शून्यवादित्वमिति चेन्नेत्याह **ब्रह्मेति** । यस्मात् सधर्मकं ब्रह्म नास्ति तत् तस्मात् तत् शून्यवादित्वं किं न स्यात् कुतो न स्यात् । स्यादेव इत्यर्थः त्वन्मते ब्रह्मणः निर्धर्मकत्वेन सत्यत्वं तत्रापि नास्ति । तस्माद्ब्रह्मणि असत्यत्वमङ्गीकृतमेव स्यादिति शून्यवादित्वमस्त्येवेति भावः । यद्वा सधर्मकं तत् ब्रह्म न स्यादिति तत्किं ? इत्यन्वयः । सधर्मकंसत्तारूपधर्मवत् सत्पदार्थः। ब्रह्म निर्धर्मकब्रह्मात्मकम् । न स्यात् न भवेत् न भवति तयोर्विरोधात् । तत् ततःअनन्तरम् । किं सदित्यधिष्ठानानुवेधः कथं स्यादित्यर्थः । यद्वा सदितिप्रत्यये नुगतस्यैव हेतुत्वनियमरूपलाघवयुक्त्या यदि तत् सत् तत्स्यात् अधिष्ठानं स्यात् तर्हि इत्यादौ, सत्यं ज्ञानमनन्तं ब्रह्म इत्यादावपि ब्रह्म सधर्मकं ब्रह्मसमानाधिकरणतया वाक्ये पठितं सत्यमपि तत् अधिष्ठानं किं न स्यात् कुतो न स्यात् युक्तेरुभयत्र साम्यादित्यर्थः । न च तत्र स्वरूपसत्त्वेन प्रतीत्युपपत्तेर्दोषानवकाशः इति वाच्यम् । स्वरूपसत्त्वस्य पूर्वोक्तयुक्त्या ( त्वदीयया ) अननुगतत्वात् । तस्मान्नाधिष्ठानानुवेधः सिद्ध्यति ।

## इति प्रत्यक्षबलविचारे

## ॥ अधिष्ठानानुवेधखण्डनम् ॥

---

[1] लघुटि उप[illegible]नज्ञानवि[illegible]त्वअधिष्ठानत्वमितिगौडः।

॥ श्रीः॥

## ॥ अथ जात्या उपक्रमादिन्यायैश्च प्रत्यक्षप्राबल्यसमर्थनम् ॥

**पूर्वपक्षः** **असंभावितदोष‾‾स्यापौरुषेयतया स्वतः।**
**यथा प्रमात्वं वेदस्य तथा मानान्तरे न तत् ॥**

**सिद्धान्तः** **इति त्वदुक्तं युक्तं न सादित्वान्नाशवत्त्वतः**
**अबुद्ध्या निःसृतत्वाच्च श्रुतेःसुप्तप्रलापवत् ॥८३॥**

**प्रामाण्यं शंकनीयं स्यात् वैशेष्यं त्वन्मते कथं ?**
**अतोऽवबोधकत्वेन दुष्टकारणवर्जनात् ॥८४॥**
**[1]अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादि वच्छ्रुतेः॥**

ननु अस्तु सत्त्वं प्रत्यक्षग्राह्यम् । मास्तु वाअधिष्ठानानुवेधः तथापि "सन्घटः" इति प्रत्यक्षं न बाधकं स्वस्यैव प्रामाण्यानिश्चयात् । निश्चितप्रामाण्यमेव हि प्रत्यक्षं इतरबाधकम् । प्रामाण्यं च इतरानुमानागमाविरोधे एव सिद्ध्यति । प्रकृते चास्ति आगमविरोधः अनुमानविरोधश्च । भाविकाले बाधस्य संभावितत्वाच्च। न च वेदादेरपि स्वप्रामाण्यसिद्ध्यर्थ प्रत्यक्षाविरोधस्य आवश्यकत्वात् अन्योन्याश्रयात् उभयस्यापि प्रामाण्यानिश्चये तदर्थ स्वतः प्रमाणं किंचिदास्थेयं, तदस्तु प्रत्यक्षमेव तादृशमिति वाच्यम् । चन्द्रप्रादेशपरिमितिप्रत्यक्षस्य इतरबाधितत्वेनाप्रामाण्यदर्शनात्, स्वतः अपौरुषेयत्वेन असंभावितदोषस्य वेदस्य अनाप्तप्रणीतत्वेन प्रमाजनकत्वव्याप्तेन वा प्रामाण्यसिद्धौ तद्विरोधेन संभावितदोषस्य प्रत्यक्षस्यैवाप्रामाण्यं इति अन्योन्याश्रस्याप्यभावात् इति चेत्तन्निराह **इति त्वदुक्तं इत्यादिना** । सुप्तप्रलापवदिति अनन्तरं 'इति' इति पदमध्याहार्यम् । श्रुतिरित्येतत् पदं सविभक्तिपरिणाममावृत्य योज्यम् । तथा च

---

[1] बृहदारण्यक[illegible]वार्तिक । ८८२१अ६-१ब्राह्मणे।

(1) श्रुतिः अप्रमाण्यशङ्कास्पदा नाशित्वे सति वाक्यत्वात्

(2) श्रुतिः अप्रामाण्यशङ्कास्पदा अबुद्ध्या निःसृतत्वात् सुप्तप्रलापवत्

इति श्रुतेः प्रामाण्यम् शङ्कनीयं स्यात् । तस्मात् श्रुतेरितरप्रमाणापेक्षया वैशेष्यं विलक्षणता कथं स्यात्? इति यत अत त्वदुक्तं न युक्तमिति समुदितार्थः । अयं भावः । त्वन्मते यद्यपि अपौरुषेयत्वं वेदानामभिमतं तथापि न तत्तेषां प्रामाण्यसंपादकम् । किन्तु इतराबाधः एव । "मानान्तराबाधिततात्पर्यविषयीभूत पदार्थसंसर्गबोधकवाक्यत्वं शब्दप्रमाणत्वं "इत्येव त्वदभ्युपगमात् । तदुक्तं " यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणं" इति वे दान्तपरिभाषायाम् । अन्यथा तात्पर्यविषयसंसर्गाबाधरूपयोग्यतायाःकारणचतुष्टयान्तर्गतत्वेन वर्णनं, तत्त्वमसीत्यादिवाक्येषु वाच्याभेदबाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावं निमितीकृत्य योग्यतासंपादनं च व्यर्थमापद्येत । तथा च यदि प्रत्यक्षस्य प्रामाण्यव्यवस्थापि प्रमाणी भूतवेदादिबाध्यत्वाभावाधीना तर्हि दुष्परिहर एवान्योन्याश्रयः । तदर्थ हि त्वन्मते चैतन्यात्मकप्रत्यक्षप्रमायाः यत्करणं तदेव प्रत्यक्षप्रमाणं इत्यङ्गीकारः । न चैतत्सर्व लौकिकवाक्यमात्रविषयं, वेदानामप्युत्पत्तेर्नाशस्य च स्वीकारात् यथा लौकिकवाक्ये अप्रामाण्यशंका तथा वेदेष्वपि तस्याः समानत्वात् वेदाः अप्रमाण्यशङ्का स्पदाः सादित्वात् नाशवत्वाद्वा, सुप्तप्रलापवदिति प्रयोगात् वेदानां लौकिकवाक्याविशेषस्य सिद्धत्वात् ईश्वरेणापि बुद्धिपूर्व (बुदध्या प्रकल्प्य)अनुच्चरितत्त्वाच्च वेदानां सुतरां अप्रमाण्यशङ्कास्पत्वाच्च । न च अपौरुषेयत्वेनैव शब्दानां प्रमाण्यं स्वतःसिद्धमस्तु इति वाच्यम् । त्वन्मते वेदस्य ईश्वररचितत्वेन पुरुषदोषनिबन्धनदोषाणां तत्र संभावितत्वात् । केवलं पारिभाषिकापौरुषेयत्वस्य प्रमाण्यानाधायकत्वाच्च ।

त्वन्मते हि पुरुषप्रणीतत्वाप्रणीतत्वाभ्यां न पौरुषेयापौरुषेयव्यवस्था । सृष्ट्यादौ ईश्वरेणैव वेदानामपि रचितत्वात् पुरुषाप्रणितवाक्यस्यैवाभावात् । तथाचोक्तं परिभाषायां " वर्णपदवाक्य समुदायस्य वेदस्य वियादादिवत् सृष्टिकालोत्प त्तिकत्वं, प्रलयकालिकध्वंसप्रतियोगित्वं च" इति । किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वतदभावाभ्यामेव । लौकिकवाक्ये तु सजातीयोच्चारणान-

पेक्षोच्चारणविषयत्वात्पौरुषेयत्वम् । [1] ईश्वर एव पूर्वसर्गसिद्धवेदोच्चारणमपेक्ष्यैव-तत्समानानुपूर्वीकं इदानींतनवेदं रचितवान् इति तस्य अपौरुषेयत्वम् । ईदृशस्यापौरुषेयत्वस्य केवलस्य प्रमाण्याप्रयोजकत्वात् । प्रमाणान्तराबाधस्यैव वेदप्रमाण्यप्रयोजकत्वं वक्तव्यमिति सिद्धं त्वन्मतरीत्यापि प्रत्यक्षं स्वतःप्रमाणमिति । तदेतत्समर्थयन् परमते वेदस्यापौरुषेयत्वेन प्रामाण्यासाधनं बाधाभावस्य प्रामाण्यप्रयोजकत्वं तद्वाक्योदाहरणपूर्वकमेवाह **अतो अवबोधकत्वेनेति** । अयमत्र परमतीयानां प्रयोगः- श्रुतिः प्रमाणं अबाधितार्थज्ञानजनकत्वे सतिअप्रामाण्यप्रयोजकदुष्टकारणाभावात् प्रत्यक्षवत् अनुमानादिवद्वा ।

यद्वा "अपौरुषेयतया स्वतः प्रामाण्यं वेदस्येति" यदुक्तम् । तन्न युक्तम् । श्रुतेः सादित्वेन तत्र अपौरुषेयत्वस्यासिद्धेः। यदुत्पन्नं वाक्यं न तदपौरुषेयं इति व्याप्तेः। यच्च वेदोऽसंभावितदोष इति तदपि न युक्तम् । आप्तेनापीश्वरेण बुद्धिपूर्व अनुच्चारणात् (अबुद्धया निःसृतत्वात्) । अयं अभिप्रायः। यत्र बुद्धिपूर्व उच्चरितत्वं तत्र प्रामाण्यसिद्ध्यर्थ उच्चारयितुः आप्तत्वं निश्चेतव्यम् । यत्र तु बुद्धिपूर्वं उच्चरितत्वाभावः तत्रोच्चारयितुराप्तत्वेऽपि प्रामाण्यं न सिद्ध्यति । आप्तानामपि सुप्त्यादिदशायां दोषसंभवात् । तथा चेश्वरः आप्तोऽपि पूर्वसर्गसिद्धानुपूर्वीमद्वाक्यसमुदायमेवाबुद्धिपूर्वं उच्चरितवान् न तु स्वतन्त्रतयेति तत्र प्रामाण्य संशयो भवत्येव । बुद्धिपूर्वोच्चारणं नाम जाग्रदवस्थायां अर्थज्ञानसाहित्यमात्रेण सेत्स्यमानमिति नार्थः । किन्तूच्चारयितुः स्वातन्त्र्येण । अन्यथा पारायणादेरपि स्वबुद्ध्या प्रकल्प्योच्चारितत्वं स्यात् । परमते सर्वशक्तिरपीश्वरः वेदमुच्चारयन्नपि न तत्र स्वातन्त्र्यं भजति इति स केवलं पारायणकर्तेति न तदुच्चरितवेदः बुद्ध्या निःसृतः इति तत्र प्रामाण्यं सन्दिग्धं इति ।

किञ्च सजायोच्चारणापेक्षोच्चारणविषयत्वम् चापौरुषेयत्वं न । वञ्चकान्तरप्रयुक्तवाक्यानुवादेतिव्याप्तेः । वर्णपदवाक्यस मुदायरूपस्य वेदस्य व्यवहारकालेऽपि अविशेषतया उत्पत्तिविनाशौ स्याताम् । न च सोऽयं गकारः इति य एव

---

[1] ईश्वर.इतिः।तदुक्तवेदान्तापरिभाषायाः "तथाचसर्गाद्यकालेपरमेश्वरःपूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकंवेदविरचितवान्"इति।

देवदत्तेनाधीतो वेदः स एव मयापीदानीं "इति प्रत्यभिज्ञाविरोधात् मध्ये वर्णानां तदात्मकवेदस्य वा उत्पत्तिध्वंसौ न अभ्युपेयेते इति वाच्यम् । उत्पन्नो गकारः इदानीं नष्टः इति प्रत्यक्षेण प्रत्यभिज्ञायाः औपचारिकाभेदमूलत्वेन वा भ्रान्त्या विरोधाभावात् । अन्यथा य एव वेद प्राचीन सर्गे आसीत् स एव अयं इति ईश्वरीयप्रत्य भिज्ञाविरोधापातात् । न च मध्येऽनन्तगकारादीनां कल्पनायां गौरवमिति वाच्यम् । प्रतिसर्गं एकैकतया अनन्तवर्णात्मकवेदानां अनन्तसर्गेषु कल्पनाप्रसङ्गस्य त्वन्मते साम्यादिति वा आह **त्वन्मते वैशेष्यं कथं ? इति** । सृष्ट्यादौ मध्ये वा वेदस्य अवस्थाभेदाभावात् न वैशेष्यं अस्तीति क्षणिक-सुप्तप्र लापवत् क्षणिकत्वं स्यात् इति त्वदुक्तं वेदस्य अपौरुषेयत्वं, वा असंभावि-तदोषत्वं वा जात्या प्रामाण्यं वा न युक्तं त्वदीययैव युक्त्या विरुद्धं इत्यर्थः।

ननु प्रामाण्यं प्रत्यक्षे इव जात्या वेदस्यापि तदस्तु प्रामाण्यस्य स्वतस्त्वात् इति चेत् नेत्याह **प्रामाण्यं श्रुतेः शंकनीयं स्यात् इति** । सुप्तप्रलापस्य वेदस्य च शंकितप्रामाण्यवत्वेन त्वन्मते कथं वैशेष्यं इति । तथा च प्रामाण्यस्य स्वतस्त्वं न कस्यचित् प्रमाणस्य स्वतः प्राबल्ये तन्त्रं तस्य सर्वप्रमाणसाधारणत्वात् इति।

**इति त्वद्गुरुवाक्यं च स्मृत्वा त्यज दुराग्रहं ॥ ८५ ॥**

**इति त्वद्गुरुवाक्यमिति** । चः उक्तदोषसमुच्चायकः ॥ युक्तं नेत्युक्तौ हेत्वन्तरं चाह **स्मृत्वा इति** । त्वद्गुरुवाक्यार्थविस्मरणात् तव त्वदुक्तं अयुक्तं इति भावः ॥ गुरु इति तद्विरोधादाग्रहस्य दुष्टत्वं समर्थयति । त्वद्गुरुवाक्ये च "अक्षादिवत्" इति दृष्टान्तोक्त्या श्रुतिप्रामाण्यसिद्धेः पूर्व एव प्रत्यक्षस्य प्रामाण्यं सिद्धं भवतीति दुष्टाग्रहत्यागः आवश्यकः । अन्यथा त्वद्गुरोः दृष्टान्तवचनं अयुक्तं स्यात् इति भावः।

एतेन "चन्द्रप्रादेशप्रत्यक्षस्य अनुमानागमविरोधेन अप्रामाण्यदर्शनात्, प्रत्यक्षेणापि स्वप्रामाण्यसिद्ध्यर्थं इतराविरोधस्यापेक्षणीयत्वात्" इत्युक्तमपि निरस्तम् । स्वतोऽपि प्रबलप्रत्यक्षेण स्वस्य दूरस्थत्वादिदोषयुक्ततया ग्रहणात् तेनैव बाधस्य उपपत्तेः । अन्यथा आगमाद्यज्ञानिनः प्रत्यक्षागमपादावलम्बि-

लिङ्गानुसंधानहीनस्य ग्राम्यस्य पुरुषस्य चन्द्रेप्रादेशपरि[illegible] ज्ञानं न स्यात्। न चेष्टापत्तिः। तादृशबाद्यधियः ग्राम्येष्वपि बहुलं उपलंभात्। तस्मात् दूरस्थंस्वार्थं गृह्णदिन्द्रियं तत्परिमाणादौ अप्रमाणं इति प्रबलकन्दुकादि प्रत्यक्षजन्यं प्रत्यक्षं बाधकं इति अङ्गीकर्तव्यम्। आगमादिस्तु बाधितोत्पन्नमेव चन्द्रप्रादेशप्रत्यक्षं पुनः यथार्थपरिमाणादि वर्णनद्वारा बाधते न तु स्वतन्त्रतया। तदेतत् त्वद्गुरोरपि संमतं इत्याह - **दुष्टकारणवर्जनादिति** (अनुवादेन) क्लृप्तदोषरूपकारणाभावादेव नाप्रामाण्यम्। प्रामाण्यं तु स्वत एव। दूरस्थत्वं तु क्लृप्तं अप्रामाण्यकारणं इति प्रत्यक्षणैव विदितम्। तस्मात् प्रत्यक्षमेव अनुमानागमौ बाधते इति सिद्धम्।

यद्वा ननु अनाप्ताप्रणीतत्वादिना प्रमाजनकत्वव्याप्तेः वेदप्रामाण्यनिश्चये जाते तेन स्वतः संभावितदोषस्य प्रत्यक्षस्य बाधादस्मन्मते क्वान्योन्याश्रयः ? इत्युक्तं पराह - वैशेष्यं त्वन्मते कथं ? अयं भावः। त्वन्मते हि ईश्वरः वेदं प्रणीतवान् इति अभ्युपगतम्। तस्येश्वरस्य आप्तत्वं तु वेदातिरिक्तेन केनापि निश्चेयं इति [1] अनाप्ताप्रणीतत्वस्य वेदे संदिग्धासिद्धेः। सिद्धे हि वेदप्रामाण्ये तत्प्रणेतुराप्तत्वं सिद्ध्यति। तस्य आप्तत्वसिद्धौ एव वेदप्रामाण्यसिद्धिरित्यन्योन्याश्रयात्। यद्येवमेव कथंचित् त्सिसिद्धिः अस्तु तर्हि सुप्तेऽपि आप्तत्वमित्याह **सुप्तप्रलापवत् इति**। त्वन्मते वेदकर्तुः सुप्तस्य च वैशेष्यं कथं ? उभयत्रापि आप्तत्वानिश्चयादित्यर्थः। तथाचायं प्रयोगः श्रुतिः न प्रमाणं प्रमाणान्तरानिश्चिताप्तिमत्कर्तृकत्वेसति सादित्वात् सुप्तप्रलापवत् इति। सादित्वं आदिना उत्पादकेन सहिता सादिः तस्याभावः इत्यर्थः।

यद्वा ननु चोक्तं, प्रत्यक्षं स्वतः संभावितदोषं अत एव तदनुमानेन निश्चितप्रामाण्यं वेदं बाधितुं न ईष्टे। अन्यथा देहात्मैक्यप्रत्यक्षबुद्ध्या बाधात् देहभिन्नत्वमपि आत्मनः नानुमानागमाभ्यां सिद्ध्येत् इति चेत् तत्राह- सुप्तप्रलापवत् इति॥ अयं अभिप्रायः - यदि प्रत्यक्षं संभावितदोषत्वादेव श्रुत्या बाध्यते, यथा-वेदेन देहात्मैक्यप्रत्यक्षं "इति उच्यते तर्हि तेनैव न्यायेन" नायं घटः" इति सुप्त वाक्यं अपि "अयं धट इति प्रत्यक्षं किं न बाधेत ? एवं "इदं रजतं" प्रत्यक्षं

---

1 अनाप्तताप्रणीतत्वमात्रस्य घटेव्यभिचारात्वाक्यत्वेसतिविशेषणीयम्।ईश्वरस्य आप्तत्वानिश्चयेसति तत्प्रणीते वेदे अनाप्तप्रणीतत्वसंशयः।तथा च आनाप्ताऽप्रणीतत्वसंशयःइतिबोध्यम्।

अपि नेदं रजतं इति सुप्तवाक्यं किं न बाधते ? संभावितदोषत्वेन देहामैक्यघटरजतप्रत्यक्षाणां **विशेषाभावात्**, एवं स्वतः सिद्धप्रामाण्येन श्रुतिसुप्तवाक्यानां अपि **विशेषाभावात्**। तस्मात् मम देह इति प्रत्यक्षमेव देहात्मैक्यप्रत्यक्षं बाधते इति अभ्युपगन्तव्यम् । अस्मन्मते तु वेदानां ईश्वराप्रणीतत्वेन नित्यत्वात् स्वतः प्रामाण्ये सिद्धे नाप्रामाण्यशंकाऽपि । अप्रामाण्यशंका खलु क्लृप्तदोषादर्शनादेव निरस्यते । सुप्तप्रलापे तु दोषदर्शनात् आप्रामाण्यम् । एवं प्रत्यक्षेऽपि क्लृप्तदूरस्थत्वादिदोषाभावेन अप्रामाण्ये निरस्ते प्रामाण्यं स्वत एव सिद्ध्यति इत्यस्ति वैलक्षण्यम् । पौरुषेयेऽपि वाक्ये आप्तिनिश्चयेन आप्रामाण्ये निरस्ते स्वत एव प्रामाण्यम् । एवमनुमानेऽपि ज्ञेयम् ॥

एवं त्रिष्वपि प्रमाणेषु अप्रामाण्यकारणदोषाभावात् प्रामाण्ये स्वतः सिद्धे, तत्र परस्परविरोधे च प्राप्ते प्राबल्यदौर्वल्येन एव बाध्यबाधकभावनिर्णयः ॥ इतित्वन्मतास्मतन्मतयोः वैलक्षण्यं । यद्वा श्रुतेः वेदस्य इतराप्रमाणापेक्षया त्वन्मते वैशेष्यं प्राबल्यं कथं? न कथमपीत्यर्थः। प्रत्यक्षस्य संभावितदोषत्वोक्त्या दौर्बल्यं (त्वन्मते) अनुमानस्य परोपजीवकत्वेन दुर्बलता । वेदस्यापि सादित्वेन नाशवत्वेन चाबुद्ध्या निः सृतत्वेन चाबलत्वमिति कस्यापि प्रमाणस्य (स्वतः) जात्या प्राबल्याभावात्, बाध्यबाधकभावः नोपपद्यते इति भावः।

एतेन अस्मन्मते प्रत्यक्षस्य जात्या प्राबल्यं अस्तीति सूचितम् वन्हिरनुष्णः इति शाब्द ज्ञानं वा अनुमितिं वा तदनुपजीव्यं अपि प्रत्यक्षं बाधते इति लोकसिद्धम् । न चैतत् प्रत्यक्षस्य बाधकत्वं, विना तस्य स्वाभाविकप्राबल्यं विना उपपद्यते इति प्रत्यक्षं जात्येव प्रबलं इति । ननु वन्हिरनुष्णः इत्यनुमितिं प्रति त्वाचप्रत्यक्षस्यापि उपजीव्यत्वं संभवति । चक्षुरादिना धर्म्यादिग्रहेऽपि त्वचं विना साध्यप्रसिद्धेरभावात् । तथा न जात्या प्राबल्ये मानमस्ति । तदगृहीतग्राहित्वमपि न प्राबल्ये प्रयोजकम् । प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्यापत्तेः । नाप्यनुमानाद्यनिवर्तितदिङ्मोहनादिनिवर्तकत्वेन प्राबल्यम् ।एतावता हि वैधर्म्यमात्रं सिद्धम्। न च तावता इतरप्रमाणापेक्षया प्राबल्यं भवति । अन्यथा त्वाचप्रत्यक्षानिर्वर्तितवंशोरगभ्रमनिवर्तकत्वाच्चक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात् । तत् च चित्रनिम्नोन्नतज्ञानस्य चाक्षुषस्य तद्विरो-

धित्वाचज्ञानाद्बाधो नस्यादिति चेन्न[1] इत्युक्तम्। तथाहि जातान्धस्य वन्हिशैत्यानुमित्यर्थं त्वाचप्रत्यक्षोपजीवनस्य आवश्यकत्वेऽपि चक्षुष्मतः चक्षुषैव वन्हिग्रहे त्वाचप्रत्यक्षस्य बाधकत्वं दृष्टम्। एतदभिप्रेत्यैव न्यायामृते दृष्टमित्युक्तम्॥ यद्वा वन्हिसाक्षात्काररहीनस्य शब्देनैव वन्हिरूपवाच्यं प्रतिपत्स्यतः, तथा वन्हयतिरिक्तेऔष्ण्यप्रत्यक्षाभावेऽपि प्रतिकूलस्पर्शत्वेनैव उष्णत्वपरोक्षज्ञानेन च तदभावानुमानप्रवृत्तौ तदनुपजीव्यत्वाचप्रत्यक्षेणबाधः दृष्टचरः। नहि प्रत्यक्षयोग्यं किञ्चित् स्वप्रसिद्धर्थं सर्वदा प्रत्यक्षमात्रं अपेक्षते। तथा च धर्मिणो वा साध्यस्य वा त्वचमन्तराऽपि सिद्धेः नोपजीव्यत्वेन प्रकृते प्रत्यक्षस्य प्राबल्यं किन्तु स्वाभाविकतयेति अवश्यमभ्युपेयम्॥

किञ्च यदुक्तं न जात्या प्राबल्ये मानमस्तीति तदगृहीतग्राहित्वमपि न प्राबल्यप्रयोजकं, प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्यापत्तेः इति तदपि न युक्तम्। न्यायामृतभावानवबोधेन प्रवृत्तत्वात्तव दूषणस्य। तथाहि यत्सामान्यावच्छिन्नं ग्रहीतुं यादृशप्रमाणद्वयं प्रवृत्तं तत्काल एव तत्सामान्यावच्छिन्ने तादृशयोरन्यतरत् प्रमाणं यत् अपरागृहीताधिकांशग्राहि तदुच्यते अगृहीतग्राहि इति। नतुतज्ञन्यधीविषयत्वायोग्य,तदगृहीतार्थग्राही इति। येन त्वदुक्तं युक्तं स्यात्। एतदाशयवानेवश्रीव्यासराजमुनिः तदगृहीतरेखोपरेखादि विशेषग्राहित्वादि त्युवाच। अन्यथा अगृहीतग्राहित्वादित्येव अवक्षयत्। नहि प्रत्यक्षं- धर्मादि बोधयितुं प्रवृत्तं इति न धर्मादिग्रहणात् परोक्षप्रमाणानां तदग्राहकप्रत्यक्षापेक्षया प्राबल्यं। न हि खलु सिंहागृहीततृणभक्षणात् भवति मृगस्तदस्पर्धमानात्सिंहात् प्रबलः। तदेतदभिप्रेत्यैवतरङ्गिण्यां स्वविषये तदविषयत्वात्। परोक्षप्रमाणेस्वविषये तदग्राहकत्वात् इत्युक्तम्। एवमाशयमजानन् ब्रह्मानन्दः प्रललाप। यदुक्तं यत्प्रमाणविषयगतविशेषस्य तदगृहीतस्य ग्राहकं यत्प्रमाणं ततो हि तत्प्रबलं इति। तत्तुच्छम्। प्रत्यक्षविषययागादिगतस्यालौकिकश्रेयस्साधनत्वरूपधर्मत्वादेः ग्राहकत्वात् शब्दस्य प्रत्यक्षात्प्रबल्यसंभवात्। किञ्चअतीन्द्रियं प्रत्यक्षागृहीतं घटादिगतं गुरुत्वादिविशेषं अनुमानादि गृहणातीत्यतो यत्प्रमाण-

---

[1] प्रत्यक्षंतुस्वतोबलीइतिपूर्वश्लोकेइतिभावः।

फलागृहीतविशेषस्य यत्प्रमाणफलं ग्राहकं ततस्तत्प्रबलं इति न नियमः इत्यादि तन्न। रेखोपरेखग्राहकघटग्राहकयो प्रत्यक्षयोरैक्यमिव घटगुरुत्वग्राहकयोरैक्या-भावात्। नहिगुरुत्वग्राहकंलिङ्गं घटं गृण्हाति। सामर्थ्याभावात्। अर्थद्वयज्ञानकर-णत्वस्य क्वचिल्लिङ्गे संभवेऽपि तत्प्रवृत्तिकालस्यभिन्नत्वात्। प्रत्यक्षं घटग्रहणकाले एव रेखोपरेखादि अपि अवगमयतीति न काऽपिक्षतिः। एवं यागीदृषुश्रेयः साधनत्व विषयेऽपि विज्ञेयम्। तस्मात् समानविषये समानकाले विषयीकर्तुं पिस्पर्धिष्वोः प्रमाणयोः मध्ये यस्य तत्काले एव अधिकस्पष्टताश्रयज्ञानजनकत्वं तत्प्रबलं इति बोध्यम् तदभिप्रायेणैव प्राक् मिथ्यात्वमिथ्यात्वविचारे प्रत्यक्षस्यतु प्राबल्यं समानविषयेसति इत्युक्तम्।

एवं तदनिवर्तितदिङ्मोहादिनिवर्तकत्वें, अपि प्राबल्ये तन्त्रं भवति। न च त्वाचप्रत्यक्षानिवर्तितवंशोरगभ्रमनिवर्तकत्वात्चक्षुषोऽपि चक्षुष्त्वेन त्वगपेक्ष-याप्राबल्यसिद्धया तथा जात्याप्रबलचक्षुषाउद्भूतंचित्रनिम्नोन्नतभ्रमं त्वाचप्रत्यक्षं न बाधेतेप्यपत्तेः न तदनिवर्नितभ्रमनिवर्तकत्वं जात्या प्राबल्ये बीजं ,इति वाच्यं। यज्ञातीयावच्छिन्नन्नेनतद्योग्येनअनिनिवर्तितः भ्रमः तज्ञातीयानवच्छिन्नेन तदनु-पजीव्येनविषयीकर्तुं प्रवृत्तेन (योग्येन) न निवर्त्यते तज्ञातीयं प्रबलं इत्यस्यैव तदर्थत्वात्। चक्षुषत्वावन्च्छिन्ननिवर्तितस्य कृतकत्वादिलिङ्गप्रवर्तितस्य, वन्ह्य-नौष्ण्यभ्रमस्य चक्षुष्त्वानवाच्छिन्नत्वचानिवर्त्यत्वस्य दृष्टत्वात् न वंशोरगभ्रमनि-वर्तकमपि चक्षुष्त्वावन्छिन्नंत्वगपेक्षया जात्या प्रबलं भवितुमर्हति। तथा च चित्र-निन्मोन्नतज्ञानस्यचाक्षुषस्यापितद्विरोधित्वाचज्ञानाद्बाधो नानुपपन्नः। न हि खलु प्रत्यक्षत्वावच्छिन्नेनयोग्येन अनिवर्तितः यःकश्चनविपर्ययः अनुमानागमाभ्यां निवर्तितो दृष्टः येन प्रत्यक्षस्येतरापेक्षया जात्या अप्राबल्यं स्यात्। तथाचोक्तं भगवत्पादैः क्वचप्रत्यक्षतः प्राप्तं अनुमागमबाधितं ("६-१४ अनु - ३-२-१ सन्ध्ये") इति। दृष्टमिति शेषः - इति सुधायां। "यदि हि प्रत्यक्षप्राप्तंकचिदनुमा-नागमाभ्यां बाधितमुपलब्धवन्तः स्मः तदा प्रतीमो अनुमानादितःप्रत्यक्षस्य दौर्बल्यम्। न च तथा "इति चोक्तम्। वन्ह्यनौष्ण्यभ्रमस्य तु अनुमानागमाभ्यां प्रत्यक्षानुपजीविकाभ्यां अनिवर्तितत्वेऽपि त्वाचसाक्षात्कारेण बाधितत्वात् न अनुमानागमयोः जात्या प्रत्यक्षापेक्षया प्राबल्यशंकापि॥

ननु "न च प्रत्यक्षदृष्टस्य ततो बलवत्प्रत्यक्षं आगमं विना अनुमानादिनैव बाधः दृष्टः" (विष्णुतत्वविनिर्णयः पुट ८६६) इति आचार्योक्तत्वात् आगमस्य प्रत्यक्षापेक्षया प्राबल्यं भवन्मतेऽपि सिद्धं इति कथमिह प्रत्यक्षस्य आगमापेक्षयापि जात्या प्राबल्यमुच्यते इति चेत् उच्यते सत्यं आगमस्य प्रत्यक्षापेक्षया उपजीव्यत्वेनैव क्वचित्प्रबल्यंनतुजात्या।इहतुजात्याप्राबल्यंअपेक्षितंइतिनविरोधः।तदुक्तंटीकायां "भगवदवतारेषु छेदभेदादिप्रत्यक्षस्य "निरनिष्ट" इत्या दिरागमो बाधकः। "विष्णुर्दोषवान्" इति प्रत्यक्षस्य उपजीवकस्य दुर्बलत्वा त्। आगमस्यतु उपजीव्यस्य प्रबलत्वात्। प्राबल्याभावापेक्षया आगमोऽपि वा आदिशब्दोक्तः (अनुमानादिनैवेत्यत्र) इति। एतदाशयेन तत्त्वोद्योते "न च प्रत्यक्षसिद्धं अन्येन केनापि बाध्यं दृष्टं चन्द्रप्रादेशत्वादि विषयं तु दूरस्थत्वादिदोषयुक्तत्वादपटु" इत्याद्यु क्तम्।

एतेन जात्या प्राबल्यं इत्यस्य हि प्रत्यक्षत्वमात्रेण प्राबल्यं इत्यर्थः। तदनिवर्तितभ्रमनिवर्तकत्वादिना ततः प्राबल्यं तु पश्चादाशंक्य दूषणीयम्। किञ्च निर्दोषचक्षुषः त्वगनिवर्तितवंशोरगभ्रमनिवर्तकत्वात् त्वगपेक्षया प्राबल्यापत्तिःकथमुद्धृता ? अपि च यत् यदनिवर्तितभ्रमनिवर्तकं तत् ततः प्रबलमित्युक्तौ प्रत्यक्षानिवर्तितयागादौ अधर्मत्वभ्रमं प्रति श्रुतेर्निवर्तकत्वात् प्रत्यक्षात्सा प्रबला ते स्यात् "इत्यादि (गुरुचन्द्रिकोक्तं) निरस्तम्। प्रत्यक्षस्य धर्माधर्मग्रहणायोग्यत्वेन विषयीकरणार्थमप्रवृत्तेः। श्रुतेः यागादौ धर्मादौ अनुपजीव्यत्वेननिवर्तकत्वाभावाच्च।

ननु शब्देनाविषयीकृतं न किञ्चित्। सर्वस्यापि शब्दोल्लेख्यत्वात्। तदुक्तं भर्तृहरिणा "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्व शब्देन भासते"। इति वाक्यपदीयम्। तथा च कथं तदगृहीतग्राहित्वं प्रत्यक्षस्य? येन शब्दतः प्राबल्यं प्रत्यक्षस्य स्यात् इति चेत्। सत्यम्। अयं घटः इति एकाकारकज्ञानयोः शाब्दिकैन्द्रिकयोः स्पष्टत्वे वैलक्षण्यं आदायैव वैलक्षण्यस्य वक्तव्यात् आगमाजन्यस्पष्टतापेक्षया अधिकस्पष्टताश्रयज्ञानजनकत्वात् प्रत्यक्षस्य प्राबल्यं इति तदभिप्रायात् न क्षतिः। शतशः उष्णः इत्युल्लिखन्नपि शब्दः झटिति स्पर्शोयादृशवन्ह्यौ ष्ण्यंप्रमां उत्पादयति तादृशीं न जनयत्येवेति सर्वैरनुभूयमानत्वात्। यथा हि घट स्वरूप ग्राहकप्रत्यक्षेणैव रेखोपरेखादि विशेषोऽपिगृह्यतेनतथाघटस्वरूपग्राहकशब्देनेति। अन्यथाशब्देनघटेबोधितेघटः कीदृशः इत्याद्याकांक्षाद्यनुदयप्रसङ्गः। उक्तवाक्यं तु सामान्याकारविषयमित्यविरोधः। तदभिसन्धिमन्त एव श्रीव्यासराजतीर्था **विशेष** इति प्रत्यपीपदन्। तमेवाशयं स्पष्टयितुमाह **वैशेष्यं श्रुतेः कथमिति**। विशेषग्राहकत्वं

कथमिति प्रश्नः । यत्तु क्वचित्प्रत्यक्षतः प्राप्तं अनुमागमबाधितं इति तु परीक्षितप्रामाण्यप्रत्यक्षविषयंइति।तदपितुच्छम्।तथाहिकिंइदंप्रमाणभूतंप्रत्यक्षं सर्वत्र स्वप्रामाण्यार्थं अनुमानरूपां परीक्षां अपक्षेते ? उत क्वचित् ?। आद्ये किं निश्चितप्रामाण्यं तद् अनुमानं प्रत्यक्षे प्रामाण्यं निश्चाययति ? आहोस्वित् अन्यथाभूतं । नोत्तरः । स्वयं अनिश्चितप्रामाण्यस्येतरप्रामाण्यनिश्चायकत्वासंभवात् । प्रथमेऽपि किं स्वप्रामाण्यं तेनैव प्रत्यक्षेण सिद्धमित्युच्यते ? अथवा (प्रत्यक्षा) प्रमाणान्तरेण ? नाद्यः । अन्योन्याश्रयात् । द्वितीयेऽपि तत्र किं प्रामाण्यम् ? स्वतः सिद्धं ? उत तेनैवानुमानेन ? आहोस्वित् अनुमानान्तरेण ?। नाद्यः । सर्वत्रेत्यस्य अयुक्तत्वप्रसङ्गात्। तथा सति किमपराद्धं प्रथमप्रत्यक्षेण । सर्वत्र प्रत्यक्षस्य स्वतःसिद्धप्रामाण्याङ्गीकारस्यैव औचित्याल्लाघवाच्च । न द्वितीयः । अन्योन्याश्रयत्वापातत् । न तृतीयः । अनवस्थापत्तेः । न द्वितीयः। तथा मति सिद्धमस्मत्हार्दम्।अनुपजीव्यस्यअपरीक्षितस्यापिप्रत्यक्षस्यअनुमानाद्यबाधितत्वे बीजभूतप्राबल्यस्य प्रत्यक्षस्वाभा वत्वातिरेकासंभवात् । जात्या समबलयोः बाध्यबाधकप्रत्यक्षयोःमध्येऽन्यतरप्राबल्यसिद्ध्यर्थहिपरीक्षायाउपयोगाच्च॥

किञ्चकेयंपरिक्षा? यथाउपकृतस्यप्रमाणस्यप्रामाण्यनिश्चयोदयात्प्राबल्यं भवति । इति चेत् सफलप्रवृत्तिजनकत्वानुमानमेवेति ब्रूमः । तच्चापवादस्थले प्रामाण्यस्य स्वतस्त्वेऽप्यप्रामाण्यशंकां अपनुद्य निश्चायकं भवति । निश्चितप्रामाण्याद् किमन्यत् प्राबल्यं नाम । घटं पश्यतः झटिति अयं घटः इति प्रमितिरुत्पद्यते । तदा येन केनचित् नायं इति विप्रतिपन्ने सति परीक्षितुं प्रवर्तते । ततश्च घटेन जलाद्यानयनप्रवृत्तेः साकल्यदर्शनात् अयं घटः इति ज्ञानमेव प्रबलं प्रमाणमिति निश्चिनोति।एतेनसन्घटःइतिप्रत्यक्षंअपिव्याख्यातम्॥

यत्तु "सन्घटः इत्यादिरपि फलपर्यन्तं परीक्षिवत्वात् इत्यादिरोदनं यत्, तत् देहात्मज्ञानस्य स्वाप्नादिज्ञानस्य च फलपर्यन्तं परीक्षितत्वेऽपि दुर्बलत्वात् हेयं इति तदयुक्तम् । फलस्यैव अन्तिमत्वेन तदुत्तरं परीक्षाया अभावात् । अन्यथा वन्हिस्पर्शात् दाहाद्यनुभवानन्तरमपि उष्णत्वज्ञाने प्रामाण्यानिश्चयः स्यात् । देहात्मभ्रमस्यैव अभावेन, भावे वा मम देहः इति परीक्षितप्रत्यक्षबाधितत्वेन, स्वाप्नज्ञानस्य प्रमाणत्वेन च फलपर्यन्तपरीक्षायाः कुत्रापि प्राबल्याव्याभिचारात् । नेदं रजतं इति ज्ञानस्य स्थाल्याद्यात्मना परिणामरूपरजत फलादर्शनं तद्विपरीत-फल दर्शनाभ्यां सहकृतत्वेनैव हि रजतज्ञानापेक्षया प्राबल्यम् । ततश्च तस्यैव

बाधकता। अन्यथा निःशंकप्रवृत्ति,बाध्यबाधकभावादिः विलुप्येत ॥ तथा चोक्तं भगवत्पादैः "न हि अन्नादिकं भोग्यं दृष्ट्वा भोक्तुं सत्यत्वे प्रमाणान्तरमपेक्षते। किन्तु नेदमन्नं इति केनचिदुक्ते कथमिदमन्नत्वेन दृश्यमानं अन्नं न भवति इति प्रमाणान्तरं अपेक्षत इति तत्त्वनिर्णये। तटीकायामपि अयमर्थः। प्रत्यक्षदृष्टिर्हि विधिरूपा घटं घटतया, सुखं सुखतया गोचरयति घटादयश्च अर्थक्रियावत्सन्प्र-भेदा इति घटादिसत्यतागोचराणां एव सर्वज्ञानानां चोत्सर्गतोऽर्थाव्यभिचारित्वम्। बाधकादेव अपवाद इति च वादिप्रतिवादिनोः सम्मतम्। ततोऽपवादाभावात् जगत्सत्ययत्वं दृष्ट्यैव सिद्ध्यतीति न मिथ्यात्व-सिद्धिरिति। बाधकाभावे विधिमुखेन अर्थक्रियायोग्यत्वेन दृष्टस्य सत्यत्वं दृष्ट्यै-वाङ्गीक्रियते। न तुतत्रप्रमाणं मृग्यते। तन्मिथ्यात्वाङ्गीकार एव बाधकप्रमाण-मन्विष्यत इति। अन्नादिकमिति विधिमुखवेद्यत्वं सूचयति। भोग्यमित्यर्थक्रिया-योग्यत्वम्।

ननु च भोग्यं इति निपातनात् भोज्यमितिभाव्यम्। भोग्यमिति तु कथम्। मैवम् ह्युक्तं नतु अन्नमित्येव न च सक्चन्दनादिकं भक्ष्यम्। अतः सामान्यविषयत्वात् भोग्यमित्येव युक्तम्। प्रयोजनाभावादेव अनपेक्षेति न वाच्यमिति भावेनोक्तम्। इदं रजतमिति प्रत्यक्षस्य नेदं रजतं किन्तु शुक्तिकैवेति प्रत्यक्षं बाधकं भवति। प्रथमस्या-परीक्षितत्वेन दुर्बलत्वात् द्वितीयस्य परीक्षितत्वेन बलवत्त्वात्। यद्यपि परीक्षाना-मानुमानमेव। तथापि तस्य केवलस्याबाधकत्वेपि प्रत्यक्षसाहाय्येन सामर्थ्यात् प्रकृतेच तदभावात् इति॥

ननु "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतं इति स्मृतिविरोधात् कथं प्रत्यक्षस्य जात्या प्राबल्यमिति चेन्नोक्तस्मृतेः उपच्जीव्यविरोधनिरवकाशविरोध परीक्षितविरोध युक्त अपवाद विषयं विहाय इतरत्र आगमस्य जात्या उत्सर्गेण प्राबल्यमित्यर्थस्य स्वीकारात् विरोधाभावात्। तदुक्तं विष्णुतत्वनिर्णयटीकायां" तेषुत्रिषु अक्षादिषुकरणेषु मध्येयदागमस्यप्राबल्यंतत् जात्याउत्सर्गेणैवस्मर्तव्यम्।

न तु नियतम्। जातेरुत्सर्गविषयत्वात् जातिग्रहणेनोत्सर्गो लक्ष्यते" इति। तत्रैव श्रीराघवेन्द्रतीर्थीये "आगमत्वक्षात्यैव प्राबल्यमिति व्याख्या तूत्तरग्रन्थविरोधादयुक्तेतिभावः" इति उक्तम्। उपजीव्यविरोधे तु न प्रामाण्यममुष्यचेति उत्तरवाक्यातुरोधेन जात्या इत्यस्य लाक्षणिकार्थस्वीकारस्य न्याय्यत्वात्। त्वन्मतेपि स्मृतेः सर्वत्र प्रत्यक्षाद्यनुपजूव्यास्यापि आगमस्य आगमत्वेनैव प्राबल्यं इत्यर्थो नाभ्युपगन्तुं युक्तः। परीक्षितप्रत्यक्षस्य प्राबल्याङ्गीकारात्। अन्यथा अफलप्रत्यक्षं नदीतीरे फलसद्भावबोधस्य बाधकं न स्यात्।

अथवोक्तस्मृतेः वैदिकार्थविषयत्वान्न दोषः। न चाद्वैतस्यापि वैदिकार्थत्वा तत्रागमप्राबल्योपपत्तिरिति वाच्यम्। वेदानुपजीविप्रमाणान्तराविषय अभावप्रतियोगित्वमेव वैदिकार्थनत्वमित्यङ्गीकारात्।

तदेतत्सर्वमभिप्रेत्य वक्ति वैशेष्यमिति। श्रुतेः क्वचित् उपजीव्यादिविरोधे सति प्रामाण्यं शंकनीयम् स्यादिति। वैशेष्यम् श्रुतित्वेन प्राबल्यं कथम्? इत्यर्थः। यथा प्रत्यक्षे प्रत्यक्षत्वेन प्राबल्यं दृष्टं तथा।

अथ वा जात्या श्रुतेः प्राबल्यनिराकृतेः अनुमानस्य स्वतोदुर्बलत्वेवि वादात् च कस्यचित्प्रमाणस्य जात्यैव प्राबल्यस्य अन्योन्याश्रयादिदोषपरिहाराय अङ्गीकार्यत्वे परिशेषात् प्रत्यक्षस्य जात्या प्राबल्यं समर्थितं मन्वानः इदानीं उपक्रमन्यायेनापि प्रत्यक्षस्य प्राबल्यं स्थापयितुमाह अबाधादिति॥ असंजातविरोधित्वादित्यर्थः। श्रुतेः जाताधिकारः (जै-३-३-१) इत्यत्र उपक्रमस्य प्राशस्त्यमात्रप्रतिपादकस्य अर्थवादवाक्यस्य प्राबल्यं वा उत विध्युद्देशस्योपसंहारवाक्यस्य वा इति विचारितम्। तत्र अग्ने ऋग्वेदः, वायोर्यजुर्वेदः आदित्यात् सामवेदः इति ज्योतिष्टोमे उपक्रमवाक्ये ऋग्वेयजुर्वेदसामवेदपदानि श्रूयन्ते।

उपसंहारे तु "उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना" इति ऋगादि-शब्दाश्च पठिताः। तत्र उपक्रमोपसंहारयोरेकवाक्य त्वाद् उपक्रमश्रुतऋग्वेदश-ब्दस्य लक्षणया उपसंहारश्रुत ऋक्पदबोध्यऋङ्मन्त्र परत्वं वा, अथ वा उपसंहा-रश्रुत ऋक्पदस्यैव उपक्रमवाक्यानुसारेण ऋग्वेदपरत्वं वा वक्तव्यम् इति संशये यत्प्रबलं तदनुसारेण भवति इति किं तत् प्रबलं भवति ? उच्यते । तत्र सिद्धान्तितं । असंजाताविरोधित्वादर्थवादो यथा श्रुतः । व्याख्येयस्तद्विरुद्धस्य विध्युद्धेशस्य लक्षणा" इति । अर्थवादः स्तुतिपरं उपक्रमवाक्यम् ! यथा श्रुतो व्याख्येयः लक्षणादि न कर्तव्यम् । तत्र हेतुः असञ्जातविरोधित्वात् इति । अस्यैव उपक्रमस्य आदित्वेन विरोधि ( बाधक ) नः अभावात् प्राबल्यम् । विध्युद्धेशस्य विधिः( विधानं ) उद्धेशः यस्य वाक्यस्य तस्य उपसंहारस्य । यस्मिन् उच्चैष्ट्वादिकं विधीयते । लक्षणा स्वमुख्यार्थपरित्यागेन उपक्रमानुरोधेन अर्थः वक्तव्यः इति भावः। तथा च यत्सञ्जातविरोधि तत् स्वार्थानिर्णायकत्वेन दुर्बलम् ।यच्चासंजातविरोधि तत् स्वार्थनिश्चायकत्वेन प्रबलमिति। इत्थं च ऋक्शब्दः एव ऋग्वेदलक्षकः इति उच्चैष्ट्वादयः ऋग्वेदधर्माः इति मीमांसकसिद्धान्तः । तेनैव न्यायेनेहापि प्रत्यक्षस्य अर्थादुपक्रान्तस्य पूर्वत्वेन असंजातविरोधित्वेन प्राबल्यं श्रुतिःतद्विरोधिन्यपि सञ्जातविरोधित्वात् स्वार्थपरित्यागिनी दुर्बला इति।

अवश्यं चैवं परैरनुमन्तव्यं इति आशयेन परवाक्योदाहरणामिषेण स्वमत-मप्यभिव्यनक्ति **इति त्वद्गुरुवाक्यं इति** । त्वद्गु रुःअबाधात् (असञ्जातविरो-धित्वात्) करणस्य प्रामाण्यं (प्राबल्यम्) च मन्वान एव सिद्धप्रामण्यं प्रत्यक्षं एव श्रुतिप्रामाण्यसमर्थनावसरे दृष्टान्तयामास। ततः सिद्धं अस्मदिष्टं प्रत्यक्षप्रा-बल्यम् । अन्यथा का नाम सङ्गतिरस्य दृष्टान्तवचनस्य ? । न हि केनापि स्वस्थात्मना अनिश्चितसाध्यकं दृष्टान्तीक्रियते। नापि हेतुविकलम्। न च वार्ति-कवचने च अक्षादिवदिति निदर्शनं व्यावहारिकप्रामाण्य मात्रेणइति वाच्यम् । तन्मते तात्विकप्रमाणस्यैवाभावात् विभागायोगात् । अनेनैव यदुक्तं "न प्रकृते तन्न्यायः संभवति। उभयोः साम्याभावात्। गृहीतप्रमाणभावश्रुत्यपेक्षया भ्रमवि-लक्षणत्वेन अनिश्चितस्य प्रत्यक्षस्य न्यूनबलत्वात्" इति तद्रिक्तमिति साधितं भवति । **"अक्षादिवदिति"** वार्तिककृतो **भ्रमविलक्षणत्वेनानिश्चितस्य** विष्मदृष्टान्तस्य वचनेन तन्मौर्ख्यस्यैव भवदभिप्रेतत्वापत्तेः।

किञ्च यदुक्तं श्रुतिः गृहीतप्रमाणभावा इति । तत्र पृच्छ्यते । किं श्रुतेः प्रामाण्यं श्रुत्यैव गृहीतं उत प्रत्यक्षेण आहोस्विदनुमानेन । नाद्यः आत्माश्रयात् । द्वितीयेपि किं निश्चितप्रामाण्येन उत अन्यादृशेन? । नाद्यः । त्वया तदनङ्गीकारात् । नान्त्यः । असंभवान्नान्त्यः । तत्रापि व्याप्तिग्रहार्थं श्रुत्यपेक्षायां अन्योन्याश्रयात् प्रत्यक्षापेक्षाया अकार्यकारित्वाच्चानुमानाप्रवृत्तेः । अनाप्ताप्रणीतवेन तत्साधनस्य प्रागेव निरस्तत्वात् । अपि च किमिदं प्रामाण्यं यदागमे त्वया गृहीतं प्रत्यक्षे सन्दिह्यते ? न प्रमाकरणत्वं तस्योभयत्र त्वन्मतेऽविशेषात् तदाह **त्वन्मते वैशेष्यम् कथं ? इति** ।

ननु प्रमाकरणत्वमेव प्रमाणत्वम् । तच्च प्रत्यक्षे परीक्षया निश्चीयते । ततः प्राक् तदनिश्चयात् तत्सन्देहः इति चेत्तत्राप्याह **वैशेष्यं कथमिति** । श्रुतेः वा कथं प्रमाकरणत्वनिश्चयः ? न स्वतः । दत्तोत्तरत्वात् नाप्यनुमानेन । तथा सति किमन्यत्परीक्षा नाम यतः प्राक् प्रत्यक्षे सन्दिह्यमानमपि प्रामाण्यं श्रुतौ निश्चितं स्यात् इति उभयत्रानुमानेनैव प्रामाण्यनिश्चये श्रुतिमात्रस्य अवैशेष्यात् । किञ्च प्रत्यक्षं प्रमाणं इति हि त्वन्मतम् । किं तत्र प्रामाण्यं सर्वत्र सर्वदा अनिश्चितमेव उत क्वचिन्निश्चितं ? । नाद्यः । प्रामाण्यव्यवहारोच्छेदापत्तेः । व्यवहारकाले अबाधितार्थ विषयकज्ञानसाधनत्वात् प्रामाण्यव्यहारः इति चेत् तत्रापि किमयं प्रामाण्यव्यवहारः परीक्षासमनन्तरमेव उत ततः पूर्व ? आद्ये परीक्षायाः अपि कथं प्रामाण्यम् यद् परस्य प्रामाण्यं संपादयेत् इति एवं अनवस्थापातात् न हि एकेन अन्धेन अदृश्यं किञ्चित् समर्थ यितु अन्धानांमहस्त्रमप्यलम् । न द्वितीयौ । श्रुतिसाम्यात् । श्रुतेर्वा प्रत्यक्षस्य वैशेष्याभावात् । तदप्याह **वैशेष्यं कथमिति** । सर्वत्र सर्वप्रामाण्यस्य शंकनीयत्वेन कुत्रापि वैशेष्यम् न स्यात् इति भावः ।

ननु अन्यथा इदं रजतं इति भ्रमोऽपि इयं शुक्तिः इत्याप्तोपदेशापेक्षया प्रबलं स्यात्" इति तेन बाधाभावः स्यादिति चेत्तदानीमप्याह **वैशेष्यं इति** । विगतः शेषः इतरज्ञानं यस्मात्सः विशोषः स्वातन्त्र्येण बाधकः तस्य भावः **वैशेष्यम्** बाधकत्वम् श्रुतेरित्यन्वयः । श्रुतिपदं आप्तवाक्यादिसामान्यपरम् । इयं शुक्तिः इत्याप्तोपदेश-स्यापि न स्वातन्त्र्येण भ्रमबाधकत्वं किन्तु प्रत्यक्षचरणरजोभिषिक्तस्यैव । न हि

रज्जौ सर्पभ्रमेण भिया धावन्तम् गृहान्तः देवपूजापराप्तवाक्यं निवारयद्दृष्टम् । न च कथंचित् बाधकत्वं आगमस्य अस्ति खलु इति वाच्यम् । तर्हि अस्तु महाराजपादपद्मं आराधयतः तद्वस्त्रक्षालकस्य रजकस्य राजान्तरादभीतिः राजजयात् पौराणां जयघोषोपि प्रकृते च प्रबलप्रत्यक्षान्तरेण असनाथीकृता श्रुतिः स्वतः प्रबलं प्रत्यक्षं बाधितुं नालं इत्यलम् ।

एतेन (1) "शीघ्रगामित्वात् प्रत्यक्षस्य प्राबल्यं" । (2) घटे विशेषसत्त्वग्राहिणः प्रत्यक्षस्य सामान्यतो द्वैतनिषेधकश्रुत्यपेक्षया सामान्यविशेषभावेन प्राबल्यम् (3) प्रत्यक्षेण निरवकाशेन सावकाशश्रुतेः बाधः (4) बहूप्रमाणबाधस्य अन्याय्यत्वात् प्रत्यक्षादिबहुप्रमाणाविरोधाय अद्वैतश्रुतेः प्रतीतार्थबाधः च वैशेष्यं त्वन्मते कथं ? इति ब्रुवता ग्रन्थकारेण समर्थिताः वेदितव्याः । तथाहिः- (1) प्रत्यक्षागमयोः उभयोरपि परीक्षितत्वावैशेष्यात् । (2) प्रत्यक्षस्यापि प्रामाण्यस्यनिश्चितत्वेन श्रुतेः अवैशेष्यात् । (3) प्रत्यक्षादिवैरुध्ये श्रुतेरेव प्रामाण्ये शंकिते तस्या निरवकाशत्वरूपविशेषासंभवात् सर्वस्यापि प्रमाणजातस्य व्यावहारिकत्वेन, व्यावहारिकविषयक प्रमाणविवक्षणे, अपि श्रुतेरपि तथात्वात्, अहंप्रत्यक्षस्यापि तात्विकविषयकत्वाच्च तात्विकातात्विकप्रमाण्यायोगात् अर्थक्रियाकारित्व रूप व्यावहारिकत्वस्य निरवकाशत्वे एव बीजत्वात् । श्रुतेः प्रत्यक्षापेक्षया वैशेष्याभावात् । (4) अद्वैतश्रुतेः बहुप्रमाणविरोधेन अन्यपरत्वसंभवेन अनन्यपरत्वरूपवैशेष्याभावात् सर्वथाऽप्रामाण्यस्य अयोगात् च संकोचस्य आवश्यकत्वात्, एकाकिन्या अपि अद्वैतश्रुत्या निरवकाशबहु प्रमाणबाधने तस्या वैशेष्याभावात इति क्रमेण सिद्ध्युक्तानां सर्वेषां अपि आक्षेपाणां समाधानंउक्तं इति वेदितव्यम् ।

। इति जात्युपक्रमादिन्यायैः प्रत्यक्षप्राबल्य समर्थनम् ।



## ॥ प्रत्यक्षस्य उपजीव्यत्वेन प्राबल्यसमर्थनम् ॥

यदुपजीव्यं तदुपजीवकापेक्षया प्रबलमिति लोके दृष्टम् । प्रत्यक्षं च साध्यादिरूपं लिङ्गशब्दापेक्षितं स्वरूपतज्जन्यज्ञानप्रामाण्यादि गृह्णाति इत्यपि निर्विवादम् । प्रत्यक्षस्याज्ञातकरणत्वेन ज्ञानजनने स्वजन्यज्ञानप्रामाण्यग्रहणे वा नेतरदपेक्षते । तस्मात् रूपघटपटादिधर्म्यंशे साक्षादुपजीव्यस्य शब्दलिङ्गापेक्षिततत्तद्ग्राहिश्रोत्रसाक्षिसजातीयत्वेन चोपजीव्यस्य "सन्घटःप्रत्यक्षज्ञानकरणस्य चक्षुरादेर्प्राबल्यं भवत्येव" इति (न्यायामृते) (1) ननु प्रत्यक्षं तात्विकत्वांशे नोपजीव्यम् । शाब्दनिश्चयेपेक्षितस्य त्रिकालाबाध्यत्वरूपतात्विकत्वस्य प्रत्यक्षागृहीतत्वात् । प्रत्यक्षस्य व्यवहारकालमात्राबाध्यत्वग्राहकत्वात् । तच्च व्यावहारिकत्वं शाब्दधीर्न विरुणद्धि । किन्तु तात्विकत्वमेव । तथाच प्रत्यक्षागृहीततात्विकत्वोपजीवनेन शाब्दबोधानुत्पादान्न प्रत्यक्षं तदंश उपजीव्यमिति सिद्धम् । तात्विकत्वस्य प्रयोजककोटावप्रवेशात् । तदुक्तं खण्डनखण्डखाद्ये

[1]पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ ।

हेतुतत्वबहिर्भूत सत्त्वासत्त्वकथा वृथा ॥ १-५-(पत्र३६)

विवृतं चैतत्तत्रैव भामत्यां[2] । किञ्च यत् यदपेक्षितग्राहि तदुपजीव्यमित्यपि न युक्तं । "नेदं रजतं" इति बाधज्ञानापेक्षितप्रतियोगिसमर्पकतया उपजीव्यं "इदं

---

[1] पूर्वेति पूर्वसबन्धनियमेअनन्यथासिद्धत्वेसति कार्यव्यापकत्वे सति कार्याव्यवहित प्राक्कलवृत्तित्वरूपे हेतुत्वेकारणत्वे ( लक्षणे ) नौआवयोःसत्यत्वमिथ्यात्ववादिनोःतुल्येएवसमानेसति,हेतुत्वबहिर्भूतसत्त्वासत्त्वकथाकारणत्वलक्षणेऽप्रविष्टतात्विकत्वाऽतात्विकत्वयोः ( कथा ) कारण्कोटिप्रविष्टतयाकथनवृथाव्यर्थामिति श्लोकार्थः॥

[2] भामत्यामध्यासभाष्यव्याख्यावसरे "न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्व चेत्युक्तम् । तस्यापौरूषेयतया निरस्तसमस्तदोषशकस्य, बोधकतया स्वतः सिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् । प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात् तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेन्न । उत्पादकाप्रतिद्वन्द्वित्वात् । नह्मागमज्ञान साव्यावरिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति । येन कारणाभावान्न भवेत्, अपि तु तात्विक प्रत्यक्षस्य प्रामाण्य न च तत् तस्योत्पादक, अतात्विकप्रमाणभावेभ्योऽपि साव्यावहारिकप्रमाणेभ्यः तत्व प्रतिपत्ति (दर्शनात्) जनतात्" ।"ज्येष्ठत्व चानपेक्षितस्य बाध्यत्वेहतुः न बाधकत्वे। रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्, तदनपबाधेन तदपबाधात्म तस्तस्योत्पत्तेरनुपपत्तेः। दर्शित च तात्विकप्रमाणभावस्यानपेक्षितत्वम् । तथा च परामर्श सूत्र पौर्वापर्ये पूर्वदौर्बल्य प्रकृतिवत् इति। तथा "पूर्वात् परबलीयस्त्व तत्र नाम प्रतीयता । अन्योन्यनिरपेक्षाया यत्र जन्मधिया भवेदिति" । ( ६१-पत्र)

रजतमिति" ज्ञानं प्रबलं न बाध्येत। (3) नापि" यत्प्रामाण्यं स्वरूपसिद्ध्यर्थमपवा दनिरासार्थं च यत्प्रामाण्यमुपजीवति तत्तस्योपजीव्यं इति । तथासति व्याप्तिधियोऽनुमित्युपजीव्यत्वं न स्यात् । लिङ्गाभासादपि वन्हिमति वन्हिप्रमादर्शनात् ।(4) यदि चोपजीव्यत्वेन सह परीक्षितत्वस्यापि प्राबल्यहेतुत्वमुच्यते, ततश्च रजतभ्रमवत् न सन्घटः इत्यस्य दौर्बल्यमिति चेत् तर्ह्यस्माभिरपि अनुमानागमयोः परीक्षितप्रत्यक्षगत स्वसमानदेशकालीनविषयाबाध्यप्रामाण्यनिषेधकत्वाभावान्न प्रत्यक्षात् दौर्बल्यं नापि बाध्यतेत्युच्यते ।

(5)यच्चोक्तंन्यायामृते "**अक्षाऽप्रामाण्येही**" ति।तन्न।व्याप्त्यादिसमानसत्ताकमनुमेयं सिद्ध्यतु इति आपत्तेरस्मदिष्टत्वात् । ब्रह्मभिन्नस्य सर्वस्यात्यन्ताबाध्यात्वाभावात् मिथ्याभूतेनापि प्रतिबिंबेन बिंबानुमितिदर्शनात् न तन्नियमोपि इत्यत आह **इत्याद्युक्तमिति**।

पूर्वपक्षः **नोपजीव्य विरोधोऽपि शंक्यो यस्मान्न बाध्यते ।**
**उपजीव्यं स्वरूपं यत् बाध्यते तद्विलक्षणम् ॥**

**मिथ्याभूतेन सम्यग्धीर्जन्यते प्रतिबिंबवत् ।**
**ध्वनिधर्मविशिष्टैश्च वर्णैःशाब्दी प्रमा यथा ॥**

सिद्धान्तः **इत्याद्युक्तं तु युक्तं न प्रतिबिंबस्य सत्यता ।**

**तवापि संमता बिंबप्रतिबिंबैक्य वादिनः ॥८६॥**

अयं भावः। प्रतिबिंबानुमाने हेतुसाध्ययोः विषमसत्ताकत्वाभावान्न तस्य दृष्टान्ततया ग्रहणं तव युक्तम् । त्वन्मते बिंबप्रतिबिंबयोरभेदस्यैवाङ्गीकाराद्बिंबस्य तात्विकत्वे तत्प्रमितिकरणस्य प्रतिबिंबस्यापि तात्विकत्वमवर्जनीयमिति । न च हेतोः साध्यातिरेकार्थ भेदस्य कल्पनावश्यकत्वात्कल्पितभेदविशिष्टत्वेन मिथ्यैव प्रतिबिंबः तेन च सत्यबिंबस्यानुमितिरित्यत आह **संमता तवापीति** । बिंबप्रतिबिंबयोर्मध्ये भेदं कल्पयितुरपि तव तयोरैक्यस्य वास्तविकस्य भावात् प्रतिबिं-

बस्य सत्यता संमतैव स्यात् । भेदस्य कल्पितत्वेन मिथ्यात्वेपि वास्तवाभेदादभेदिनः सत्यत्वाावश्यंभावात् । अन्यथा घटे स्वभेदं कल्पयितुरपि घटमिथ्यात्वधीः स्यात् । एवं आपणस्थरजतशुक्तिरूप्ययोरभेदकल्पने आपणस्थं मिथ्या स्यात् । प्रातिभासिकव्यावहारिकयोरपि कल्पितभेदसत्त्वेन च ऐक्यं स्यात् न च भेदस्तत्र तात्विकः । अबाध्यत्वप्रसङ्गात् । किन्तु व्यावहारिकः । तथापि तस्य मिथ्यात्वेन कल्पितत्वाविशेषात् । अयमभिसन्धिः । (1) यदुक्तं[1] "बाध्यते च तात्विकत्वाकारः। स च नोपजीव्यते । कारणत्वे तस्याप्रवेशादिति "। तन्निरसिष्यते । (२) यच्च "इदं रजत"मिति भ्रमः बाधज्ञानापेक्षितप्रतियोगिग्राहित्वेनोपजीव्यो न बाध्येतेत्युक्तं तन्न मूले एव "नकेवलमुपजीव्यत्वमेव प्राबल्ये तन्त्रं किन्तु" इति ग्रन्थेनैव दत्तोत्तरत्वात् । (3) यदप्युक्तं "यत्प्रामाण्यं यत्प्रामाण्यमुपजीवति तत्तस्योपजीव्यमिति चेत्तर्हि लिङ्गाभासादपि वन्हिमति वन्हिप्रमादर्शनात् व्याप्तिधियोपि नानुमित्यत्युपजीव्यत्वं स्यात्" इति । तन्नोचितम् । तथा हि व'न्हिमति वन्हिप्रमोदये तत्र प्रामाण्यं लिङ्गाभासेनैवोत्पद्यत इत्युच्यते उत प्रमाणान्तरेण उत स्वतः । नाद्यः। तस्य प्रमितिकरणत्वेन लिङ्गाभास त्वनिर्णयस्यैवाभावात्। न द्वितीयः। तथा सति न साऽनुमितिरेव प्रमाणान्तरेणैव ज्ञानस्यापि उत्पन्नत्वात् । न च पूर्वोदितज्ञानस्य तथात्वमिति वाच्यम् । प्रामाण्यानिश्चयादेवानुमितित्वस्याप्यनिश्चयात्। नान्त्यः। प्रथमकल्पोक्तदोषभाजनत्वात् । तस्माद्यादृच्छिकस्थले प्रमाणाभासानामपि प्रमितिकरणत्वेन तत्र प्रमाणलक्षणातिव्याप्तिपरिहारायाकुण्ठितशक्तिमत्यज्ञातीयानन्तरं नियमेन प्रमोत्पत्तिस्तत्प्रमाणमिति त्वया वक्तव्यत्वेन, एवं यज्ञातीयप्रामाण्यं नियमेन यज्ञातीयप्रामाण्यमुपजीवति तत्तस्योपजीव्यमिति निर्वचने क्षत्यभावः आस्थेयः एव। अन्यथा मन्त्रादिशक्त्या क्वचिदुत्पन्नघटव्यभिचारित्वेन दण्डादीनां क्लृप्तघटकारणता न स्यात् । तथा च घटार्थिनः कुलालस्य दण्डादिकारणेषु प्रवृत्तिश्च न स्यात् । करणेषु प्रामाण्याभावेपि तज्जन्यज्ञानस्य प्रामाण्यसंभवेन करणानां निर्दुष्टतासाधनार्थं पञ्चावयवप्रयोगस्य वैयर्थ्यप्रसङ्गाच्च। तथा चास्मिन् पक्षे उपजीव्यत्वेनैव प्रत्यक्षस्य प्राबल्यं न तु परीक्षितत्वसाहित्येनापि । परीक्षासाहाय्यं तु "यत् यस्योत्पत्तौ प्रयोजकं तत्तस्योपजीव्यं"इत्येतत्पक्षे एवापेक्षते । तेन यदुक्तं गुरूचन्द्रिकायां "उपजीव्यजातीयत्व-

---

1 "प्रत्यक्षंतात्विकत्वेनेति"श्लोकनिरसनावसरे।

मात्रेण न प्राबल्यं, यदा हि" नोपजीव्यत्वेन प्राबल्यं, किन्तु परीक्षितत्वेन "इति पर एव वक्ष्यति, तदा परीक्षितमुपजीव्यजातीयं प्रबलं वाच्यम्। न त्वपरीक्षितम्। तथा च परीक्षितप्रत्यक्षत्वेन प्राबल्ये न नो क्षतिः" इति तत्प्रयुक्तं भवति।

(4) यद्यस्योत्पत्तौ प्रयोजकं तत्तस्योपजीव्यमिति पक्षेपि यच्चोक्तमद्वैतसिद्धौ "परीक्षा च प्रवृत्तिसंवादविसंवादाभावदोषाभावादिरूपा। तथा च स्वसमानदेशकालीन विषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते धूमेन स्वसमानदेशकालीनवन्हिरिव। तथा च व्यवहारदशामात्राबाध्यत्वं देहात्मैक्यसाधारणं परीक्षितप्रमाणे व्यवस्थितमिति कथमत्यन्ताबाध्यत्वग्राहकागमानुमानयोः प्रवृत्तिः न स्यादिति तदतीवापहसनीयप्रक्रियासमुज्जृंभितमेव। तथाहि किमिदंमत्यन्ताबाध्यत्वाभावरूपं बाध्यत्वं यत्परीक्षितोपजीव्य प्रत्यक्षोपजीविशब्दानुमानाभ्यां गृहीतःइतिउच्यते यदि जनिष्यमाणध्वंसप्रतियोगित्वं तर्हि तादृशानामनित्यत्वमात्रसिद्ध्या नास्माकं क्षतिः। यदि च त्रैकालिकात्यन्ताभावप्रतियोगित्वं तदा व्यवहारदशायामबाध्यत्वग्राहकपरीक्षितोपजीव्यप्रत्यक्षं तस्यामपि दशायां बाध्यत्वावगमके आगमानुमाने कथं न रुन्धीत ? । नाप्यस्ति परीक्षायाः समानदेशकालीनविषयाबाध्यप्रामाण्यव्यवस्थापकत्वनियतिरपि । यथा कालान्तरभाविनः देशान्तरस्थनदीपूरेण ऊर्ध्वदेशे प्राक्कालीनवृष्ट्यनुमितिदर्शनम्।

तथा परीक्षालिङ्गकप्रामाण्यघटकाबाध्यत्वानुमितावपि परीक्षाभिन्नकालीनमबाध्यत्वमपि संभवेदेव । न हि प्राक्कलीनं गोः गर्भ वत्सप्रसवं च संदिहानोऽदुहन् परीक्षते । यदि विरोधिधियः विषयत्वमात्रं तर्ह्यपि श्रुत्या अद्वितीयं प्रतिपस्त्यतः अद्वैतिनो तद्वाक्यश्रोतुर्वा जगद् व्यवहारदशाबाध्यं स्यात्। तथा च स कदापि न व्यवहरेत्। तथा च विश्वासप्रमाणतदाभासादिव्यवस्था अनुपपन्नेव।

(5) यदपि "एतावता हि व्याप्त्यादिसमानसत्ताकमनुमेयं सिद्ध्यतु इत्यापत्तेः फलितोऽर्थः । स चास्माकमिष्टः एव न हि ब्रह्मभिन्नं क्वचिदत्यन्ताबाध्यमस्ति"इति । तदसत्। मूले अबाध्यत्वं सामान्यमविवक्ष्य विशिष्य प्रातिभासिकव्यावहारिकेत्यादिपदप्रयोगेण प्रातिभासिकत्वादिरूपेणैव व्याप्त्यादिसमान-

सत्ताकत्वं अनुमेयस्य न बाध्यत्वसामान्येनाभिप्रेतमिति तस्य तवानिष्टत्वात् । प्रातिभासिकधूमेन व्यावहारिकवन्हिसिद्धेः तव सुतरामनिष्टत्वात् । "व्यभिचारिणापि लिङ्गेन साध्यवति पक्षे अनुमितिप्रमादर्शनादिति" तु स्वस्य प्रमाणाप्रमाणव्यवस्थाभञ्जकत्वमेवाभिव्यनक्ति। वन्हिसाधकधूम इव धूमसाधकवन्हिरपि प्रमाणं किं न स्यात् ? प्रमाजनकस्यापि वन्हिरूपहेतोः अप्रामाण्याङ्गीकारवत् धूमानुमानमपि अप्रमाणं कुतो नाद्रियते ? इति आपत्तिश्च । तस्मात् यज्जातीयानन्तरं नियमेन प्रमोत्पत्तिः तज्जातीयं तत्र प्रयोजकं (करणं) इत्यभ्युपगन्तव्ये लिङ्गाभासेन प्रतिभासिकेन यदृच्छया साध्यवत्पक्षानुमित्युत्पादस्य अङ्गीकारः अयुक्त एव ।

यच्चोक्तं "ध्वनिधर्मविशिष्टैः वर्णैः शाब्दी प्रमा य था" इति । तदप्यसाधु । ह्रस्वत्वादीनां वर्णधर्मत्वात् । अन्यथा स्वरवर्णानां अचां स्वतन्त्रया स्थितिरेव न स्यात् । अथवा अस्तु ह्रस्वत्वादीनां त्वद्रीत्या ध्वनिमात्रधर्मत्वम् । तथापि ध्वनिसाहित्येनापि वर्णानां प्रमित्युत्पादकत्वस्य अङ्गीकारार्हत्वात् । न हि अन्यधर्मधर्मिसाहित्यमात्रेण विशिष्टं मिथ्या भवति । अन्यथा तेजोधर्मेणौष्ण्येन युक्तं जलं मिथ्या स्यात् । तत्प्रतीतिः परीक्षिताऽपि भ्रमः स्यात् । "उष्णं जलं" इत्यस्य औपाचारिकत्वेनापि उपपत्तिवत् ह्रस्वोयं वर्णः इति प्रयोगस्यापि स्वसंन्निकृष्टध्वनिविषयकत्वेन वा वर्णानामेव ह्रस्वत्वादिधर्मव त्वाङ्गीकारेण वा उपपत्तेरावश्यकत्वात् । मीमांसकानां निरीश्वरवादवत् अयमपि वादः उपेक्ष्य एव । एवं गन्धप्रागभावाव च्छिन्नो घटः गन्धवान् पृथिवीत्वात् इत्यत्र व्याप्तेः पक्षधर्मतादीनां तात्विकत्वेऽपि व्याहतत्वेन बाधितत्वात् अबाधितविषयकत्वस्य तात्विकत्वस्य तत्राभावादेव अतात्विकगन्धानुमितिरिति ज्ञेयम् । ईदृशाहार्यानुमितेरनङ्गीकाराच्च नातात्विकानुमितिरिति ॥ ८६ ॥

**पूर्वपक्षः पक्षादीनां हि मिथ्यात्वबोधनेऽपि न नः क्षतिः।**
**साधकस्य च मिथ्यात्वे न क्षतिः सत्त्वसाधने ॥**
**प्रतिबिंबस्य बिंबैकसाधनत्वमिवेष्यते ।**
**तस्य बिंबात्मना सत्त्वे मिथ्यात्वं तु स्वरूपतः ॥**

**सिद्धान्तः-  इति त्वदुक्तं युक्तं न त्वत्पूर्वोक्तिविरोधतः**
**साधकं चेदवश्यं तु परमार्थास्तिता भवेत् ।**
**सिद्धिर्नाऽपरमार्थेन परमार्थस्य युज्यते॥ ८७॥**

प्रतिबिंबस्य मिथ्यात्वे तात्विकबिबंसाधकत्वं तस्य नैव युज्यते इति प्रतिपादयितुं परमतेपसिद्धान्तं वदन् तद्वाक्यमेवानूद्य निराह **त्वत्पूर्वोक्तिविरोधतः** इति। अपरमार्थेन अतात्विकेन प्रमाणेन परमार्थस्य तात्विकस्य सिद्धिः न युज्यत इत्यन्वयः।

**इति त्व (त) द्गुरुवाक्येन पक्षादेर्विरहे सति**
**पक्षासिद्ध्यादिदोषाप्तेः व्यावाहारिकमप्रमं॥ ८८ ॥**

**शुक्तिरूप्यं साधकं  स्यात् तत्सत्यं हि सदात्मना**
**शुक्तिरूप्यात्मना मिथ्या चेति स्यात् प्रतिबिंबवत्॥८९॥**

**मिथ्याभूतेन सम्यग्धीः भवेच्चेत् शुक्तिरूप्यतः**
**धनित्वधीः प्रमा च स्यात् यत्त्तमिथ्या न साधकं॥९० ॥**

इति त्व ( त ) द्गुरुवाक्यसद्भावात् त्वत्पूर्वोक्तिविरोधतः त्वदुक्तं न युक्तं इति योजना । तद्गुरुवाक्येन इति पाठे तु अद्वैतसिद्धिकृतोऽपि यः गुरुः तद्वाक्येन, त्वत्पूर्वोक्तिविरोधतः तव ( सारकृतः) पूर्वः अद्वैतसिद्धिकारः। तदुक्तेः विरोधात् विरोधप्राप्तेः। इति त्वदुक्तंसङ्ग्रहकारेण त्वयोद्यतं न युक्तं इत्यर्थः।

ननु अस्तु अपसिद्धान्तः असतः साधकत्वाद्यङ्गीकारे को दोषः ? इत्यत आह **पक्षादेर्विरहे सति** इति। पक्षादेः पक्षसाध्यहेतूनां विरहे सति असत्त्वेन अभावे सति, पक्षासिद्ध्यादिदोषाप्तेः पक्षाप्रसिद्धि साध्याप्रसिद्धि, हेत्वसिद्धि साध्यसाधनवै कल्यादीनां दो षाणां प्राप्ते ः। ततश्च त्वदु क्तं न यु क्तं इत्यर्थ ः।

ननु पक्षादीनां मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतता व्यावहारकालाबाध्यत्व-रूपसत्त्वविवक्षयैव न तु त्रिकालाबाध्यत्वरूपात्यन्तसत्त्वाभिप्रायेणेति न पक्षाद्य-सत्त्वेन आश्रयासिद्ध्यादिः नापि व्याघातादिर्वा इत्यत आह **व्यावहारिकम् इति**। व्यावहारिकं व्यवहारकालाबाध्यत्वरूपसत्त्वं, [1] अप्रमं न प्रमागोचरं। सत्त्वत्रैविध्य स्याद्याप्यसिद्ध्या व्यावहारिकसत्त्वविषयकप्रमाया अनुदितत्वेन अभावादिति-भावः॥ ८८॥

ननु अस्ति प्रतिबिंबानुमितिरिति तावदविवादम्। तस्य प्रतिबिंबात्मना असत्त्वेऽपि बिंबात्मना सत्त्वात्साधकत्वम्। तस्मान्नपरमार्थ सत एव साधकत्वं इति चेत् तत्र प्रतिबन्दिनमाक्षेपमाह **शुक्तिरूप्यमिति**। अयं भावः। प्रतिबिंबः यथा स्वाकारेण मिथ्या अपि बिंबाकारेण सत्यं इत्युच्यते तथा शुक्तिरूप्यमपि सदात्मना सत्यमेव स्यात्, शुक्तिरूप्यात्मना तु मिथ्या इति व्यवस्था किं न स्यात्? तथा च तस्यापि कार्यान्तरसाधकत्वं कार्यस्य च सत्यत्वं स्यात् इति।

**धनित्वधीरिति**। अयं धनवान् शुक्तिरूप्यात् इति प्रयोगेण मिथ्याभूतशुक्ति-रूप्यात् हेतोः इयमनुमितिः प्रमा उत्पद्येत। यत् यस्मादेवं न भवति, तत्- तस्मान्न मिथ्या साधकं भवतीत्यर्थः।

तस्मात् लिङ्गाभासस्य नानुमितिप्रयोजकत्वम् युज्यते। ततश्च अनुमेयस्य व्याप्त्यादिसमसत्ताकत्वमेव। एवं च अनुमेयस्य बाधः अक्षाप्रामाण्ये तत्सिद्धव्याप्त्यादिबाधेन भवति इत्युक्तं साधु। इदं चोपलक्षणम्। शब्देऽपि योग्यत्तादिसमसत्ताकार्थेन भवितव्यम्। योग्यतावाक्यार्थयोः समसत्ताकत्वनि-यमात्। अत्र यदुक्तं परेण "एतेन [2] योग्यतावाक्यार्थयोरपि समान सत्ताकत्वनि-यमोऽपि परास्तः" इति। तदयुक्तम्। कुत्रापि योग्यताभ्रमे सत्यपि शाब्दप्रमोत्पा-दस्य अदर्शनात्॥ ८९॥ ९०॥

---

[1] लघुटि नविद्यते विषयितया प्रमा यस्य तंत्।अप्रम।अथवा-प्रकृष्टामा ज्ञानं यस्मात् तत् प्रम-प्रमाण।न प्रम-प्रमाणविरुद्धम्।

[2] एतेन अनुमेयस्य लिङ्गव्याप्त्यादिसमसत्ताकत्वनियमस्य निरसनेन इत्यर्थः

**पूर्वपक्षः प्रामाण्यं रूपतो मिथ्या तदर्थो न मृषा भवेत्।**
**सर्वबाधावधित्वेन ब्रह्मैव विषयो यतः॥**

**सिद्धान्तः इत्यत्रोक्तं तु युक्तं न यतोऽलौकिककल्पनम्।**
**भ्रमकालेत्वविज्ञातविशेषग्राहि बाधकम्॥ ६१॥**

**दृष्टं त्वद्ब्रह्मविज्ञाने निष्प्रकारे कथं भवेत्।**
**अचिन्त्यं शब्दसामर्थ्यं अत्र यद्भवतेर्यति॥६२॥**

**विरुद्धमेविरोधेन तत्किं सर्वं न कल्प्यते।**
**विरुद्धलक्षणै र्युक्तमप्यखण्डं तु कल्पयेत्॥ ६३॥**

अयमत्र पूर्वपक्षिणामाशयः। स्वरूपतो हि वेदानां, लोकिकशब्दानां वा, तज्जन्यज्ञानानां, तत्प्रामाण्यस्य च मिथ्यात्वं अद्वैत्यङ्गीकृतम्। तथापि विषयस्य न मिथ्यात्वं। (1) प्रामाण्यमिथ्यात्वस्य विषयमिथ्यात्वाप्रयोजकत्वात्। न्यायमते भ्रमप्रमाबहिर्भूते निर्विकल्पके विषयबाधाभावात् निर्विकल्पकस्य ज्ञानस्य तद्वति तदभाववति वा तत्प्रकारकत्वं नास्ति। तस्य निप्रकारकत्वात् इति प्रमाभ्रमबहिर्भावः। तदभाववति तत्प्रकारकत्वरूपाप्रामाण्ये सति तु विषयबाधस्य नियतत्वात् तादृशाप्रामाण्यस्य विषयमिथ्यात्वतन्त्रत्वं भवति। सर्वबाधविशेष्यीभूतब्रह्म णः मिथ्यात्वासंभवात् अबाधितार्थविषयत्वरूपप्रामाण्यमिथ्यात्वे अर्थस्य ब्रह्मणः न अतात्विकत्वं विशिष्टस्य एकांशमिथ्यात्वे अपि अपरांशसत्यत्वात्, यथा दण्डबाधनिबन्धन दण्डिपुरुषबाधेऽपि पुरुषो न बाधितः एवेति। तत्र संबन्धबाधादुपपत्तिः। (2) शब्दतज्ज्ञानतात्विकत्वं च न विषयतात्विकत्वे तन्त्रं। इदं रजतं इत्यनाप्तवाक्यस्य तज्जन्यभ्रमस्य च त्वन्मते तात्विकत्वेऽपि तद्विषयस्यातात्विकत्वात् इति। तदेतन्निरस्यति **इत्यत्रोक्तं तु युक्तं नेति** यतः यस्मात्कारणात्। इदं सर्वं अलौकिककल्पनम्। तस्मात् अत्र श्लोकसंदर्भे इत्युक्तं न युक्तं इत्यन्वयार्थः। लोके तावत् भ्रमप्रमाबर्हिर्भूतनिश्चयस्य अदृष्टत्वात्, न्यायमते निर्विकल्पकज्ञा-

नस्य तद्वति तद्प्रकारकत्वरूपप्रमात्वानङ्गीकारेऽपि वस्तुस्वरूपावभासकत्वेन प्रत्यक्षप्रमाणप्रभेदत्वाङ्गीकारात् च प्रामाण्यमिथ्यात्वे विषयमिथ्यात्वनियते लोकारूढत्वात् प्रामाण्यस्य अतात्विकत्वं विषयातात्विकत्वे तन्त्रं इत्यवश्यं अभ्युपगन्तव्यं इति भावः।

तदेवालौकिककल्पनमुपपादयति **भ्रमकाले इति**। भ्रमकाले यत् न विज्ञातं आरोप्यवस्तुभेदादिकम्। विशेष्यादिषु तादृशविशेषग्राहि यत् ज्ञानं विशिष्टविषयकं तदेव ज्ञानं बाधकं दृष्टं नान्यदिति वाक्यार्थः। ततः किम् इत्यत आह **त्वद्ब्रह्मेति**। बाधकत्वं इति शेषः। तव मतरीत्या व्यावहारकाले विद्यमानान् सर्वान् भ्रमान्, तद्विषयान् प्रति च कथं ब्रह्मज्ञाने ब्रह्मज्ञानस्य बाधकत्वं भवेत्? कथमपि न भवेदेवेति भावः। तस्य निष्प्रकारकत्वात्। यथा लोके इदं रजतं इत्यादि भ्रमकाले यत् इदमंशे रजतभेदादि अविज्ञातं तद्गृह्णत् नेदं रजतं इति ज्ञानं हि बाधकं दृष्टम्। विशिष्टाकारभ्रमं प्रति विशिष्टकारयथार्थशानस्य विरोधिविषयकस्यैव बाधकत्वं युज्यते। अन्यथा इदं इति निप्रकारकप्रमायाः रजतज्ञानबाधकत्वं स्यात्। एवं ब्रह्मनिर्विकल्पकज्ञानस्य निष्प्रकारकत्वेन व्यवहारकालीन विशिष्टाकारभ्रमान् तद्विषयान् प्रति बाधकत्वं न भवेदिति तात्पर्यम्। तथा च सति हि बाधकत्वे तस्य अबाधितार्थविषयत्वरूपप्रामाण्यं, तस्य च सत्यत्वमिथ्यात्वेदि[illegible]रिक्यानि इति।

अथवा अस्तु कथंचित् निर्विकल्पकज्ञानस्य बाधकत्वं तथापि तत्प्रामाण्यमिथ्यात्वं नाभ्युपगन्तुं युक्तं इत्याह **त्वद्ब्रह्मविज्ञाने इति**। निष्प्रकारकब्रह्मज्ञाने स्थिते नान्यत् किमपि बाधकं भवितुं अर्हति। तस्यैव चरमज्ञानत्वात्। तत् प्रामाण्यस्य मिथ्यात्वाभ्युपगमे तु तद्बाधकस्य अन्यस्य अभावात् स्वस्य च मिथ्याभूतप्रामाण्यविषयकभ्रमकालीनाविज्ञातविशेषाग्राहित्वात् न बाधकता इति कथं प्रामाण्यं बाधितं भवेदित्यर्थः। तथा च ब्रह्मनिर्विकल्पकज्ञानस्य प्रपञ्चबाधकस्य मिथ्याभूतप्रामाण्यकत्वे तस्यापि भ्रमत्व अवश्यं वाच्यम्। भ्रमस्य च बाधकेन केनचिद्भवितव्यम्। स्वस्य स्वाविज्ञातविशेषग्राहकत्वासंभवात् स्वबाधकत्वं न संभवतीति प्रामाण्यसत्यत्वमुक्त्वा एव उपपत्तिः कार्या। इत्थं सिद्धं योग्यता-शब्दसमस्तताकत्वं ज्ञाने अवश्यमिति।

यच्च 'शब्दतज्ज्ञानतात्त्विकत्वं न विषयतात्त्विकत्वे तन्त्रं' इत्युक्तं तद् अस्मन्मते विषयतात्त्विकत्व, शब्द तज्ज्ञानतात्त्विकत्वयोः समव्यापकत्वं अभिमतं चेत् युक्तं स्यात् । न चैवम् । किन्तु विषयतात्त्विकत्वस्य शब्दतज्ज्ञानतात्त्विकत्वव्याप्यत्वमात्रं उच्यते तथा च रूप्यादिज्ञानेषु प्रामाण्यमिथ्यात्वे विषयमिथ्यात्वदर्शनादिति मूलेक्तिस्तु विषयतात्त्विकत्व ज्ञानप्रामाण्यतात्त्विकत्वयोरेव समव्यापकत्वं अभिप्रैति न तु ज्ञानतात्त्विकत्व, विषयतात्त्विकत्वयोरपि । अतः नोक्तव्यभिचारप्रसङ्गः।

ननु नायं नियमः भ्रमकालीनापरोक्षबुद्ध्यविषयविशेषविषयैव धीर्बाधिका भवति इति ।अधिष्ठान तत्त्वज्ञानत्वेनैव भ्रमनिवर्तकत्वात् विश्वनिवर्तकब्रह्मज्ञानस्य बाधकत्वं , तथाच विशेषाग्राहिणोऽपि ब्रह्मज्ञानस्य अधिष्ठानबुद्धित्वेन इयं शुक्तिः इत्याकारकज्ञानवत् स्वस्वप्रामाण्यबाधकत्वं युज्यत एवेत्यत आह **अलौकिक कल्पनं इति** । लोके हि भ्रमकालेऽविज्ञातविशेषग्राहिण एव शुक्त्याद्यधिष्ठानयथार्थज्ञानस्य बाधकत्वं दृष्टं नत्वन्यादृशस्येति इदं कल्पनं अलौकिकं इति भावः।

किञ्च यदुक्तं "विषयत्वरूपसंबन्धबाधात् तथा । तथा चाबाधितार्थविषयत्वरूपप्रामाण्यमिथ्यात्वेऽपि नार्थो मिथ्या "इत्यादि तदपि न । तथा हि अबाधितार्थविषयत्वं बाधकाभिमतब्रह्मज्ञाने अस्तीत्युपगम्यते ? न वा ? नाद्यः । अबाधितत्वप्रसङ्गेन तस्य मिथ्यात्वस्य दुरुपपादत्वात् नोत्तरः । निष्प्रकारके ब्रह्मज्ञाने अवधित्वाभिमतब्रह्मविषयकत्वस्याप्यनङ्गीकारे निर्विषयस्य बाधकत्वायोगात् ।न हि कमपि विशेषमगृण्हत् किञ्चित् ज्ञानं लोके इतरबाधकं दृष्टं इत्याह **अविज्ञातविशेषग्राहि इति** । तथा च विषयत्वरूपसंबन्धस्यापि बाधकाभावात् न अवाधितार्थविषयकत्वरूपप्रामाण्यस्य मिथ्यात्वं इति विषयतात्त्विकत्वं न प्रामाण्यतात्त्विकत्वं व्यभिचरति।

अपि च किमिदं ब्रह्मज्ञानं सत् ? उत असत् ? आहोस्विन्मिथ्या ? यत्प्रामाण्यं अबाधितार्थविषयत्वरूपं स्वेनैव बाध्यं इत्युच्यते । नाद्यः । तस्य ब्रह्माति-

रेकेऽद्वैतहानेः। ब्रह्मात्मकत्वे तु ब्रह्मणि निर्विशेषे तत्र प्रामाण्यरूपविशेषस्य असंभवात्, गृहीतप्रामाण्यरूपविशेषस्य प्रमाणभूतस्यान्यस्याभावाच्च तस्य बाधकत्वायोगात् । लोके तावत् साक्षिणा प्रमाणेन गृहीतप्रामाण्यरूपविशेषस्य ज्ञानस्यैव बाधकत्वं दृष्टं नान्यस्य इत्याह **भ्रमकाले इत्यादिना** । भ्रान्तिदशायां अविज्ञातो यो विशेषः नेदं रजतं इति ज्ञानं प्रमाणमिति प्रामाण्यरूपो विशेषः तस्य यद्ग्राहि साक्ष्यात्मकं ज्ञानं यस्य तत् नेदं रजतं इति ज्ञानं, तदेव बाधकं दृष्टं इत्यर्थः । निष्प्रकारे प्रामाण्यादिरूपविशेषाभाववति त्वद्ब्रह्मविज्ञाने (त्वन्मते) त्वदभिमतब्रह्मविज्ञाने लोकसिद्धबाधकता कथं भवेत् ? । नेत्यर्थः । बाधकस्यैवाभावेन प्रामाण्यं न बाध्यते इति पर्यवस्यति । न द्वितीयः । विज्ञानत्वायोगादित्याह **त्वद्ब्रह्मविज्ञाने इति** । नान्त्यः । मिथ्याभूतस्य बाधकत्वादर्शनात् । प्रामाण्यविषयकस्य भ्रमान्तरस्य तत्कालेऽभावात् । भ्रमस्य भ्रमबाधकत्वासंभवात् इत्यप्याह **भ्रमकाले अविज्ञातविशेषग्राहि इति** । न हि मिथ्याभूतं किञ्चित् गृह्णाति इति भावः ।

ननु अध्यस्तग्राहिप्रत्यक्षं अधिष्ठानप्रमावहं बाधते श्रुतिरद्वैतब्रह्मतत्त्वावबोधिका इति प्रत्यक्षाद्यनुभूयमानमपि जगत् अचिन्त्यशक्त्या श्रुत्या अपलप्यते । सर्वप्रमाणाविषयं आत्मानं श्रुतिः अचिन्त्यशक्तिमत्वात् एव बोधयति इति अचिन्त्यशक्तिमत्वादेव शब्दानां तज्जन्यज्ञानस्य ईदृशविलक्षणकार्यक्षमत्वमिति ब्रह्मज्ञानं बाधकं भवेदेवेत्यत आह **अचिन्त्यमित्यादि इति** । तदपि न युक्तं इति शेषः। सर्वं विरुद्धं अविरोधेन तत् शब्दसामर्थ्यं किमिति न कल्पयेत् ? (एकत्रेति शेषः) इत्यापत्तेरित्यर्थः । अयं भावः । यदि "प्रत्यक्षादिप्रमाणस्य व्यावहारिकमात्वतः तात्विकं न प्रमाणत्वं अतो नास्ति विरोधधीः अद्वैतपरवेदान्तानुमानाद्यविरोधिता" इति शब्दातिरिक्तानां प्रमाणानां व्यावहारिकप्रामाण्यं , अचिन्त्यशक्तिमत्वेन स्वतः प्रामाण्यं शब्दानां चाभ्युपगम्य शब्देन प्रत्यक्षाधिविरोधोक्तौ तदा एवमेव सर्वत्र अविरोधकल्पनेन एकस्मिन् धर्मिणि परस्परं विरुद्धा अपि धर्माः समाविशेयुः । सर्वत्रापि (एवं) उक्तरीत्या विरोध परिहारस्य संभवात् इति । श्रुतीनां त्वन्मते लौकिकशब्दावैजात्यस्य पूर्वं उपपादितत्वात् । तथा च सर्वविरोधव्यवारलोपप्रसङ्गः स्यात् । इत्थं च अचिन्त्यं शब्दसामर्थ्यं बुद्ध्या ब्रह्मत्मबोधके । वेदान्तवाक्ये सन्देहो न कार्यो दोषवर्जिते इति परोक्तं न युक्तं इति सिद्धम् । यद्वा अविरोधेन मन्मताविरोधेन तत् शब्दस्य अचिन्त्यसामर्थ्यं सर्वं विरुद्धं -

त्वन्मतविरुद्धमपि जगत् सत्यत्वादिकं किं न कल्पयेत् ? इति आक्षेपः। सैव त्वयोक्ता अचिन्त्य शब्दशक्तिः मम आनुकूल्यं अपि कुर्यादिवेति भावः। एवमेवेति नियतेरभावात्।

ननु ब्रह्मण एकस्यैव सत्यत्वेन अबाधितत्वात् तादृशाबाधितार्थज्ञानजनकशब्दानामेवोक्ताचिन्त्यशक्तिः प्रामाण्यं चोपगम्यते न तु लौकिकानां शब्दानां प्रत्यक्षाणां वा। अबाधितार्थाविषयकत्वात्। उक्तं च खण्डने

अत्यन्तासत्यपि ज्ञानं अर्थे शब्दःकरोति हि।

अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम् ॥१-११॥

तथा च जगदभावोपलक्षितब्रह्मप्रमाजनकश्रुतेः प्रत्यक्षद्यापेक्षया प्राबल्यं, सर्वप्रमाणाविषयस्यापि ब्रह्मणः श्रुत्या बोधनं च तदचिन्त्यसामर्थ्येनैव उपपद्यते इति चेत्तत्राह **विरुद्धलक्षणैरिति**। तुशब्द एवकारार्थः। अखण्डमपि विरुद्धलक्षणैर्युक्तं कल्पयेदेव इत्यन्वयार्थः। शब्दसामर्थ्य इति पदं पूर्वस्मादनुषज्यते। अयमाशयः। तत्त्वं पदयोरभेदस्य प्रत्यक्षविरुद्धत्वेऽपि अचिन्त्यशब्दसामर्थ्येनैव विरोधपरिहारे संभवति , तदर्थ मुख्यार्थपरित्यागः लाक्षिणिकार्थसंग्रहश्च भवत्पूर्वाचार्यसंमतः व्यर्थ आपद्येत। एवं च न श्रुतेः अचिन्त्यशक्त्या प्रात्यक्षिक जगद्बाधकता, सर्वथाऽविषयस्य बोधकता चेति प्राबल्यानुपपत्तिरेवेति। अथवा अखण्डं विरुद्धलक्षणै र्युक्तं इत्यपि शब्दसामर्थ्यम् किं न कल्पयेत् ? कल्पयेदेवेति योजना। तथा च व्यघातकथैवोच्छिद्येत। तस्मात् न प्रामाण्यमिथ्यात्वं विषयमिथ्यात्वं व्यभिचरति, नापि विषयसत्यत्वं प्रामाण्यसत्य त्वं व्यभिचरति इति शब्दयोग्यता, शाब्दज्ञान तत्प्रमाण्यानां समसत्ताकत्वनियमः सुस्थः। तथा च "अक्षाप्रामाण्ये हि तत्सिद्धस्य व्याप्त्यादेः योग्यातादेश्च बाधेन अनुमेयस्य शब्दार्थस्य च बाधः स्यात्" इत्युक्तं (मूले) समर्थितं भवति। अक्षप्रामाण्यमुपजीव्यैव शब्दलिङ्गतज्जन्यशाब्दबोधानुमितीनांप्रामाण्यं संभवति। अतः स्वोपजीव्यं प्रत्यक्षं बाधितुं अनुमानागमौ नालमिति सिद्धान्तः।

॥ इति उपजीव्यत्वेन प्रत्यक्षप्राबल्यम् ॥

॥ अथ प्रत्यक्षस्य अनुमानागमबाध्यत्वे बाधकविवरणम् ॥

**पूर्वपक्षः** **न प्रत्यक्षाविरोधाय तत्त्वमोर्लक्षणाश्रिता ॥**

**किन्तु तात्पर्यविषयीभूताखण्डप्रतीतये ॥**

**सिद्धान्तः** **इति त्वदुक्तं युक्तं न लक्षणाग्रहकारणं**

**प्रत्यक्षं वानुमानं वा दौर्बल्याच्छ्रुतितो न हि ॥**

ननु यदुक्तं प्रत्यक्षबाधपरिहाराय तत्त्वमसिवाक्ये तत्त्वंपदयोः लक्षणा आश्रिता । सा श्रुतेःप्राबल्याद् प्रत्यक्षबाधकत्वसंभवेन तदविरोधे संपत्स्यति नाश्रयणीया स्यात् । न हि मुख्यार्थबाधात् ऋतेऽन्यत् लक्षणाबीजमस्तीति । तन्नोचितं । श्रुतेः मुख्यार्थपरित्यागेन लक्षणाश्रयणे न प्रत्यक्ष विरोधभीः नियामिका । यया श्रुतिः प्रत्यक्षाद्दुर्बला भवेत् । किन्तु उपक्रमादिलिङ्गात् श्रुतेः-अद्वैततात्पर्ये निर्णीते तदनुपपत्तिनिवृत्त्यर्थं हि मुख्यार्थं परित्यज्य लक्षणाया आश्रितत्वात् । सर्वज्ञस्य अल्पज्ञेन अभेदान्वयानुपपत्तेर्वालक्षणा आश्रिता इति चेत्तत्राह इति **त्वदुक्तमिति** । यतः ततः इति अध्याहृत्य योज्यम् । यतः [1] लक्षणाग्रहकारणं अत्र ईदृशलक्षणायाः यत् ज्ञानं तत् साधनं, प्रत्यक्षं वाऽनुमानं वा न हि ( भवति ) तयोः, श्रुतितः दौर्बल्यात् इति ॥

अयमभिप्रायः । "स आत्मा तत्त्वमसि" इति श्रुतौ तत्त्वंपदयो र्लक्षणा कर्तव्या इति तु अद्वैत प्रक्रिया ( राद्धान्तः ) । नैय्यायिकरीत्या अर्थे ईश्वरीय पदसंकेतरूपाया, "अनादिरर्थैःशब्दानां संवन्धो योग्यता तथा" इति वाच्यवाचकभावसंबन्धरूपाया वा अत एव मुख्यायाः शक्तेर्विषयं मुख्यार्थं परित्यज्य तत्संबन्धिनममुख्यं अर्थं ग्राहयन्त्याः लक्षणाया स्वीकृतिः तावत् वाक्यस्य प्रामण्यनिश्चयं किञ्चिदन्यद्बीजं च अपेक्षते एव । अपौरुषेयत्वादेव श्रुतेः प्रामण्यं परं सिद्धम् ॥

---

[1] लघुटि लक्षणाग्रहकारणमिति । लक्षणाया ग्रहः - लक्षणाग्रहः तस्य कारणं इति विग्रहः । लक्षणाया इत्यत्र सबन्धमात्रे षष्टी लक्षणासंबन्धी यो ग्रहः , लक्षणाकारकानुपपत्त्यादिविषयकः तत्कारण किं ? इति प्रश्नः अत्र विविक्षितः ।

मुख्यार्थानुपपत्तिरेव हि लक्षणा प्रवृत्तौ[1] बीजं (स्वीकृतौ) अन्वयतात्पर्यानुपपत्त्यादीनां अत्रैव अन्तर्भावात्। न हि कश्चित् शाब्दस्वभावात् व्युत्पत्तिवशात् प्रथममेव(बुद्धा वारोहितं) बुद्धावारूढं मुख्यार्थं तत्रानुपपत्तिमपश्यन् परित्यज्य तत्संबद्धं ग्रहीतुमुत्सहते॥ अन्विताभिधानपक्षे[2] वा अभिहितान्वयपक्षे[3] वा पदेन पदार्थज्ञानेन वा अन्वयज्ञानस्य निष्पन्नत्वेन, तात्पर्यस्य वाचकत्वानतिरेकेण च तयोरनुपपत्त्योः मुख्यार्थानुपपत्तिपर्यवसायित्वात्। तद्रूपत्वाद्वा। सा च सम्यग् विज्ञातैव लक्षणावृत्त्यां हेतुः भवति। अन्यथा प्रवाहे घोषसंबन्धाभावमजानतोऽपि लक्षणया तीरबोधापातात्।न हि प्रमाणान्तरविरोधं अपश्यतः सा दृश्यते। प्रमाणेन च प्रबलेनैव भवितव्यम्। अन्यथा शंखः पाण्डुरः इति आप्तप्रयोगे शंखः पीतः द्रव्यत्वादिति अनुमानविरोधेन शंखपदस्य अन्यत्र लक्षणा स्यात्। तथा च प्रकृते विरुन्धतः प्रमाणान्तरस्य प्रत्यक्षस्य अनुमानस्य वा श्रुत्यपेक्षया दौर्बल्यात् न त योः लक्षणाप्रवृत्ति प्रयोजकानुपपतिविषयकज्ञानजनकत्वं इति तथा च लक्षणा न युक्ता इति पर्यवसितम्। ननु

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया। इति रूढेः प्रयोजनस्य

---

[1] इदतुज्ञस्यपेक्षयोक्तम्।वस्तुतस्तुसबन्धएवलक्षणाबीजतथाचवक्ष्यते।सबन्धःतत्स्वरूपेहेतुःअन्वयानुपपत्तिस्तु तन्ज्ञप्तौ इति विवेकः इति तर्कताण्डवे। ज्ञाप्तोवपि अन्वयानुपत्तिरेव लक्षणाबीज।प्रकरणादिभिः काकेभ्यो दधिरक्ष्यतायष्टीःप्रवेशय छत्रिणोयान्ति इत्यादौयावद्दध्युपघातकावधिकरक्षणरूपस्यरक्षधात्वर्थस्य,भोजनप्रयोजनप्रवेशनस्य विश्धात्वर्थस्य, छत्र्यच्छत्रिगमनार्थस्य च अवगतत्वेन तदन्वयस्य प्रमाणन्तरविरोधादनुपपन्नत्वेन तस्याएवलक्षणाहेतुत्वानुगमस्योचितत्वात्।तात्पर्यस्यापिप्रकारणादिभिरेवज्ञातव्यत्वाच्च।

[2] विभक्त्यन्तस्यैकपदस्य योऽर्थः तदन्वितान्यपदार्थः पदेन अनुभाव्यते। न केवलं विभक्त्यन्तपदार्थः। तदुक्तं प्रमाणपद्धतौ "प्रत्येकसामान्यतो योग्येतरान्वित स्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थानभिदधति" इति। अन्वित अन्वयरूप पदार्थसबन्धविशिष्टं इत्यर्थः। अन्वयविशिष्टस्वार्थबोधकत्वे पदस्य, तस्य अन्वयबोधकत्वमपि सिद्धमिति अन्वयस्य पदमुख्यार्थत्वमिति भावः।

[3] विभक्त्यन्तपदाभ्यां स्वार्थानुभवयोः जातयोः स्वार्थौ अभिहितौ भवतः तयोः सबन्धरूपान्वयोऽपि ताभ्यां एव अनुभवाभ्यां अनुभाव्यते इति। पदं तु पदार्थज्ञानं उपस्थितिद्वारा उत्पाद्य निवर्तते। इति। तत्र - आद्यं तत्ववादिनां मतं। द्वितीयं तु भाट्टाना अद्वैतिना च।

च लक्षणाबीजत्वोक्तौ कथं मुख्यार्थानुपपत्तिरेवेति ? इति चेन्न -रूढिप्रयोजनयोः बाधासाङ्कर्येण [1] उदाहरणानुपलंभात् । रूढितः मञ्चाः क्रोशन्ति इत्यत्र मञ्चपदेन मञ्चस्था लक्ष्यन्ते, इत्युच्यते । तत्र मञ्चानां क्रोशनक्रियाऽयोगादेव लक्षणा । अन्यथा मञ्चशब्दस्यैव मञ्चस्थेषु शक्तिमभ्युपगम्योक्तौ लक्षणावैय्यर्थ्यात् । एवं गङ्गायां घोषः इत्यत्रापि पावित्र्यदिज्ञापनरूपप्रयोजने सत्यपि बाधादेव लक्षणा न तु प्रयोजनसद्भावमात्रेण अन्यथा मूर्तिः स्थापिता इत्यत्र दैवसन्निधानज्ञापनरूपप्रयोजनसद्भावाद् लक्षणा स्यात् ।

केचित्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजम् । अन्यथा गङ्गायां घोषः इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिः तावतान्वयानुपत्तिपरिहारात् । गङ्गायां पापी गच्छति इत्यादौ नरके लक्षणापत्तिश्च इति आहुः । तच्चिन्त्यम् । शक्यसंबन्धरहिते मकरे लक्षणायोगात् । अन्यथा प्रवाहात् दशक्रोशस्थघोषतात्पर्येण गङ्गायामिति प्रयोगापत्तेः । गङ्गायां पापी गच्छति इत्यत्रापि वर्तमानपापस्य प्रवाहयोगे बाधकाभावात् लक्षणाया अप्रयोजनत्वात् । गङ्गाप्रवाहस्य नरकसंबन्धवैधुर्याच्च । न हि निमित्तं विनाऽपि कार्यं कर्तुं युक्तम् । अत एव निमित्तान्याहुः ।

तात्स्थ्यात् तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च
तत्साहचर्यात्तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः ॥ इति ॥

यामिच्छां इदं पदं एतदर्थबोधकं भूयात् इत्येवं रूपां नैय्यायिकाः शक्तिं वदन्ति, तामेव वैय्याकरणाः तात्पर्यं मन्वते । अद्वैतिनस्तु तात्पर्यं शक्त्यतिरिक्तं मन्वाना अपि तत् इत्छारूपं नाप्युपयन्ति । तदुक्तं तत्र तत्प्रतितीच्छयोच्चरितत्वं न तात्पर्यं । अर्थज्ञानशून्येन पुरुषेण उच्चारिताद्वेदात् अर्थाभानप्रसङ्गात्" इति वेदान्त परिभाषायां।किन्तुतत्प्रतीतिजननयोग्यत्वंतात्पर्यं इति अद्वैतिनां लक्षणं । तत्तु पदानां अर्थेषु मुख्या वृत्तिः इति शक्तिलक्षणं नातिरिच्य ते । एतेन तात्पर्यं नाम

---

1 प्रयोजनस्य स्वतन्त्रतया लक्षणाहेतुत्वाभावात् न तस्य ग्रहण इति ज्ञेयम् । अत एव "पूर्वयोगे परग्रहः" - इत्युक्तम्।ततश्चअयोगपदोपलक्षणतयाप्रयोजनंगृहीतम्।उक्तचसुधाया"अत्रायोगग्रहणंप्रयोजनस्यापिउपलक्षणम्।यथाअयोगसार्वत्रिकःनतथाप्रयोजन"इति।

वक्तुरिच्छा, तदनुपपत्तिःइच्छविरोधः। तथा च वक्तुरसंमतिः, सैव लक्षणाबीजं इति श्रुतिवक्तुः ईश्वरस्यासंमतिं निमित्तीकृत्य तत्त्वमोर्वक्षणा आश्रिता तस्मात् प्रमाणान्तरविरोधाद्यप्रसङ्गः इति प्रत्यवस्थितिः अनवकाशा संपन्ना। अद्वैतिभिः तथानङ्गीकारात्।

न च तथाङ्गीकर्तुमुचितम्। तथासति तस्यैवार्थस्य मुख्यत्वेन शक्यत्वाल्लक्षणा नाश्रयणीया स्यात्। नचेष्टापत्तिः ।सर्वत्र लक्षणोच्छेदप्रसङ्गात्। अंपसिद्धान्तात्। वाच्यवाचकभावे नियमाभावेन सर्वव्यवहारोच्छेदापत्तेश्च। "सर्वे सर्वार्थवाचका" इति मतेऽपि प्रसिद्धात्वाप्रसिद्धात्वभेदेन नियमस्याभ्युपेतत्वात् अप्रसिद्धाशक्तिः इति नामान्तरकरणेऽपि लक्षणाया तद्रूपाया आवश्यकत्वात्।

यद्वा त्वदुक्तं लक्षणाग्रहकारणंयतः तात्पर्यग्राहकताया त्वदुपन्यस्तषड्विधं लिङ्गरूपं अनुमानं वा अन्वयानुपपत्तिग्राहकं प्रत्यक्षं वा न हि लक्षणाग्रह (ण)-कारणम्। तयोः श्रुतितः दौबल्यात्।

अयं भावः। त्वया खलु तात्पर्यानुपपत्तेः अन्वयानुपपत्तेश्चाभ्युपेतं लक्षणाबीजत्वम्। न हि तात्पर्यं वा, अन्वयः वा स्वतःसिद्ध्यति, यदनुपपत्ती लक्षणां ग्राहयतः इति त्वयेव षड्विधतात्पर्यलिङ्गं प्रमाणतयोदाहृतम्। अन्यथा तदप्रसक्तेः। तच्च श्रुत्यपेक्षया स्वतो दुर्बलम्। तथा च लक्षणाग्राहकानुपपत्तिप्रतियोगिभूतउपपत्तिविषयतात्पर्यजनकस्य लिङ्गस्य,तथाभूतान्वयजनक प्रत्याक्षादेर्वा लक्षणाग्रहणकारणत्वं पर्यवसन्नम् तच्च भवतः घातकं अनिष्टं अयुक्तंच यतः श्रुतिः त्वद्रीत्या स्वतःप्रबला सिंहात शशकः इव (श्रुतेः) स्वस्या बिभ्यतः प्रत्यक्षादेः स्वयं बिभेतीति त्वया स्वीकृतं स्यादिति। ततः त्वदुक्तं सर्वं अयुक्तम् इति ॥६४॥

**सिद्धान्तः नास्ति श्रुतिः तथाऽखण्डे तात्पर्यानुपपन्नता।**
**अन्यथानुपपत्तिर्वा श्रुतितोऽपि बलीयसी।। ६५ ॥**

**अचिन्त्यं शब्दसामर्थ्यं अत्रयद्भवतेरितं (ईर्यते)**
**विस्मृतं स्याच्छ्रुतेर्वाक्यं विरुद्धाखिलमारकम् ॥ ६६ ॥**

ननु भवतु प्रत्यक्षं वा अनुमानं वा न लक्षणाग्रहकारणम्। श्रुतिस्तु भवति। "एकं एवाद्वितीयं" "नेहनानास्ति किञ्चन" इत्यादि बह्व्यः श्रुतयः अद्वैतमुख्यार्थप्रतिपादकाः सन्ति । तादृशश्रुतिविरोधपरिहाराय तच्छ्रुतिमुख्यार्थाखण्डप्रतिपत्तये च तत्त्वंपदयोः स्वस्वमुख्यार्थं परित्यज्य लक्षणया अखण्डपरत्वं संस्थाप्यते इत्यत आह **नास्तिश्रुतिः इति** । श्रुतिःतथा नास्ति इत्यन्वयः। तथा त्वदुक्तरीत्या अद्वैतप्रतिपादिका श्रुतिःनास्ति। उक्तश्रुतीनां तु अन्यथाव्याख्यानात् इति भावः।न च उपक्रमादिभिर्लिङ्गैः उदाहृतश्रुतीनां अस्मदभिमताद्वैततात्पर्यकत्वं निर्णीयते, ततश्च श्रुतितात्पर्यनिर्वाहाय लक्षणा आश्रिता इति वाच्यम् । तथासति अन्ततः लक्षणां प्रति अनुमानाद्यपेक्षाया नियतेः श्रुतौ तदधीनत्वादेस्त्वदनिष्टत्वात् प्रगुक्तदोषभाजनत्वाच्च ।एतदाह **तथा नास्ति इति**।त्वद्रीत्या श्रुतिःतथा अनुमानाद्यधीना नेत्यर्थः।

ननु चोक्तं श्रुतिः अद्वैतमुख्यार्था एव शक्यार्थबोधने परं शब्दः नान्यत्प्रमाणमपक्षते।सा च श्रुतिः स्वतात्पर्या ( मुख्यार्या ) नुपपत्तौ श्रुत्यन्तरस्य लक्षणां ग्राहयति। तथा च कृतायां लक्षणायां अपि न प्रमाणान्तरस्य प्राबल्यसभंवः इति चेत्तत्राह **नास्ति श्रुतिस्तथेति** । अन्या काचनापि श्रुतिः अस्या श्रुतेः लाक्षणिकार्थग्राहिका नास्ति। तयोः समबल वत्त्वात् इति भावः।

अयमाशयः । अद्वैतिरीत्या हि नेहनानेत्यादिश्रुतिः द्वितीयाभावपरा मुख्यवृत्त्या । तत्वमस्यादिश्रुतौ तु मुख्यार्थग्रहणे नेहनानेत्यदिश्रुत्यर्थः अनुपपन्नो भवति। तस्मात् पूर्वश्रुत्यर्थोपपत्त्यर्थे उत्तरश्रुतौ मुख्यार्थपरित्याग आश्रितः इति हि ( पूर्वपक्षिणां ) आशयः। स नोपपद्यते। उभयोः श्रुत्योः समबलत्वेन उत्तरश्रुतेरेव लक्षणायां विनिगमकस्य अभावात् । पूर्वस्या एव कुतो न लक्षणा इति प्रश्नस्य निरुत्तत्वापत्तेः। प्रमाणान्तरसहकृतत्वेन पूर्वप्राबल्योपगमे अन्वयव्यतिरेकाभ्यां प्रमाणान्तरस्यैव लक्षणाग्रहणकारणत्वं सिद्ध्यति। न तु पूर्वश्रुतेः। अतस्त्वदुक्तं अयुक्तमिति।

किञ्च तात्पर्यानुपपत्तिं अन्वयानुपपत्ति लक्षणाबीजं मत्वा तत्त्वंपदयोर्लक्षणा कृता साऽयुक्ता। शक्यार्थसबंन्धमेव[1] निमित्तिकृत्य वृत्तेः लक्षणात्वात् शब्दप्रयोगात्। प्राक् वा तत्काले वा अनुपपत्तेरदर्शनात्।[2] तथा च श्रुत्या लक्ष्यार्थबोधने अनुपपत्त्यादिकं नापेक्ष्यते। किन्तु लक्ष्यार्थस्य शक्यसंबन्धमात्रम्। तथा च अनुपत्त्यादिकमनपेक्ष्यापि श्रुतिः लक्ष्यार्थपरा भवितुमर्हति इति अनुपपत्तिप्रदर्शनं श्रुतेः लक्षणायां अयुक्तं इत्यप्याह **नास्ति तथा श्रुतिः इति**। श्रुतिः तथा अनुपपत्त्यादिनिमित्तकलक्षणया[illegible]र्थबोधिका नास्तीत्यर्थः।

ननु श्रुतिः (तत्त्वमस्यादिः) संबन्धमात्रं अपेक्ष्य लक्ष्यार्थं बोधयति इति यदि स्यात् कृतं अनुपपत्तिप्रदर्शनायासेन। अस्तु शक्यसंबन्ध एवात्रापि निमित्तं इष्टत्वादिति चेत्तत्राप्याह **नास्ति श्रुतिः तथा इति**। श्रुतिः तथा संबन्धं पश्यन्ती नेत्यर्थः। अयं भावः। अल्पज्ञत्वविशिष्टचित् हि त्वंपदवाच्या सर्वज्ञत्वविशिष्टचित् तत्पदवाच्या। विशिष्टस्य अतिरिक्तत्वाभावमते शक्यार्थभूतविशिष्टचिदभिन्नाय विशेष्यीभूत लक्ष्यार्थाभिमतशुद्धचितः विशिष्टेन सबंन्धाभावात् न लक्षणा। अतिरिक्तत्वाङ्गीकारेऽपि अद्वैतरीत्या विशिष्टस्य मिथ्यात्वेन सत्यभूत शुद्धसंबन्धायोगात्। न हि श्रुतिः मिथ्याभूतं मिथ्याभूतविशिष्टचित्संबन्धं निमित्तीकृत्य स्वस्या अतत्वावेदकत्वादबिभ्यती लक्ष्यार्थं शद्धचितं प्रतिपादयितुमीहते। अन्यथा संबन्धविशिष्टत्वेन लक्ष्यार्थो मिथ्या स्यात्।

तस्मात् उक्तानुपपत्त्यादिसंपादकस्य स्वापेक्षया प्रबलस्य प्रमाणान्तरस्य अभावात्, तात्पर्याद्यनुपपत्तिः नास्तीति आह **तात्पर्यानुपपन्नता इति**। श्रुतेरिति शेषः। तात्पर्यं अनुपपन्नं यस्यास्तस्याभावः। तात्पर्यानुपपन्नता। तथा च श्रुतितात्पर्यं

[1] तदुक्तं सुधायां "तत्संबन्धं निमित्तीकृत्य वृत्तिस्तु लक्षणा" इतितर्कताण्डवे च प्रतिपादकत्वरूपाया वृतौ अनुव्याख्यानोक्तः अनुगतःसंबन्धएवहेतुः ( वृत्तित्रयवादे-१६६VOL-3 )।

[2] उक्तमेतत् सुधायां" न मुख्यार्थानुपपत्तिरमुख्यवृत्तेः कारणं प्रयोगोत्तरकालीनत्वादनुपपत्तिदर्शनस्य" "अत एव हि न शब्देनापेक्ष्यते" तथैव च तर्कताण्डवे "न तु मुख्यार्था तुपपन्तिः बोधनार्थं शब्देन, प्रयोगार्थं वक्त्रा वाऽपेक्ष्यते। अनुपपत्तिदर्शनस्य बोधकशब्दप्रयोगोत्तरकालीनत्वात् तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेन तौ बोधनेऽपेक्षितत्वाच्च" इति।

केनाप्यन्येन प्रमाणेन अपनुत्तुमनर्हं इत्युक्तं भवति । अत एव तात्पर्यानुपपत्ति र्नास्ति इत्यनुक्त्वा तात्पर्यानुपपन्नता नास्तीत्युक्तं उपलक्षणं चैतत् अन्वयानुपपन्नताऽपि नास्ति इत्यर्थः ।

ननु विवक्षा तात्पर्यमित्यस्मदभिमतं तस्यां अनुपपन्नायां विवक्षितार्थसिद्ध्यर्थं लक्षणा आस्थेया। अखण्डं विवक्षन्त्या श्रुतेः लक्षणां विना स्वाभिप्रेतासिद्धेः इत्यतो वाह **तात्पर्यानुपपन्नता नास्ति इति** । लक्षणां विनाऽपि इति शेषः।

अयं अभिप्रायः। सोयं देवदत्तः इत्यत्र अतीत(कालिक)कालीनस्य तत्पदार्थस्य वर्तमानेन देवदत्तेन अभेदः वक्तृविवक्षितः लक्षणां विनाऽपि उपपन्नः तथेहापि लक्षणां विनाप्युपपत्तिः भवति तथाहि स सोऽयं देवदत्तः इत्यत्र हि अतीतदेशकालमुण्डत्वादिधर्मविशिष्टः देवदत्तः परामर्ष्टव्यः तादृशानां अतीतत्वं तत्प्रध्वंस एव । तथा पूर्वकालतद्देशधर्मध्वंसविशिष्टस्य वर्तमानदेशकालशिखित्वादिधर्मवैशिष्ट्योक्तावपि बाधकाभावात् मुख्यार्थपरित्यागस्य अनवसर एव। एवं वर्तमानकालदेशधर्मविशिष्टस्य पूर्वकालदेशधर्मध्वसंविशिष्टतोपगमसंभवाच्च । विशिष्टयोरैक्येऽपि न दोषः धूमवानाग्नेमान। इत्यत्र विशेषणैक्याभावेऽपि विशिष्टयोरैक्यसंभवात् न च विशेषणयोः सामानाधिकरण्यात् तथासंभवेऽपि नेह तथा इति वाच्यम्। अत्रापि पूर्वकालदेशधर्मध्वंसस्य वर्तमानकालीनत्वस्य च साहचर्यस्य अबाधितत्वात् । अन्यथा त्वन्मते वर्णनित्यत्वार्थं सोऽयं गकारः इति प्रत्यभिज्ञायाः प्रमाण्यस्य आव श्यकत्वात् विशिष्टैक्यविषयकत्वेन भ्रान्तित्वापत्तेः। न च तत्रापि विशेष्यमात्रयोरैक्यं इति वाच्यम् । तथा सति नित्यत्वासिद्धेः। आत्मनोऽपि पूर्वकालविशिष्टस्य उत्तरकालसंबन्धवैशिष्ट्यासंभवेन नित्यत्वासिद्धेः । न हि भूतवर्तमानभविष्यत्कालसंबन्धवैशिष्ट्यमन्तरा नित्यत्वमितरदस्ति । एवं इहापि वर्तमानदेशाल्पज्ञत्वादि विशिष्टस्य त्वंपदमुख्यार्थस्य, अतीतकालकालदेश सर्वज्ञत्वादि विशिष्टत्वं वा, पूर्वकालदेशतद्धर्मविशिष्टता वा विशिष्टयोरेक्यं वा वक्तुंयुक्तम् । अखण्डे त्वद्रीत्या अवधृतस्य तात्पर्यस्य उपपन्नत्वात् इति । अङ्गीकृत्यचेदमुक्तम् । वस्तुतस्तु अखण्डे तात्पर्यस्यैवाभावात् तदननुपपन्नतापि नेत्याह **तात्पर्यानुपपन्नता इति** । तच्च वक्ष्यते ।

यद्येवमपि तात्पर्यमनुपपन्नं मन्यसे, तर्हि अनुपपत्तिः वा श्रुत्यपेक्षया बलीयसी अङ्गीकार्या स्यात्। तच्चायुक्तम्। त्वया यत्पूर्वमुक्तं "श्रुतिवाक्यं स्वविरुद्धसर्वमारकं, शब्दसामर्थ्यं अचिन्त्यं" इति तत् त्वयैव विस्मृतं स्यात्। तथाचोन्मत्तता आपद्यते इत्याशयवान् उपसंहरति **अन्यथानुपपत्तिर्वेति।**

एतेन "वाक्यशेषप्रमाणान्तरसंवाद, अर्थाक्रियादिपरीक्षापरिक्षितस्य प्रत्यक्षस्य प्राबल्येन व्यवहारदशायामेव एतद्विरुद्धार्थग्राहिणः" धूम एवाग्निर्दिवा ददृशे," "अदितिर्द्यौः" यजमानः प्रस्तरः इत्यादेः तद्विरोधेनामुख्यार्थत्वेऽपि अद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेः । प्रत्यक्षादेर्हि परीक्षया व्यावहारिकप्रामाण्यमात्रं सिद्धम्। तच्च अद्वैतागमेन न बाध्यते। बाध्यते च तात्विकं प्रामाण्यं तत्तु परीक्षया न सिद्धमेव। अतो न विरोधः।धूम एवाग्नेरित्यादेस्तु मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारिकं प्रमाण्यं व्याहन्येत । अतो विरोधात्तत्रामुख्यार्थत्वमिति विवेकः इत्युक्तं अद्वैतसिद्धौ, तन्निराकृतं भवति। तथाहि अचिन्त्यशक्त्या श्रुतिवाक्यस्य विरूद्धाखिल मारकत्वस्याभ्युपेतत्वात्। भिन्नविषयकत्वेन विरोधपरिहारस्य व्यर्थत्वादकौशलद्योतकत्वाच्च। यदि च परीक्षितप्रत्यक्षस्य अचिन्त्यशक्तिमच्छ्रुतितोऽपि प्राबल्यं, तर्हि कृतं अचिन्त्यशक्त्या।अचिन्त्यशक्तिं विनाऽपि श्रुतेः स्वतः प्राबल्यं तु प्रागेव निरस्तम्। परीक्षितत्वेऽपि व्यावहारिकप्रामाण्यमात्रवतः प्रत्यक्षस्य, अपौरुषेयत्वेन स्वतः प्रबलया श्रुत्या बाध्यत्वस्याभ्युपगतौ, धूम एवाग्नेर्दिवा ददृशे, अदिति द्यौः यजमानःप्रस्तरः "-इत्यादौ अपि श्रुतित्वेनैव प्राबल्यात् गौणार्थताया अयुक्तत्वं स्यात्। न च अबाधितार्थविषयकत्वं तात्विकप्रामाण्यं तदेव प्राबल्ये बीजम्। यजमानःप्रस्तर इत्यादौ तदभावाद्गौणार्थः इति वाच्यम्। "नेह नानास्ति" इत्यादावपि निषेधस्य अब्रह्मरूपस्य बाध्यत्वेन तात्विकप्रामाण्याभावप्रसङ्गात्। ब्रह्मणश्च सर्वथाऽविषयत्वेन न किञ्चिदपि अबाधितार्थविषयकमिति तात्विकप्रामाण्यासिद्धेश्च । स्वयं अतात्विकप्रमाणं श्रुतिः कथं अपरस्य तात्विकप्रामाण्यं बाधेत ? कथं वा समानयोगक्षेमस्य प्राबल्यं ?। ननु श्रुतिः अतात्विकप्रामाण्यवती अपि प्रत्यक्षस्य तात्विकप्रामाण्यं निषेधति। न हि स्वयं असर्वज्ञः अपरजीवस्य सार्वज्ञ्यं निषेद्धुमनर्हः। प्रत्यक्षादौ सिद्धेन व्यावहारिकप्रामाण्येन, श्रौततात्विकप्रामाण्यानिषेधस्य

न विरोधः। तस्मात् नास्त्येवात्र प्राबल्यदौर्बल्यविचारोपीति चेन्नैवम् । उदाहृत-गौणार्थकश्रुतिविषयेऽपि साम्यात् । न च तत्र व्यवहारदशायां एव परीक्षितप्रत्य-क्षविरुद्धार्थग्राहित्वात् व्यावहारिकप्रामाण्यस्यापि श्रुत्या निषेधात् विरोधः। अत्र न तथा इति वाच्यम् । प्रकृतेऽपि साम्यात् । नास्ति, ब्रह्मास्मि तत्त्वमसि इत्यादि अद्वैतागमेनापि वार्तमानिकलट्प्रयोगेण व्यवहाराशायामेव परीक्षितप्रत्यक्ष-सिद्धसत्त्वस्य, तद्व्यावहारिकप्रामाण्यस्य च निषिद्ध्यमानत्वात् । अन्यथा व्यव-हारदशायां व्यावहारिकं प्रस्तरभेदं यजमाने गृह्णतः प्रत्यक्षस्य, तात्विकप्रस्तरा-भेदश्रुतेश्च अविरोधोपपत्त्या गौणार्थता नोच्येत इति शङ्का सुस्था स्यात् ।

तथा चोदाहृतश्रुति ,अद्वैतागमयोः, आचिन्त्यशक्तिमत्वे वा, व्यवहारका-लीनविषयकत्वे वा परीक्षित प्रत्यक्षविरोधे वा मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारि-कस्यापि प्रामाण्यस्य बाधकत्वे वा साम्यात् गौणार्थत्वमात्रे वैषम्यस्य कल्पने बीजाभावात् । एवं इदं रजतं इति प्रत्यक्षस्य प्रासिभासिकप्रामाण्यसिद्ध्या, नेदं रजतं इति प्रत्यक्षस्य व्यावहारिक प्रामाण्याभावविषयकत्वेन तयोरविरोधेन च भ्रान्तिबाधव्यवस्था भज्येत ।

किञ्च यदुक्तं अद्वैतसिद्धौ "न चैवं सति अमुख्यार्थत्वं स्यादिति वाच्यम् । तद्धि प्रतीयमानार्थपरित्यागेन अर्थान्तरपरत्वं वा ? । अशक्यार्थत्वं वा ? नाद्यः सामानाधिकरण्येन प्रतीयमानस्य ऐक्यस्य अत्यागात्। नान्त्यः। जहदजहल्लक्ष-णाश्रयणेन शक्यैकदेशपरित्यागेऽपि "सोऽयं देवदत्त इत्यादिवाक्ये इव शक्यैकदे-शस्यान्वयाभ्युपगमात् । विशेषणबाधेन विशेष्यमात्रान्वयस्यैवात्र लक्षणाशब्देन व्यपदेशात्" इत्यादि । तन्न शोभते । आद्यकल्पे किम् प्रतीयमानेष्वर्थेषु अन्यतमा-परित्यागेऽपि मुख्यर्थत्वं उच्यते, अहोस्वित् सर्वार्थापरित्यागे एव ? । नाद्यः । गङ्गायां घोषः इत्यादिषु प्रतीयमानस्य अधिकरणत्वादे रपरित्यागात् तत्रापि मुख्यार्थत्वापत्तेः । न च इष्टापत्तिः । अमुख्यार्थत्वस्य कुत्रापि अविद्यमानत्वापा-तात् । वचनवृत्त्या लब्धस्य सर्वस्याप्यर्थस्य तात्पर्याभेदस्य वक्ष्यमाणात्वात् । अर्थ-वादवाक्यस्य त्वद्रीत्या प्राशस्त्यमात्रलक्षणायां अपि प्राशस्त्यस्य प्रतीयमान-वाक्यार्थत्वात् । लक्षणाया अपि वचनवृत्तित्वाविशेषात् । न हि कुत्रचिद्वाक्ये प्रतीयमानास्सर्वेप्यर्थाः परित्यज्यन्ते । "प्रसतारादिवाक्यमन्यशेषत्वादमुख्यार्थः।

इति वदतः त्वद्गुरोः वाचस्पति मिश्रस्य प्रकोपः स्यात् । तत्रापि सामानाधिकरण्येन प्रतीतस्य ऐक्यस्य अपरित्यागात् । चेतनाचेतनयोः अभेदस्य प्रत्यक्षबाधात्, यजमानवृत्तिस्रुक्सादनादिकतिपयगुणसदृशगुणविशिष्टस्य प्रस्तररूपदर्भमुष्टेश्च ऐक्यं हि तत्र वाक्यार्थः। प्रयोजनं तु प्रस्तरस्तवनम् । न द्वितीयः । अत्र "अल्पज्ञत्वादिविशिष्ट" इत्यंशस्य त्वंपदादिप्रतीयमानस्य परित्यागात्। द्वितीयपक्षेऽपि किं लक्ष्यार्थोऽपि शक्यार्थ एवेति वक्तुमुद्यतः ? उत शक्यैकदेशोऽपि शक्यार्थ एवेति?। नाद्यः। विरोधात्। स्वस्य स्वसबन्धासंभवात् अभेदस्य च भेदव्यवहारानिर्वाहकत्वात् । सर्वत्र लक्षणोच्छेद प्रसङ्गात् ।नान्त्यः। एकदेशत्वव्याघातात्। शक्यैकदेशस्य अशक्यार्थत्वादमुख्यर्थतायाः दुरुद्धरत्वात् । न च शक्यैकदेशस्य अशक्यार्थत्वादमुख्यार्थत्वाभावेऽपि तत्त्वादेव मुख्यार्थता ऽस्तु इति वाच्यम् । दण्डे दैर्घ्यमपेक्ष्य दण्डी दीर्घः इति प्रयोगः स्यात् । तत्पदस्य दण्डमुख्यार्थत्वात् ।

न हि मुख्यार्थे संभवति तद्बोधकस्य अप्रामाण्यं वक्तुमुचितम् । "सोऽयं देवदत्तः" इत्यत्र विशेष्यमात्रान्वयपक्षे ऽपि विशिष्टार्थवाचकयोः तदिदंशब्दयोः विशेष्ये शक्यैकदेशे लक्षणां विना वृत्तिः वक्तुं न शक्यते एव। अन्यथा भाट्टमतेऽपि व्यक्तिः न लक्ष्या स्यात् । जातेः शक्यत्वेन तदेकदेशस्य व्यक्तेः अपि शक्यत्वात् । तस्मात् शक्यार्थस्य मुख्यार्थत्वे तदेकदेशस्यामुख्यार्थत्वावश्यंभावात् । अद्वैतश्रुतेरशक्यार्थप्रतिपादकत्वेनामुख्यार्थत्वं दुष्परिहरमेव । विशेषणबाधेन विशेष्यमात्रान्वयस्य पारिभाषिकलक्षणाभावाङ्गीकारेणापि विशिष्टस्य मुख्यत्वेन तदतिरिक्तस्य सर्वस्यामुख्यार्थत्वात् । तथा च शक्यार्थत्वं मुख्यार्थत्वं, लाक्षणिकार्थत्वं अमुख्यार्थत्वं इति सिद्धम् । तेन अद्वैतश्रुतेर्लाक्षणिकार्थत्वाङ्गीकारेऽमुख्यार्थत्वं स्यादेव ।

ननु शक्यार्थमात्रबोधकत्वं न मुख्यार्थत्वं, किन्तु तात्पर्यविषयीभूतार्थबोधकत्वं । तथा न लाक्षणिकार्थबोधकत्वं । अमुख्यार्थत्वं, किन्तु मुख्यतात्पर्याविषयवाक्यार्थबोधकत्वम् । तत्र च मुख्यार्थत्वे [1] अनन्यशेषत्वं प्रयोजकम् ।

[1] अन्यशेषत्वमिति ।उपकारकत्वं शेषत्वं ।अन्यस्य, वाक्यार्थस्य शेषः उपकारकः अन्यशेषः।तस्य भावः। तथा च यत् विधायकवाक्यस्य स्वार्थप्रतिपादने अपेक्षितसमर्पकं सत् न स्वयं स्वतन्त्रतया किञ्चिद्विदधाति तद्वाक्यं अन्यशेषः इत्युच्यते।तद्भिन्नं अनन्यशेषं इति।परोद्देशेन प्रवृत्तत्वं शेषत्वम्।।

अन्यशेषत्वं तु अमुख्यार्थत्वे । अद्वैतवाक्यं तु स्वकीयमुख्यतात्पर्यविषयीभूताखण्डार्थबोधकत्वात् मुख्यार्थतामेव भजति ॥ "यजमानःप्रस्तरः" इत्यादि अर्थवादावाक्यानां तु विधेयप्राशस्त्यमात्रतात्पर्यकत्वात् तस्यच विधिरूपस्वमुख्यतात्पर्याविषयत्वात् अमुख्यार्थत्वमेव । न च "सोमेन यजेत" इत्यत्र अनन्यशेषेऽपि [1] विरुद्धत्रिकद्वयापातात् वैय्यधिकरण्येनान्वयासंभवात् सामानाधिकरण्येनान्वयस्य च [2] प्रत्यक्षविरुद्धत्वात्; सोमशब्दस्य सोमवति लक्षणया वृत्तेः, अमुख्यार्थत्वस्य च स्वीकारान्नानन्यशेषत्वं मुख्यार्थत्वे तन्त्रं इति वाच्यम् । विशेषणे तात्पर्यहीनस्य (विध्यन्विततया) सोमेन यजेत" इति विशिष्टविधिवाक्यस्य ग्न्वर्थ लक्षणायां अपि स्वार्थापरित्यागात् अमुख्यार्थत्वाभावात् । न च "ब्रह्मजिज्ञासा कर्तव्या" इति विधायकसूत्रे" तद्विजिज्ञासस्व इति श्रुतौ च ज्ञानविषयकेच्छर्थकसन्नन्तधातोः, इच्छाया विध्ययोग्यत्वेन प्रत्यक्षविरोधभिया विचारे लक्षणाया त्वदाश्रितत्वात् नानन्यशेषत्वं मुख्यार्थत्वप्रयोजकमितिवाच्यम् । शक्यार्थपरित्यागेपि विधितात्पर्यनिर्वाहात् अमुख्यार्थत्वाभावात् । न हि वाक्यार्थप्रतीत्यन्यथानुपपत्त्या पदमात्रे लक्षणायामपि वाक्यस्य अमुख्यार्थत्वम् । प्रतीतस्यार्थस्यानन्यशेषत्वेन मुख्यार्थत्वात् । न च सर्वं खल्विदं ब्रह्म इत्यादौ घटादिप्रपञ्चस्य सर्वपदवाच्येन ब्रह्मणाऽभेदस्य प्रत्यक्षबाधितत्वेन लक्षणाया आवश्यकत्वात् । तस्यानन्यशेषत्वे त्वदङ्गीकृत अमुख्यार्थत्वस्य व्यभिचारः इति वाच्यम् । तस्य अन्यशेषत्वात् । शान्तः सन्नुपसीत इति अत्यनायास सिद्धत्वेन ब्रह्म उपसीत इत्येतत्परत्वात्तद्वाक्यस्य । न आयासो दुःखं स्वल्पमपि यथा तथा सिद्धत्वरूपप्राशस्त्यलक्षकत्वात् अमुख्यार्थत्वात् ।

---

[1] विरुद्धत्रिकद्वयापातात्॥विरुद्धे चते त्रिके च विरुद्धत्रिके। विरुद्धत्रिकयोःद्वय विरुद्धत्रिकद्वयं।तस्यापातादति (1) उपादेयत्वं (2) गुगत्व (3) विधेयत्व इत्येक त्रिकं (1) उद्धेश्यत्व (2) प्रधानत्व (3) अनुवाद्यत्वं इत्येकंत्रिक त्रिकद्वय (1) तत्र करणत्वसमानाधिकरणस्य प्रकृतविधिप्रयुक्तकृतिसाध्यताधीविशेष्यत्वरूपस्य उपादेयत्वस्य तदभावरूपेण कर्मत्वसमानाधिकरणेन उद्धेश्यत्वेन विरोधः । (2) करणवृत्तेः शेषत्वरूपस्य (परोद्धेशप्रवृत्तत्वरूपस्य) गुणत्वधर्मस्य कर्मवृत्तिना शेषित्वरूपप्रधानत्वेन विरोधः । (3) करणसबच्छिनः अज्ञातज्ञापयत्व रुपविधेयत्वस्य, कार्मज्ञातज्ञाप्यत्व रुपेण अनुवाद्यवेन विरोधः। "सोमेन यजेत" इत्यत्र सोमेन याग भावयेत्, यागेनेष्टंभावयेत् इतिवाक्यार्थद्वयेनशाब्दबोधोपगमेयागेकर्मकरणत्वयोःयुगपत्समावेशापत्तिः॥

[2] विरुद्धत्वादिति, सोमख्यलतारसः सोमः तस्य गुणत्वेन यागरूपकर्मत्वाभावात् अभेदायोगात् । भेदस्य प्रत्येक्षेणैव सिद्धत्वात् ।

एवं इयं गौः क्रय्या बहुक्षीरा इत्यत्र सोरोदीत् इत्यत्र च अन्यशेषे तस्य क्रयविधिप्राशस्त्यलक्षकत्वात् ,रजतनिन्दाद्वारा हिरण्यस्तुतिपरत्वाच्च अमुख्यार्थत्वमेवेति ज्ञेयम् । तस्मात् साधूक्तं वाचस्पतिमिश्रैः प्रस्तरादिवाक्यं अन्यशेषत्वादमुख्यार्थम् । अद्वैतवाक्यं तु न तथा । उक्तं च शाबरभाष्ये न विधौ परःशब्दार्थः इति ।

तदेतत्सर्वं अतीवासमञ्जसम् । तथा हि यदुक्तं तात्पर्यविषयीभूतार्थबोधकत्वं हि मुख्यार्थत्वम् । न तु शक्यार्थमात्रबोधकत्वमिति । तन्न । तथासति सर्वत्र वचनवृत्त्या लब्धार्थस्यैव तात्पर्यत्वेन, तयोरत्यन्ताभेदात्, कस्यापि वाक्यस्य अमुख्यार्थत्वं न स्यात् । न च शक्त्या लक्षणया वा प्रतीतस्यैवार्थस्य अन्यशेषत्वेन कल्पना यत्र ,तत्र वाक्यस्य अमुख्यार्थत्वेमेवेति वाच्यम् । अन्यशेषेष्वपि तात्पर्यविषयीभूतार्थबोधकत्वस्य सत्त्वात् । न हि विध्युपकारकतया वा विध्युद्धेशेन प्रवृत्ततया वा अन्यशेषं अर्थवादवाक्यं स्वतात्पर्यार्थं जहाति । अन्यथा विध्येकवाक्यत्वापन्नानां विध्युपकारकतया, विध्युद्देशेन प्रवृत्तानां संज्ञासूत्राणां अमुख्यार्थत्वापत्तेः । न चेष्टापत्तिः । तेषामेव प्राथम्येन मुख्याप्रतिपत्तौ अबोधकत्वेन अप्रामाण्यप्रसङ्गात् । न च विध्येकवाक्यतावतां अर्थवादवाक्यानां वाक्यैकदेशत्वेन विशिष्टवाक्यार्थाबोधकत्वादेव अमुख्यार्थत्वं वक्तुमुचितं विधिवाक्यस्यापि तत्साम्यात् । उभयोरपि प्रत्येकं स्वार्थापरित्यागेन मुख्यार्थत्वाविशेषात्, विशिष्टवाक्यार्थाबोधकत्वं अपि उभयोरपि समानमेव ।

किञ्च सिद्धार्थेऽपि त्वया प्रामाण्याभ्युपमात् न अर्थवादवाक्यानां अन्यशेषाणां अप्रामाण्यभिया स्वार्थपरित्यागः मीमांसकैरिव युज्यते । नापि विरोधात् । तस्य तत्राभावात् । नापि कल्पनागौरवभयात् । प्राशस्त्यादिरूपलक्ष्यार्थस्य स्वशक्यार्थस्य वा तात्पर्यार्थस्य वचनवृत्त्यैव लब्धत्वेन कल्पनाभावात् । न च आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां (जै-१-२-१) इत्युक्तेः प्रयोजनाभावात् स्वार्थत्याग इति वाच्यम् । ज्ञानमात्रप्रयोजनत्वस्य सुखाद्यासादकत्वस्य च शब्दे[1] त्वयाप्यङ्गीकारात् (तरति शोकमात्मविदित्यादौ तस्मात् अनन्यशेषे सोमेन यजेत इत्यादौ मत्वर्थलक्षणायां आश्रितायामपि मुख्यार्थत्वोपपत्तिवत्,

---

1 शांकरभाष्येब्रह्मावगतिर्हिपुरुषार्थः(इति)निःशेषससारबीजाविद्याद्यनर्थनिवर्हणात्।इति।

अर्थवादवाक्यानां लाक्षणिकप्राशस्त्यातात्पर्यकत्वाङ्गीकारेऽपि स्वार्थापरित्यागात् मुख्यार्थत्वं अभ्युपगन्तव्यम् । तथा चानन्यशेषत्वं मुख्यार्थत्वप्रयोजकमिति अयुक्तम् ।

एतेन यत्र पुनः प्रतीत एव वाक्यार्थो अन्यशेषत्वेन कल्प्यते तत्र वाक्यस्य अमुख्यार्थत्वमेव । अन्यद्धि पदतात्पर्यं , अन्यच्च वाक्यतात्पर्यम् । सैन्धवमानय , गङ्गायां वसन्ति इत्यादौ वाक्यतात्पर्यैक्ये पदतात्पर्यभेदात् , विषं भुंक्ष्व इत्यादौ पदतात्पर्याभेदेऽपि वाक्यतात्पर्यभेदात् इत्याद्युक्त अद्वैतसिद्धौ तत्प्रत्याख्यातम् । तथा हि सैन्धवपदस्य लवणतुरगरूपे अर्थद्वये तात्पर्ये, वाक्यतात्पर्यस्यापि भेदो नियत एव लवणमानय तुरगमानय इति वाक्यद्वयात् वाक्यार्थद्वयस्य आवश्यकत्वात् । एवं गङ्गापदेन प्रवाहतीररूप अर्थद्वयस्य वाच्यलक्ष्यत्वाभ्यां भिन्नस्य प्रतिपत्तौ, गङ्गायां मकरा वसन्ति इत्यत्र प्रवाहरूपवाच्यार्थबोधकगङ्गापदघटितवाक्यात्, गङ्गायां ऋषयो वसन्ति इति तीरतात्पर्यकगङ्गापदघटितवाक्यर्थादन्यस्यैव, अर्थस्य प्रतीतिरभ्युपगन्तव्या इति तत्रापि न वाक्यतात्पर्यैक्यम् । विषं भुक्ष्व इत्यत्रापि शत्रुवन्नभोजने शब्दप्रयोक्तृनिष्टसाधनत्वरूपतात्पर्यं न वाक्यार्थः । किंतु वचनलिङ्गानुमितमेव । मम पिता, क्रुद्धो वर्तते, आप्तत्वेसति प्रमाणविरुद्धकर्तव्यतावादित्वात् इति । क्रोधश्चास्य सन्निहितशत्रुगृहनिषिद्धभोजनादेव जातः । तस्मात् मया इदं न कार्यं इति वक्तुराशयो अनुमीयते । तथा च सर्वत्र वाक्यतात्पर्यं न पदतात्पर्यादतिरिक्तं इति सिद्धम् ।

एवं इयं गौःक्रय्या बहुक्षीरा इत्यत्र कामधेनुरित्यत्र च प्राशस्त्यलक्षणासाम्यात् स्वार्थपरित्यागापरित्यागौ प्रति प्रामाणन्तरविरोधतदभावयोः नियामकत्वावश्यंभावात् मुख्यार्थत्वामुख्यार्थत्वयोरपि तयोरेव तन्त्रत्वात् अन्यशेषत्वं तु वाक्यस्यामुख्यत्वे प्रयोजकमपि नामुख्यार्थत्वे । एवं अनन्यशेषत्वमपि इति ज्ञेयम् । ततश्च लाक्षणिकार्थत्वं इह अमुख्यार्थत्वं तस्य च जिज्ञासापदे सत्त्वात् । लक्षणायाश्च मानान्तरविरोधे एव आश्रयणीत्वाच्च । वाच्यार्थस्यैव स्वाभाविकतया प्रथमबुद्ध्यारूढत्वेन मुख्यत्वस्य उपपादितत्वात् । तत्परित्यागश्च विना बाधं दुःसाध्यः । एवं तद्विजिज्ञासस्व इत्यत्र जहल्लक्षणया सन्प्रत्ययस्य विचारार्थकत्वं, तथा चामुख्यार्थत्वमुपगम्य तद्घटितवाक्यस्य मुख्यार्थत्वं दुरुप-

पादम् । न हि स्वघटकपदैरबुबुधिषितं अर्थं वाक्यं प्रतिपिपादयिषति । पदसमूहस्य वाक्यस्य पदभिन्नार्थकत्वं नैव युज्यते । तस्मात् विधिवाक्यस्यापि अमुख्यार्थत्वस्याभ्युपगन्तव्यत्वेन अनन्यशेषत्वस्य मुख्यार्थत्वेन व्यभिचारात् अतन्त्रत्वात् ।

एतेनैव "अत एव मानान्तरविरोधे एव लक्षणोत्यपास्तम् । इयं गौःक्रय्या बहुक्षीरा इत्यादिना प्राशस्त्यलक्षणाया व्यभिचारात्" इत्यादि सिद्ध्युक्तं परास्तम् । इयं गौः क्रय्या बहुक्षीरा सोरोदीत्यादौ, सिद्धार्थबोधकानां आप्तवाक्यानां, वेदानां च प्रामाण्यसिद्ध्यर्थं विध्येकवाक्यतया प्रामाण्यमुपपाद्य अन्वयतात्पर्यानुपपत्त्यभावेऽपि प्रयोजनवत्त्वेन लाक्षणिकार्थत्वस्वीकारः शब्दानां क्रियार्थत्वेन प्रामाण्यवादिनां मीमांसकानां उपपद्यमानोऽपि त्वन्मते तदसंभवात्। कस्यापि लक्षणाबीजस्य तत्राभावात् ।

ननु "ननु तर्हि आदित्यो यूप इत्यादौ वाक्यार्थप्रतिपत्त्यर्थमेव लक्षणाङ्गीकारादमुख्यार्थत्वं न स्यात्" । न स्यात्, यदि आदित्यसदृशो यूप इति वाक्यार्थपर्यवसानं स्यात् । किन्तु गुणवृत्त्या प्रतीतस्यापि वाक्यार्थस्य यूपे पशुं बध्नाति इति विधिशेषत्वेन तत्प्राशस्त्यलक्षकत्वमस्त्येव । तेनैवामुख्यत्वं नत्वादित्यपदगौणतया इति तत्सिद्धिपेटिकायां सर्वोदाहरणेषु अवान्तरवाक्यार्थप्रतीतये गुणवृत्तिप्रकाराः प्रदर्शिता इति द्रष्टव्यम् । कर्मप्राशास्त्यलक्षणा च सर्वार्थवादसाधारणी तत्रास्त्येव इति नामुख्यार्थत्वानुपपत्तिः इति ।

तन्न ।। अर्थवादपदानां पदान्तरवैय्यर्थ्यापत्तेः प्रत्येकं प्रस्त्यलक्षकत्वाभावात् पदसमुदायस्य कृत्स्नस्यैव वाक्यस्य प्राशस्त्यलक्षणायां, अवान्तरवाक्यार्थे प्रतिपन्नेऽप्रतिपन्ने वा प्रामाण्याविघातात्, आदित्यो यूप इत्यत्रादित्यपदस्य आदित्यसदृशे लक्षणाया वैय्यर्थ्यात् । सर्वत्र सिद्धे प्रामाण्ये तदुपपत्त्यर्थं हि लक्षणया प्रमाणन्तरविरोधः परिह्रियते । अन्वयाद्यनुपपत्तेः तत्सिद्ध्यादीनां लक्षणाबीजत्वेऽपि प्रामाण्यसिद्धेरेव फलत्वात् । अर्थवादवाक्यस्य कृतायामपि प्राशस्त्यलक्षणायां वाक्यार्थप्रतिपत्त्यर्थं प्रत्यक्षाविरोधाय यदि पदलक्षणाऽपि तदा सिद्धं वाक्यस्य स्वार्थापरित्यजनम् । तथा मुख्यार्थत्वमपि । प्राशस्त्यस्यापि स्वतात्पर्यत्वान्न प्रशंसाभ्युपगमविरोधः । आदित्यो यूपः इत्यत्र

प्रतीयमानस्य स्वार्थस्य यूपे आदित्याभेदस्य, प्राशस्त्यलक्षणायां अपरित्यक्तस्य प्रत्यक्षविरोधादेव आदित्यसदृशे लक्षणया तत्संपादनमिति हि मैमांसिकी प्रक्रिया । अन्यथा तदयोगात् । अवश्यं चेदमेवमेव । अपामसोममममृता अभूम (ऋक् ८-४८-३) इत्यत्र कर्मणः साक्षादमृतत्वरूपमोक्षाधायकत्वे प्रतीयमाने, तस्य श्रुत्यन्तरेण (तद्विद्वानेव चामृत इत्यादिना) विरोधे च प्राप्ते, अर्थवादत्वेन प्रशंसातात्पर्यकत्वादेव तत्परिहारे सुलभे संभवति "भाक्तं वाऽनात्मवित्तथा हि दर्शयति" (३-१-७) इति (भाक्तं-अमुख्यं) अमुख्यार्थस्वीकारेण विरोधपरिहारात् । यच्चोक्तं तत्सिद्धिपेटिकायां सर्वोदाहरणेषु अवान्तरवाक्यार्थप्रतिपत्तये गुणवृत्तिप्रकाराः प्रदर्शिताः इति द्रष्टव्यम् । कर्मप्राशस्त्यलक्षणा च सर्वार्थवादसाधारणी तत्रास्त्येवेति; तन्न विलसति । मीमांसकानां वा, अस्माकं वा कर्मप्राशस्त्यलक्षणायाः सर्वार्थवादसाधारणत्वासंमतेः । सृष्टीरुपदधाति प्राणभृत उपदधाति इति भूमालिङ्गसमवायोदाहरेणेषु विध्यन्तराभावात्, विध्येकवाक्यत्वाभावाच्च उपदधाति इति प्रत्यक्षविधिश्रवणाच्च यत्सप्तदशइष्टका उपदधाति इति अर्थवादानुसारेण मुख्यवाक्यार्थोपपत्त्यर्थमेव गुणवृत्तिप्रकारस्य प्रदर्शनात् । यद्यपि सृष्टिशब्दः विधिविषये लक्षणां परिहरता भाष्यकारेण विध्यर्थवादयोः वैय्यधिकरण्यभ्रमवारणाय अनुवादत्वेनार्थवादः इति स्वीकृतः तथापि प्राशस्त्यलक्षणा नाश्रिता । वैय्यर्थ्यात् । वार्तिककारेण तु "श्येनचितं चिन्वीत" इत्यादौ अगत्या विधिविषयेऽपि लक्षणाश्रयणावश्यकत्वं, अभिप्रेत्य मन्त्रविशिष्टमेवोपधानं विधीयते इत्यङ्गीकृतम् । तत्पक्षे तु सुतरामनन्यशेषेऽस्मिन्नुदाहरणे अमुख्यार्थस्वीकारात् नानन्यशेषत्वं मुख्यार्थत्वमिति सिद्धम् । तदुक्तं भाट्टदीपिकायां [1] तात्सिद्धिजाति [2] सारूप्यप्रशंसाभूमलिङ्गसमवायाः इति गुणाश्रयाः (१-४-२३ जैसं) इति सूत्रव्याख्यानावसरे "तन्त्रवार्तिककारस्तु नोपधानमात्रविधिः तथा सति प्राणभृत उपदधाति इत्याद्यनेकोपधानवि-

---

[1] लघुटि तत्सिद्धिरिति-तत्पदस्य सर्वत्र जात्यादिषु अन्वयः।तत्सिद्धि-तज्जातिरित्यादि।(1) तत्सिद्धिः तस्य-मुख्यार्थस्य,सिद्धिःकार्यं (एककार्यकारित्वं) (2) जातिः-जन्म (एकप्रभवत्वं) (3) सारूप्यं-चक्षुर्ग्राह्यगुणवत्व, सादृश्य वा। (4) प्रशसा -बलवदनिष्टाननुबन्धित्वम्। (5) भूमा बाहुल्यम्। (6) लिङ्गसमवायः-लिङ्गस्य, मुख्यार्थधर्मस्यसमवायः सबन्धः।गुणाश्रयाः-गुणवृत्तौ निमित्तानि।इत्यर्थः

[2] भूमा इत्यस्य गौणनिमित्तस्य व्याख्याने।

धिवैय्यर्थ्यापत्तेः। अतो मन्त्रमात्रमुपधानानुवादेन मन्त्रविशिष्टं वोपधानमिष्टका-संस्कारार्थत्वेन विधीयते । तत्रोपधानविधिफलं तु पूर्ववत् । मन्त्रविधिफलं तूपधाने तन्नियमः।

ननु कर्मप्राशस्त्यलक्षणाया सर्वार्थवादसाधरणत्वाभावे विधिनात्वेक-वाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युः इत्यर्थवादाधिकरणोक्तं विध्याकांक्षितार्थबो-धकत्वं न स्यात्। न वा अध्ययनविधिविषयत्वं स्यात्, प्रयोजनवदर्थाऽपर्यवसानात्। न हि द्वारभूतो वाक्यार्थो विध्याकांक्षितोऽनाकांक्षितो वा प्रयोजनवान् । न च निष्प्रयोजने साकांक्षे श्रुतेर्मुख्यतात्पर्यम्। अत एव अर्थेऽनुपलब्धे तत्प्रमाणं इत्यनेन अर्थशब्दितसत्प्रयोजनेऽनवगत एव तत्तात्पर्यमुक्तमिति। इतिचेन्मैवम्। अर्थवादा-धिकरणे विधिना इति सूत्रस्य विधिसन्निधिपठितानां स्तुत्यादिपरशब्दघटितानां प्रशंसानिन्दारूपाणां एव अर्थवादानां प्राशस्त्यादिलक्षकत्वपरत्वात्। परकृतिपुरा-कल्पसिद्धार्थवादानांप्राशस्त्यलक्षकत्वाभावात् तदुक्तकौस्तुभे "एवं च यत्र सुखनर-कादिरूपफले निसर्गत एव रुच्यरुची तत्र प्रयोजनाभावात् यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदं इत्यादीनां न प्राशस्त्याप्र-शस्त्यलक्षकत्वम्, किन्तु विधिनिषेधापेक्षितस्वर्गनरकादिस्वरूपपरत्वमेव । एवं दूरस्थानामपि विनाशिदेहादिव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मप्रतिपादकानामुप-निषदां परलोककर्मविध्यपेक्षितोक्तरू पात्मपरत्वमेव इति । इदमत्रावधेयम् । तात्सिद्धिपेटिकायां सर्वोदाहरणेषु अर्थवादेषु स्वार्थे तात्पर्यस्य अगत्या सिद्धान्ति तत्वेन ,तस्य च निष्प्रयोजनत्वायोगात्, ईदृशार्थवादानां अध्ययनविधिविषयत्वं तु सूपपादम् स्वार्थविवक्षायां विधितच्छेषत्वाभिमतार्थवादयोः साम्ये, परार्थीभूत-विध्यर्थे प्राशस्त्यद्वारा अर्थवादस्य मुख्य ( परम ) तात्पर्याङ्गीकारवदर्थवादसमर्पि-तविधेयप्राशस्त्येऽपि विधेस्तात्पर्याङ्गीकारस्य आवश्यकत्वे च तात्पर्यविषयीभूतार्थबोधकत्व, अन्यार्थतात्पर्यकत्वे न मुख्यार्थत्वामुख्यार्थत्वे भवतः। विध्यर्थवादयोरुभयोरुभयस्य सत्त्वात्।

अन्यथा विध्यनाकांक्षितानभिप्रेतविवक्षितार्थसमर्पकतयाऽर्थवादस्याप्रामाण्यमेव स्यात् । न हि[1] विधिः विधेयमप्रशस्तं वा उदासीनं वा विधित्सति ।किन्तु प्रशस्तमेव । तच्च प्राशस्त्यं विध्यपेक्षित मेवार्थवादः समर्पयति । तथा च विधिना एकवाक्यतापन्नस्यार्थवादस्य, अर्थवादेनैकवाक्यता पन्नस्यविधेर्वा समान एवार्थे तात्पर्यमिति विधिर्मुख्यार्थः अर्थवादोऽमुख्यार्थ इति व्यवस्था न युज्यत एव। तस्मात् यत्र वाक्ये शक्यार्थस्य बाधं पश्यन्प्रतिपत्ता लाक्षणिकमर्थं प्रतिपद्यते स अर्थोऽमुख्यार्थ इति । बाधाभावात् "वायुर्वैक्षेपिष्टा" इत्यादिवाक्यं स्वार्थे शक्यार्थेऽपि तात्पर्यवदेवेति मुख्यार्थमेव । विधिप्राशस्त्यतात्पर्यकल्पनायां तु अमुख्यार्थमपि । न चैकस्यैव वाक्यस्य शक्ये लाक्षणिके चार्थे तात्पर्य कल्पने गौरवमिति वाच्यम् । वाचनिकार्थातिरिक्ततात्पर्यार्थे मानाभावेन कल्पनाभावागौरवाप्रसक्तेः । तात्पर्यार्थमतिरिक्तं मन्वानैरपि मीमांसकैः लक्षणया प्राशस्त्यबोधकानामप्यर्थवादानांस्वार्थेऽपि[2] विवक्षायाःस्वीकृतत्वात् । अद्वैतिभिरपि अर्थवादानां स्वार्थेऽपि तात्पर्यं[3] संमतमेवेति बोध्यम् ।

---

[1] अप्रशस्तविधाने विरोधः।उदासीनविधाने तु असभवि एव अर्थवादवाक्यादर्शने लिडादिश्रवगोत्तरमपि प्रवृत्त्यभावः च प्रसज्येत। न च तत्रापि अर्थवादः कल्प्यत इति वाच्यम्।तथा सति विधि विना अर्थवादस्येव अर्थवाद विना विधेरपि वैय्यर्थ्यप्रसङ्गः।नचायमिष्टःतयोः शेषशेषिभावाभावप्रसङ्गात्।न चाम्नायस्यस्य क्रियार्थत्वनियमात् क्रियापदघटितविधेःविपर्ययेणापिनियमकल्पनासभवात्।

[2] लघु टि स्वार्थे विवक्षा (अर्थवादाना) मीमासकैरङ्गीकृतम् । तथाहि (1) प्रथमाध्यये चतुर्थपादे तत्सिद्धिपेटिकाया "यजमानःप्रस्तरः",(2) "आग्नेयो वै ब्राह्मणः",(3) "आदित्योयुपः", (4) अपशवो वा अन्येगोऽश्वेभ्यः पशवो गो अश्वाः ", (5) "सृष्टीरुपदधाति", (6) "प्राणभृत उपदद्याति इत्यत्र सर्वेषां अजहत्स्वार्थाना एव गौणीवृत्तिमङ्गीकृत्य अन्वय प्रतिपादितः । अन्यथा प्राशस्त्यलक्षणायैव वाक्यप्रामाण्योपपत्तौ यजमानकार्यकारिणि, अग्न्युत्पत्तिस्थानोत्पत्तिमति आदित्ये सदृशे च लक्षणा नोच्येत । नवमाध्याये प्रथमपादे षष्टाधिकरणे "त्सरा वा एवा यज्ञस्य तस्मा द्यत्किञ्चत्प्रचीनमग्निषोमीयात्तेनापाशु चरन्ति" इत्यर्थवादवाक्ये अन्वय विचारपुरस्सर श्रुत-उपाशत्वस्य परमापूर्वप्रयुक्तत्व निराकृत्यावान्तरापूर्वप्रयुक्तत्वसमर्थनात् स्वार्थविवक्षाभावे नैतदुपपद्यते । इत्यादि बहु उदाहरणं तत्र तत्र द्रष्टव्यम् ।

[3] शांकरभाष्ये ईक्षत्यधिकरणे "सदेव सौम्य" "तदैक्षत बहुस्या प्रजायेयेति तत्तेजाऽसृजत" आत्मा वा इदमेक एवाग्रासीत् नान्यत्किंञ्चनमिषत् इत्यादिअर्थवादश्रुत्युदाहरणपुरस्सरं ब्रह्मण एव जगत्कर्तृत्वसिद्धान्तः अर्थवादस्य स्वार्थविवक्षामन्तरा अनुपपन्नः स्यात् । अङ्गीकृतं चैतत् रत्नप्रभाकृता तदुक्तं "ननु स्वपिति निरुक्तेः अर्थवादत्वात् न यथार्थतेति नाशंक्यम् । हृदयशब्द,अशनाय उदन्यशब्दाना निर्वचनं यथा एवमेव इदमपि, इति एव सन्ति बहून्युदाहरणानि । तथापि ग्रन्थगौरवभिया दिङ्मात्रमत्र प्रदर्शितम् ।

अर्थवादानां प्राशस्त्यलक्षणाया अन्यशेषत्वस्य नियतत्वाङ्गीकारेऽपि लाक्षणिकत्वादेव अस्यामुख्यार्थत्वं न तु अन्यशेषत्वात्। अनन्यशेषेऽपि विधौ "श्येनचितं चिन्वीत" इत्यादौ अमुख्य स्य लाक्षणिकार्थस्य स्वीकारात्। तस्मादुदाहृतशाबरवचनस्य विधिवाक्ये न लक्षणा इति नार्थः। किन्तु (अनुवाद) अर्थवादमुख्यार्थत्वाय विधेयसमर्पकपदे न लक्षणा इति।

ननु "अर्थवादमुख्यार्थत्वाय विधिवाक्ये न लक्षणा" इति एवमेवशाबरवचनं व्याख्येयं इति न युक्तम्। अश्वप्रतिग्रहेष्टौ यावतोऽश्वान् प्रतिगृण्हीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत् "इत्यत्र प्रतिगृह्णीयात् इति पदस्य "प्रजापतिर्वरुणायाश्वमनयत्" इति अर्थवादवाक्यानुसारेण, दातुरेवपीडाश्रवणरूपलिङ्गात् प्रतिग्राहयेत् इत्यर्थो लक्षणया सिद्धन्तितः। यदि शाबरवचनंअर्थवादानुसारेण विधिवाक्येलक्षणाभाव परं स्यात् तर्हि उक्तसिद्धान्तः न सिद्धयेत् तस्मात् विधौ तात्पर्यवति वाक्ये परः प्रतीयमानवाक्यार्थातिरिक्तः अन्यः शेषी न इत्येतत्परं शाबरचनं व्याख्यातव्यं तथा च लाक्षणिकत्वेऽपि अद्वैतागमस्य मुख्यार्थत्वं युक्तं इति प्रत्यक्षं नागमबाधकमिति चेन्न। अश्वप्रतिग्रहेष्टौ प्रतिगृण्हीयादिति पदस्य दातरि लक्षणया "श्रुतेर्जाताधिकारः इति न्यायेन प्रबलोपक्रमस्थविषयानुरोधेनैव आश्रितत्वात्। न तु अर्थवादानुसारेण। न हि उपक्रमवाक्यं अर्थवाद इत्येतावतैव स्वविरोधिनो विधिवाक्यस्य लाक्षणिकत्वं नावगमयति। यथा त्वयापि प्रत्यक्षस्य दुर्बलत्वेऽपि परीक्षितत्वेन प्राबल्ये सति इतरबाधकत्वं अङ्गीकृतम्। तथा अर्थवादस्यापि उपक्रमत्वेन प्राबल्ये एव विधिवाक्ये लाक्षणिकत्वावगमकत्वम्। यथा च तत्र बाधकतावच्छेदकं परीक्षितत्वमेव न प्रत्यक्षत्वं इति त्वन्मतम्। तथात्र लक्षणापादकतावच्छेदकं उपक्रमत्वमेव न त्वर्थवादत्वम्। एवमेव "उच्चै ऋचा क्रियते इत्यादिविधिवाक्ये पूर्वागमानुसारेणैव ऋगादिपदलक्षणा ऋग्वेदेषु इत्येव व्याख्यातं इति तत्रापि नो नास्ति दोषः।

यदपि "तात्पर्यवति इत्यादि तदपि न शोभते। तस्य मुख्यतात्पर्यविषयः वाक्यार्थः नान्यशेषः इत्येव निष्कृष्टोऽर्थः मुख्यत्वं च तात्पर्ये वाच्यत्वेनैव निर्वाह्यम्। तथा च "वाक्यार्थो नान्यशेषः इति पर्यवस्यति। तच्च स्वार्थं [illegible] अर्थान्तरे [illegible] ति।

यदि मुख्यत्वं पुनरनन्यशेषत्वाधीनं तर्हि "अनन्यशेषतात्पर्यार्थः नान्यशेषः" इति पर्यवस्यति । तच्च विधेय उद्धश्ययोरैक्यापत्त्या नोचितं । तस्मात् वाच्यार्यत्वं मुख्यार्थत्वं लक्षणिकार्थत्वं चामुख्यार्थत्वमिति सिद्धम् । तथा च अद्वैतागमः अमुख्यार्थ एवेति, मुख्यार्थस्य च प्रत्यक्षाविरोधायैव परित्यागात् च सिद्धं श्रुत्यपेक्षया प्रत्यक्षस्य प्राबल्यम् ।

अयं अत्र सङ्ग्रहः। "वाचकत्वं हि तात्पर्यं यदर्था अखिला खाः। ( अनु - ज्ञानपादे) इति । न च वाचनिकार्थस्तात्पर्यार्थ इति विशेषः तन्मानाभावात् (कर्मनिर्णये) इति भगवत्पादवचनात् वचनवृत्त्या लब्धार्थस्य तात्पर्यार्थत्वं सिद्ध्यति । न च वक्तुरिच्छा तात्पर्यं । घटबोधनेच्छया पटशब्दप्रयोगे साधुत्वापत्त्यातिप्रसङ्गात् । लौकिकव्यवहारस्तु प्रकरणाद्यज्ञस्यानेकार्थस्थलेऽन्यतमार्थबोधनार्थ इति न दोषः । अद्वैती तु तात्पर्यं अतिरिक्तं मन्यते । तत्र् प्रमाणाभावादयुक्तम् । वाचनिकत्वं तु योगःरूढिःगौणी, लक्षणा चेति चतुर्विधम् । तदतिरिक्तस्य पदार्थत्वं वा वाक्यार्थत्वं न संभवति । अतिप्रसङ्गात् । अन्विताभिधानाङ्गीकारात् योग्येतरन्वितस्वार्थवोधनशक्तिमन्ति पदानि एव वाक्यं इति तदर्थयोरपि अभेदनियमाच्च । अभिहितान्वयवादिभिरद्वैतिभिरपि अन्वयस्य लाक्षणिकत्वाङ्गीकारात् वाचनिकत्वापरिहारात् । तत्र योगरूढयोः प्राथम्यस्वभावत्वेन मुख्यत्वम् । आनन्तर्याद् गौणीलक्षणयोरमुख्यत्वम् । परस्तु मुख्यार्थत्वे अनन्यशेषत्वं तन्त्रं अमुख्यत्वे च अन्यशेषत्वं बीजमनुते । उभयोरपि बहुषु स्थलेषु व्यभिचारात् अप्रयोजकत्वात् तन्न युक्तम् । सर्वत्र शक्यार्थपरित्यागश्च प्रत्यक्षादिप्रमाणान्तराविरोधायैवआश्रयणीयत्वात् । अद्वैतागमस्यपि लाक्षणिकार्थत्वे प्रत्यक्षप्राबल्यमङ्गीकृतमेवेति सिद्ध्यति । तस्मात् "सन्घट" इति प्रत्यक्षं प्रबलं सत् अनुमानं आगमं बाधत एवेति सर्वमनवद्यम्।एवं आगमस्यैव प्रबलस्य प्रत्यक्षबाध्यत्वे सिद्धे किमु अनुमानस्येति कैमुत्यसिद्धत्वान्न तत्समर्थनं पृथगुपात्तम् ।

पूर्वपक्षः प्रत्यक्षं तात्विकत्वेन व्यावाहरिकगोचरम् ।
व्यावहारिकमानत्वं आगमेन न बाध्यते ।
बाध्यते तात्विकं तस्य प्रामाण्यमपरीक्षितम् ॥

सिद्धान्तः इति त्वदुक्तं युक्तं न प्रामाण्यं नात्र दृश्यते ।
नेह नानेतिवाक्येन सत्तामात्रं निषिध्यते ॥ ९७ ॥

घटादौ त्वन्मते केन व्यावहरिकसत्यता ।
प्राप्ता प्रमाणेन विना सत्तात्रैविध्यमी रितम् ॥ ९८ ॥

त्रिकालसर्वदेशीय निषेधाप्रतियोगिता
सत्तोच्यतेऽध्यस्ततुच्छे तं प्रतिप्रतियोगिनी ॥ ९९ ॥

इति सत्त्वैकविध्यं तु दर्शितं मम पूर्वकैः
असाधयित्वा सत्त्वस्य त्रैविध्यं यत्त्वयोच्यते ॥ १०० ॥

तद्ग्राह्यं नैव भविता, सर्वं सुप्तप्रलापवत् ॥ १०१ ॥

श्रुतेरद्वैतिरीत्या अचिन्त्यशक्तिमत्त्वेन विरुद्धाखिलमारकत्वात् प्रत्यक्षबाधकत्वे संपत्स्यति श्रुतिप्रत्यक्षयोः तात्विकव्यावहरिकप्रामाण्यविषयकत्वमुपगम्य विरोधपरिहारे वैय्यर्थ्य अकौशलं च पूर्वं समर्थ्येदानीं दोषान्तराणि चापादयति इति **त्वदुक्तं इत्यादिना** । तत्र प्रथमतया तद्वाक्यदोषमाह **प्रामाण्यं** इति । विषयतया इति शेषः अत्र नेहनानास्ति इत्यादिश्रुतौ प्रामाण्यं प्रतिषेधविषयतया न दृश्यते । नेहनानेति श्रुतेः प्रत्यक्षाप्रमाण्यविषयकत्वं न दृश्यन्ते इति भावः । तर्हि किं तत्र दृश्यते इत्यत आह **सत्तामात्रं निषिध्यते इति** । सत्ताभावविषयकत्वं दृष्यते **इत्यर्थः** । तथा च आगमेन सत्ता बाध्यते साच न व्यावहारिकी किन्तु पारमार्थकी **इत्येवमेव** वक्तव्ये व्यावहारिकमानत्वं आगमेन न बाध्यते इत्युक्तिरयुक्ता इति

भावः । आगमप्रत्यक्षयोः सत्ताभावसत्ताविषयकतया बाधकबाध्यभावः न तु प्रामाण्य विषयकतया । विरोधिविषयकयोरेव बाध्यबाधकत्वात् । न चेदं रजतं इति रजतग्राहकस्य प्रमाणभूतनेदंरजतमिति ज्ञानबाध्यत्वे अप्रामाण्यं गम्यते एवेति वाच्यम् । तस्य अनुमानगम्यत्वात् । तथा हि रजतज्ञानं अप्रमाणं प्रमाणविषयविरुद्धविषयकत्वात संप्रतिपन्नवदित्यनुमानेनैव अप्रामाण्यनिश्चयात । श्रुत्याऽबोधितत्वात् ।

ननु अस्तु अप्रामाण्यं प्रत्यक्षस्य अनुमानगम्यं, एवं मास्तु चागमगम्यत्वम् । तथापि परंपरया प्रामाण्यनिषेधो आगमबल लभ्य एवेति किमनया वाक्यदोषचिन्तया इत्यत आह **प्रामाण्यं नात्र दृश्यते इति** । अत्र प्रत्यक्षस्य व्यावहारिकप्रामाण्ये, आगमेन तदनिषेधे,पारमार्थिक (तात्विक) प्रामाण्यनिषेधे च प्रामाण्यं न दृश्यते ( अत्र विषयसप्तमी ) न सिद्ध्यति इत्यर्थः ।

ननु नेहनानेति श्रुतिरेवात्र प्रमाणम् । श्रुत्या खलु जगतः तात्विकत्वं निषिध्यते इति अद्वैतराद्धान्तः । व्यवहार कालेऽबाधितसत्त्वं प्रत्यक्षगृहीतमिति तु निर्विवादम् । तथा च श्रुतेः तात्विकसत्त्वनिषेधपरतया तात्विकप्रामाण्यनिषेधः फलति । व्यावहारिकसत्त्वग्राहिप्रत्यक्षस्यव्यावहारिकप्रामाण्यं अर्थाच्च श्रुतेः व्यावहारिकप्रामाण्यनिषेधेऽतात्पर्यं च सिद्ध्यत इति क्वात्र प्रामाण्यं न दृश्यते इत्यत आह **सत्तामात्रं निषिध्यते इति** ।

अयं भावः । श्रुत्या "नास्ति" इति सत्ता निषिध्यते सा च सत्ता व्यावहारिकी वा पारमार्थकी वा प्रातिभासिकी वा इत्येतत् विना प्रमाणं निर्णेतुं नैव शक्यते । तथा च यतः श्रुतौ सत्ता सामान्यतो निषिध्यते तस्मात् अत्र पारमार्थिक सत्त्वनिषेधविषये, व्यावहारिकसत्त्वनिषेधविषये वा प्रामाण्यं न दृश्यते इति ।

ननु परीक्षादिभिः प्रत्यक्षस्य प्रामाण्यं अवगतम् । अपौरुषेयत्वादिभि स्तु श्रुतेरपि प्रामाण्यं निश्चितम् । तयो र्विरोधे प्राप्ते तत्परिहारार्थं जगति व्यावहारिकसत्त्वं अभ्युपगम्य श्रुतेः तादृशसत्त्वानि षेधविषयकत्वं चोपगम्यते इत्यत आह **घटादौ इति** । त्वन्मते घटादौ व्यावहारिकसत्यता केन प्रमाणेन प्राप्ता इत्यन्वयः ।

न केनापीत्यर्थः। तथा हि व्यावहारिकसत्यत्वं मिथ्यात्वाविरोधि तच्च यद्व्यवहाराकालाबाध्यं इति हि त्वन्मतं। तच्च घटादौ किं प्रत्यक्षेण सिद्धम्। उत अनुमानेन आहोस्विदागमेन। नाद्यः। घटादौ मिथ्यात्त्वस्याननुभवात्। यत्सहचारितसत्त्वं सिद्ध्येत्। न द्वितीयः। तत्रैव इदानीं विवादसद्भावात्। नान्त्यः। तथानुपलंभात्। न च श्रुतिप्रत्यक्षविरोधेऽन्यतरस्याप्रामाण्ये प्राप्ते सत्त्वविषयकतया प्रत्यक्षस्य सिद्धे च प्रामाण्ये, अर्थापत्या परिशोषात् वा श्रुतेः पारमार्थिकसत्त्वनिषेधविषयकत्वं, प्रत्यक्षस्य व्यावहारिकसत्त्वग्राहित्वं च सिद्ध्यति इति न वाच्यम्। तथा सति श्रुतेः प्रातिभासिकसत्त्वनिषेधविषयकत्वेनापि विरोधपरिहारस्य संभावात् इत्याह **सत्तात्रैविध्यमिति**। यत इति शेषः। यत यस्मात्कारणात् त्वन्मते सत्तात्रैविध्यमीरितं उक्तं तस्मात् नात्र परि[illegible]प्रमाणम्। प्रातिभासिकसत्त्वस्य तृतीयस्य सत्त्वात् न व्यावहारिकस्य परि[illegible]माणत्वं अन्यथात्युपपत्त्या अर्थापत्तेरभावाच्चेति भावः।

ननु प्रातिभासिकसत्त्वाभावस्य घटादौ प्रत्यक्षेणैव सिद्धत्वात् श्रुतेः वैय्यर्थ्यापत्त्य, यावहारिकसत्त्वं परिशिष्यति इत्यत आह **सत्तात्रैविध्यं इति**। यतः त्वन्मते प्रमाणेन विना सत्तात्रैविद्यं ईरितं तस्मात् घटादौ व्यावहारिकत्वेनेत्यर्थः तस्मात् एकविधमेव सत्त्वं प्रमाणसिद्धं अङ्गीकर्तव्यम्। तच्च अस्मत्पूर्वाचार्यैः प्रमाणपुरस्सरं दर्शितम्। एवं स्थिते सत्तात्रैविध्यमसाधयित्वा यत्किमपि प्रलपन् उन्मत्तवन्न मान्योभवसि इत्याह **त्रिकालेत्यादिना** ॥९७ - १०१॥

**सिद्धान्तः तात्विकत्वं निषेधस्यायोगित्वं यदि ते मतं**
**मिथ्या श्रुते र्विरोधस्तु प्रत्यक्षेण दुरुद्धरः ॥ १०२ ॥**

**तात्विकत्वमिति**। अयमर्थः। पूर्वपक्षिणा तावत् परीक्षितप्रमाणत्वशब्दबाध्यमपि इष्यते। प्रत्यक्षं तात्विकत्वेन व्यावहारिकगोचरं इति प्रयुक्तं। तत्र तात्विकत्वेन इत्यस्य अन्वय कुत्र इति पृच्छ्यते। यदि बाध्यमित्यत्र तदा व्यावहारिकगोचरं व्यावहारिकविषयकं प्रत्यक्षं तात्विकत्वेन परीक्षितप्रामाणत्व शब्दबाध्यम् इष्यते इत्यन्वयः भवति। तथा च परीक्षितप्रामाण्यवऽच्छब्दनिष्टबाधकता निरूपिततात्विकत्वावच्छिन्नबाध्यत्वावत् व्यावहारिकविषयकप्रत्यक्षं इति

बोधः स्यात् । यदि वा व्यावहारिकगोचरम् इत्यत्र तर्हि तात्विकत्वावन्विन्नं यत्व्यावहारिकगोचरत्वं तद्वत्प्रत्यक्षं तथा च तात्विकत्वावच्छिन्नं यत् व्यावहारिकनिष्टविषयतात्वं तन्निरूपकं प्रत्यक्षं इति शाब्दबोधः स्यात्।

नान्यातरदप्यत्रोपपद्यते । तथाहि तत्र न तावदाद्यः बाध्यतावच्छेदकीभूतं तात्विकत्वं यदि मन्मतरीत्या (त्रैकालिक) निषेधाप्रतियोगित्वं तवाप्याभिमतं तर्हि तदवच्छित्रं प्रत्यक्षं अपि तात्विकत्वं विषयीकरोति इति आगतं तद्विषयीकारित्वातिरिक्तस्य तदवच्छिन्नत्वस्येह दुरुपपादत्वात् । तथा च तात्विकसत्त्वग्राहिप्रत्यक्षेण तात्विक सत्त्वनिषेधयित्र्याः श्रुतेः विरोधः दुरुद्धरः स्यात् । विरुद्धविषयकयोरेव बाध्यवाधकभादोपपत्तेः । ततश्च " अतो न विरोधः" इति अद्वैतिसिद्धिविरोधःश्च दुरुद्धरः तव स्यात् । तात्विकव्यावहारिकविषयकत्वयोःसामानाधिकरण्यासंभवात् व्यावहारिकविषयकं प्रत्यक्षं, तात्विकत्वावच्छेदेन शब्दबाध्यमिति व्याहतेश्च । "बाध्यते च तात्विकत्वाकारः इति तात्विकत्वस्यैव बाध्यत्वेन तस्य बाध्यतावच्छेदकत्वायोगात् । त्रैकालिकनिषेधाप्रतियोगिनः तात्विकस्य निषेधप्रतियोगित्वरूपबाध्यत्वासंभवाच्च प्रत्यक्षस्य तात्विकत्वाभेदस्य त्वदनभिमतत्वादयोगाच्च ॥

**भाविकलेप्यबाध्यत्वं तात्विकत्वं मतं यदि ।**
**प्रत्यक्षेण तदग्राहात् तत्त्वेनेति त्वदीरितं ॥ १०३ ॥**
**मृ षा स्यात् भाविबाध्यत्वं मिथ्यात्वं यदितेप्रमं ।**
**श्रुतौ यत्रेहनानास्ति किञ्चनेति लटा युतं ॥ १०४ ॥**
**पदं न युक्तं किन्तु स्याद्भवितेत्यादिनायुतं ॥ १०५ ॥**

ननु व्यावहारकाले (वर्तमाने) अबाध्यत्वं व्यावहारिकत्वं । भविकालेप्याबाध्यत्वं तात्विकत्वम् । श्रुतेः अबाध्यत्वांशे प्रत्यक्षविरोधः । अविरोधवचनं तु उक्तव्यावहारिकत्व, तात्विकत्वाभावयोरविरोधाभिप्रायकम् । इति परस्वभावजां मौढीं शंकामपि निराह भाविकाले इत्यादिना मृषा स्यादित्यन्तेन ॥

"भाविकालेऽपि" इत्यपिः लक्षणे कालान्तरसमुच्चयार्थः। तत्पक्षे उक्तदोष समुच्चयपरो वा। नापि द्वितीयः कल्पः। व्यावहारिकविषयकत्वस्य अबाधितत्वं (त्रैकालिकनिषेधाप्रतियेगित्वे) तादृशस्यैव तात्विकत्वस्य श्रुत्या निषेधात् मिथ्याश्रुतेः विरोधस्तु प्रत्यक्षेण दुरुद्धरः स्यात्। ब्रह्मातिरिक्तस्य व्यावहारिक गोचरत्वस्य त्वन्मते तात्विकत्वासंभवाच्च (अद्वैतहानेः)। तथा च तात्विकत्वावाच्छिन्ना या व्यावहारिकनिष्टविषयता इति इत्युक्तं स्यात्। तच्चायुक्तं केवालांन्वयिनः व्यधिकरणधर्मावाच्छिन्नप्रतियोगिताकाभावस्यकैश्चिदङ्गीकार्यत्वेऽपि तादृशविषयताया अनङ्गीकारात् अङ्गीकारेऽपि त्वन्मते उक्तोभयरूपस्यापि तात्विकत्वस्य विषयतावच्छेदकत्वं तस्य प्रत्यक्षनिरूपितत्वाभावात् असंभावितमेव। तदेतदेवाह **प्रत्यक्षेण तदग्राहात् इति** ॥

किञ्च व्यधिकरणधर्मावाच्छिन्नप्रतियोगिताकाभावस्य विरोध्यभावात् व्यधिकरणधर्मविच्छिन्न विषयताकप्रत्यक्षस्य विरोधिज्ञानाभावात् तस्य शब्दबाध्यत्वोक्तिः मृषैव स्यात्।

**सिद्धान्तः सत्तानिवारकंश्रौतवाक्यं यज्जगतीष्यते।**
**सत्तायां तात्विकत्वस्य वारकं तत्कथं भवेत्॥ १०६॥**

**अतस्त्वदर्थं सन्त्यज्य त्यज मिथ्येति चाग्रहं।**
**घटो नास्तीतिवाक्ये न घटसत्त्वं निषिध्यते॥ १०७॥**

**पटसत्त्वेन संयुक्तं इति स्याद्घटवत्यपि।**
**भूतलेतुघटो नास्तीत्युक्तं वाक्यं प्रमापकम ॥१०८॥**

अपि च "नेह नानास्ति किञ्चन" इति हि श्रुतिः जगन्मिथ्यात्वं अद्वैतं च बोधयति इति परमतं। तस्यास्च भाविकालाबाध्यत्वरूपतात्विकत्वनिषेधपरत्वे भाविकालबाध्यात्वमेव मित्यात्वं पर्यवसितम्। तच्च नाद्वैतश्रुत्या बोद्धुमर्हम्। तत्र भविष्यत्कालसंबन्धबोधकलादेशाद्यभावात्। किन्तु "वर्तमानेलट्" (३-१२३) इत्युपदिष्टरीत्या "अस्ति" इति भूतभाविष्यत्प्रतिद्वन्द्विनः वर्तमानकालसंबन्धबो-

धकलट एव दर्शनात् । तथा चोक्तं महाभाष्ये भूतभविष्यतोः प्रतिद्वन्द्वी वर्तमानः कालः इति । यदि तव उक्तमिथ्यात्वे एव आग्रहः (स्यात्) श्रुतौ "नेह नाना" "भविता" इति प्रयोगः स्यात् । तथाऽभावात् त्वदुक्तं न युक्तं इत्याह **भावि-बाध्यत्वं मिथ्यात्वं यदीति** । अप्रमं अप्रमाणं प्रमाणासिद्धं विरुद्धं वा । "मतं" इति यदि इत्यनन्तरं शेषपूरणेन योज्यम् । अस्तु मित्यात्वं यत्किञ्चित्, अस्तु वा तात्विकत्वं तथा तथापि श्रुतेः सत्तायां तात्विकत्वनिषेधतात्पर्यं न युज्यते इत्याह **सत्तानिवारकं इति** । यत्, जगति सत्तानिवारकं श्रौतवाक्यं (त्वाया) इष्यते, तत् सत्तायां तात्विकत्वस्य वारकं कथं भवेत्? इत्यन्वयः ।

ननु कोयं आक्षेपः श्रुतौ 'नास्ती', ति सत्ता निषिध्यते । सा च तात्विकी इत्युक्तम् । तथा च तात्विक सत्तानिषेधे विशिष्टविधिन्यायात् सत्तायां तात्विकत्वं स्वतो निषिद्धमेव इति चेन् मैवम् । भावानुभावाभावात् तव "नेह नानास्तिकिञ्चन" इत्याद्यद्वैतश्रुत्या पूर्वश्रुतिभिरनूदिता सत्तैव खलु निषिध्यते इति त्वन्मतम् । न हि अन्यदनूद्यते अन्यन्निषिध्यते इतियुक्तम् अतिप्रसङ्गात् अन्यासां श्रुतीनां अद्वैतश्रुतिशेषत्वाभावप्रसङ्गाच्च । अप्रसक्तस्य निषेधायोगाच्च । अनुवादवैय्यर्थ्यात् । अनूदितस्यानिषेधे मुख्यार्थत्वापत्त्या अद्वैतासिद्धेश्च । तस्मात् निषेधश्रुत्यनुरोधेन तात्विकसत्ताया एवानुवाद्यत्वं वक्तव्यं । तच्च त्वन्मते नोपपद्यते तस्या (तात्विकसत्तायाः) मानान्तराप्राप्तत्वात् । एवं सति प्रत्यक्षादे र्व्यावहारि-कविषयतां, व्यावहारिकप्रामाण्यं चाभ्युपगच्छन्भवान् कथं सत्तानिवारकं श्रौतवाक्यं सत्तायां तात्विकत्वस्य वारकं अभ्युपगच्छेत् कथं वा तत् भवेत् ? इत्याक्षेपुराशयः । अनुवादमुख्ययोरेकवाक्यत्वाय नैषेधिकस्य व्यावाहरिकविषय-कत्वं वा, अनुवादकस्य मानान्तरगृहीत तात्विकविषयकतां वा अङ्गीकृत्य समा-धातव्ये प्रत्यक्षश्रुत्योः दुष्परिहर एवायं विरोधः ।

नन्वेवं सति विरोधपरिहारार्थं किं कर्तव्यं इत्यत आह **अतस्त्वदर्थं संत्यज्येति** । ननु मदुक्तार्थपरित्यागे मिथ्यात्वसिद्धिः कथं भवेत् इति चेत् तत्राप्याह **त्यज मिथ्येति चाग्रहमिति** । चो दुर्मतं तदपि त्यजेति एवं परः । प्रतिबध्याक्षेपं चाह **घटो नास्तीति** । "घटो नास्ति इति वाक्ये घटसत्त्वं न निषिध्यते । किंतु पटसत्त्वेन संयुक्तं निषिध्यते इत्येवं घटवत्यपि भूतले घटो नास्तीति उक्तं वाक्यं प्रमापकं

स्यात् इत्यन्वयः। अयमर्थः। घटवति भूतले घटो नास्तीति वाक्ये प्रयुक्ते तस्याप्रामाण्यं सार्वजनीनम्। तत्र नास्तीति सत्तासामान्यं निषिध्यते। प्रत्यक्षेण तु घटस्य सत्तानुभूयते। अतः तद्विरुद्धग्राहकं वाक्यं अप्रमाणमिति सार्वलौकिकव्यवहारः। एवं प्रत्यक्षेण "घटःसन्" "पटःसन्" "घटःपटाद्भिन्नः" इत्यादिना सत्ता अनुभूता। सा "नाना नास्ति" इति वाक्येन निषिध्यते चेत् सत्तावति सत्तानिषेधे तद्वाक्यस्य अप्रामाण्यं स्यादेव। यदि तयोः प्रत्यक्षवाक्ययोः भिन्नसत्ताविषयकत्वेन विरोधः परिह्रियते। तर्हि तेनैव न्यायेन घटवति भूतले घटः नास्ति इति वाक्यं अपि प्रत्यक्षगृहीतघटसत्त्वातिरिक्तं घटे पटसत्त्वं निषेधति इति विरोधपरिहारसंभवेन वाक्यस्याप्रामाण्यं लोकव्यवहारसिद्धं, न स्यात्। यदि घटवति घटो नास्ति इत्यत्र सत्त्वभेदे प्रमाणाभावात् लोकव्यवहारानुच्छेदः, तर्हि समं श्रुतिवाक्येऽपि। व्यावहारिकतात्विकत्वेन सत्ताभेदे प्रमाणाभावात्॥

ननु घटवति भूतले घटो नास्तीति वाक्यस्य प्रामाण्यं न निश्चितम्। तस्मात् परीक्षितप्रत्यक्षविरोधे तस्य अप्रामाण्यं सेत्स्यति। न तथा श्रुतिवाक्ये श्रुतेरपौरुषेयत्वादिना। प्रामाण्येऽवधारिते परीक्षितप्रत्यक्षविरोधे च भिन्नसत्तादि स्वयं अर्थापत्त्या प्रमाप्यते। इति चेन्मैवं। तथासति परीक्षितप्रत्यक्षेण विरोधे श्रुतेरर्थान्तरकल्पनां विनाऽनुपपन्नता त्वदङ्गीकृता स्यात्। न चेष्टापत्तिः सर्वत्र परीक्षाया साम्येन अद्वैतश्रुतेः परीक्षितविरोधस्य च सार्वत्रिकत्वात् अर्थ संकोचस्यावश्यकत्वेन अनुमानागमयोः प्रत्यक्षबाधकत्वासिद्धेः। परीक्षया प्रत्यक्षस्य व्यावहारिकप्रमाण्यमात्रं सिद्धं तत्तु आगमेन न बाध्यते इति **ब्रुवन्भवान्** तात्विकप्रमाणस्य अत एव प्रबलाया श्रुतेरर्थसंकोचं व्यावहारिकप्रमाणेन दुर्बलेन प्रत्यक्षेणाविरोधार्थं किलाश्रितवान् श्रुतेः प्रत्यक्षसमानविषयकतेऽपि प्राबल्येन बाधकत्वसंभवे अविरोधसंपादनस्य वैय्यर्थ्यात् अन्यथाव्यावहारिकप्रमाणमपि प्रत्यक्षं तात्विकप्रमाणश्रुत्यपेक्षया प्रबलमेव स्यात्।

**पूर्वपक्षः** **प्रत्यक्षाद्वेदवाक्यस्याद्वैततात्पर्यकस्य च।**
**प्राबल्यं तेन बाध्यत्वं प्रत्यक्षस्य श्रुतेर्गिरा।**

**सिद्धान्तः** **इतित्वदुक्तं युक्तं नाद्वैते तात्पर्यमेव नो।**

**किन्तु विष्णूत्कर्ष एव सवोत्कर्ष, इति श्रुतेः ॥ १०६ ॥**

**अद्वैते श्रुतिवाक्यानां तात्पर्यं निष्प्रमाणकं**
**उपक्रमादितात्पर्यलिङ्गं तत्र च बाधकं ॥ ११० ॥**

**तत्त्वमस्यादिवाक्येषु दर्शितं मम पूर्वकैः**
**भेद एवोपक्रमाद्यं सप्रमाणं समार्थितम् ॥ १११ ॥**

ननु श्रुतिस्तावत् अपौरुषेयत्वादिना परमप्रमाणं इति अविवादम्। तस्याश्च उपक्रमादिलिङ्गैःअद्वैते एव तात्पर्यं निर्णीतं प्रत्यक्षं तु तद्विरुद्धं गृह्णाति । तथा चावश्यं तेनाप्रमाणेन भवितव्यं। एवं प्रबलया श्रुत्या प्रत्यक्षे बाधिते श्रुत्यनुगृहीतानुमानस्यापि प्राबल्यं स्वतस्सिद्धं इति नेह मिथ्यात्वानुमाने "सन्घटः" इति प्रत्यक्षाद्बाधः इति पूर्वपक्षम नूद्य तन्निराकरोति **इति त्वदुक्तं इत्यादिना**। यतः ततः इत्यध्याहृत्या योज्यं यतः यस्मात् कारणात् (श्रुतेः) अद्वैते तात्पर्यं एव नो नास्ति तस्मात् त्वदुक्तं न युक्तं इत्यन्वयार्थः। अयं भावः। स्यादेतद्यदि निश्चितप्रामाण्याया श्रुतेः अद्वैते तात्पर्य निश्चितं नैवं श्रुतिरपि द्वैतमेव प्रत्यक्षोपोद्बलितं गृह्णातिति इति तयोर्विरोधाभावात् न श्रुत्या बाधः। नापि प्रत्यक्षस्य दौर्बल्यं इति अनुमाने बाधः स्यादेव इति।

ननु चैवं सति श्रुतेःतात्पर्यं कुत्रेति चेदाह **किन्त्वित्यादिना**। "सर्वोत्कर्षे देवदेवस्य विष्णोः महातात्पर्यं "नैवचान्यत्र किञ्चित्" इति श्रुतिश्च यस्मात् विष्णोः सर्वोत्तमत्वे एव श्रुतेस्तात्पर्यं अस्ति इति वक्ति तस्मात् त्वदुक्तं युक्तं नेत्यर्थः। किञ्च प्रत्युत बाधकं चास्तीत्याह **उपक्रमादीति**। **दर्शिमिति**। टीका कृत्पादप्रभृतिभिः श्रीमन्न्यायसुधादिषु।

**पूर्वपक्षः अद्वैतपरवेदान्तानुमानाद्यविरोधिता।**
**प्रत्यक्षादेरतःसिद्धा भाविबाधविनिश्चयात्।**

**सिद्धान्तः प्रत्यक्षं तात्विकत्वेनेत्युक्तं पद्यं न युक्तिमत् ।**
**तस्माद्यन्नास्ति नास्त्येव यच्चास्ति परमार्थतः ॥ ११२ ॥**

**तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना ।**
**तुल्यार्थत्वेपि तेऽयुक्ता मिथ्यासंवृतिशब्दयोः ॥११३ ॥**

**वंचनार्थमुपन्यासो लालावक्त्रासवादिवत्**
**इति त्वद्वार्तिकाचार्यवचनेन निरुध्यते ॥ ११४ ॥**

ननु व्यवहारकाले प्रत्यक्षादेरबाधितत्वेन सिद्धे व्यावहारिकप्रामाण्ये, भाविकालाबाधनिश्चयादेव तस्य बाध्यत्वनिश्चयाच्चाप्रामाण्ये च निश्चिते, आपौरुषेयत्वादिना श्रुतेः तात्विकप्रामाण्यनिश्चयेन द्वैतप्रत्यक्षाद्वैतागमयोरविरोधःसिद्ध्यति इत्यतः "प्रत्यक्षं तात्विकत्वेन" इति पद्यखण्डनेनैव भाविबाधोपपत्तेरपि खण्डितत्वं मत्वा दोषान्तरमपसिद्धान्तमप्याह **प्रत्यक्षमिति आदिना** । यतः ततः इत्यध्याहृत्य योजना । यतः इति त्वद्वार्तिकाचार्यवचनेन "प्रत्यक्षंतात्विकत्वेन" इत्युक्तं पद्यं निरुध्यते, ततः (तस्मात्) (सर्वं) तव पद्यं न युक्तिमत् इत्यन्वयार्थः ।

बौद्धमतं खण्डयतो वार्तिककृतोयमाशयः । सांवृतिक सत्यं परमार्थसत्यं इति सत्यद्वयकल्पना बौद्धकृता न युक्ता ।यस्मात् यद्बाध्यं तत्सर्वथा त्रैकालिकाभावप्रतियोग्येव, यदबाध्यं त्रैकालिकानिषेधाप्रतियोग्येव, तस्मात् यद्वर्तमानकालीनाभावप्रतियोगि तत् त्रैकालिकाभावप्रतियोग्येव भवति, तादृशाभावस्य अत्यन्ताभावत्वात् । यथा शषविषाणादि। यच्च वर्तमानकाले सत्तावत् न तत् कालत्रयेऽपि सत्तावदेव । निषेधाप्रतियोगित्वस्यापि त्रैकालित्वनियमात् । यथा आत्मा । तदेतत् द्वयातिरिक्तं जगत् तत् मिथ्यैव तस्मात् सत्यद्वयकल्पना ते (बौद्धस्य) अयुक्ता।न च जगत् उक्तप्रकारद्वयरहितं सांवृतसत्यं, न तु मिथ्या इति वाच्यम् । मिथ्यासंवृतिशब्दयोः तुल्यार्थत्वेन तवायं उपन्यासः लालावक्त्रासवादिवत् वञ्चनार्थं प्रवृत्तोऽयुक्त एव इति ।

एवमाशयवतः तव असिद्धिकृतः पूर्वाचार्यवचनेन विरोधात् अपसिद्धान्तश्च स्यात् । त्वयापि अप्रमागव्यावहारिकप्रमाणशब्दयोः तुल्यार्थत्वेऽपि तदुपन्यासः वञ्चनार्थं कृतः । यत् व्यवहारकाले प्रमाजनकं तत्सर्वथा प्रमाणमेव अप्रमाया त्रैकालिकनिषेधप्रतियोगिविषयकत्वनियतेः यथा शशविषाणविषयकम्। प्रत्यक्षादेः व्यावहारिकप्रामाण्यं अभ्युपगच्छता त्वया व्यवहारकाले प्रमाणत्वाङ्गीकारावश्यं भावात् तदतिरिक्त तात्विकप्रामाण्यस्यासंभावाच्च त्वदुक्तं सर्व अयुक्तं इति भावः । यद्वा व्यावहारिकसत्यं पारमार्थिकसत्यं इत्येवं सत्यद्वयकल्पना ते मतेऽपि अयुक्ता यदि अनन्यार्थावपि मिथ्याव्यावहारिकसत्यशब्दौ प्रयुंक्षे, तर्हि किमधिकं अपराद्धं बौद्धेन यं वञ्चकं खण्ड्यं मन्यसे इत्याशयः ।

किञ्च यद् भाविकालीनाभावप्रतियोगि तद्वर्तमानकालीनाभाव प्रतियोग्येवेति, यच्च वर्तमानकाले सत्तावत् तत्परमार्थत एव सत्तावदिति तृतीयप्रकारकसत्ताया, वर्तमानकाले पदार्थनिष्ठाया भाविकाले बाध्याया, अभावात् तदुपन्यासः वञ्चनार्थमेवेति अयुक्तः एव। तथा च वार्तिकाचार्यवचनेन स्वस्यै ( वाकृ ) व पद्यं निरुध्यते ।तथा च स्ववचनविरोधः । इत्थं च यस्य भाविकालीबाध निश्चयः शङ्का वा न तस्य वर्तमानकाले सत्तोपपद्यते । भाविकाले बाधं बोधयत आगमानुमानादेः वर्तमानकाले सत्ताग्राहिणा प्रत्यक्षेण कथं न विरोधः तस्मात् भाविबाधविनिश्चयात् अद्वैतपरवेदान्तानुमानुमानाद्यविरोधिना प्रत्यक्षादेर्न सिद्ध्यति इति भावः ।

अयमत्राभिसन्धिः । व्यावहारिकप्रामाण्यं व्यावहारिकसत्यत्वं वा अद्वैतरीत्या अप्रमाण्यमिथ्यात्वाविरोधि । बाधो नाम प्रसक्तप्रतियोगिकत्रैकिलिकनिषेधविषयकयथार्थज्ञानम् । स च भ्रमव्यवहितोत्तरकाले जनिष्यमाणः भावीति कथ्यते । प्रत्यक्षं तु मिथ्याभूतं व्यावहारिकसत्यं प्रसञ्जयति यत्प्रतियोगिक अत्यन्ताभावविषयकः श्रौत उत्पत्स्यमानो यथार्थग्रहः भाविबाध इत्युच्यते । तथाच श्रौतभाविबाधः प्रत्यक्षविरोध्येवेति प्रत्यक्षप्राबल्ये श्रुतिरेव बाधिता भवति श्रुतेः तादृश बोधजननसामर्थ्यस्यैवाभावात् न हि शुक्तियथार्थज्ञानः पूर्वोत्पन्नं औत्तरं रजतभ्रममनिवारयद्दृष्टम् ।

इत्थं च यदि भाविबाधो निश्चितः तर्हि श्रुत्यनुमानविरोधस्य प्रत्यक्षे वश्यंभावात्, प्रत्यक्षाविरोधाधीन श्रुतिप्रामाण्यस्य, भिन्नविषयकत्वेन तयोर-विरोधस्य वा वक्तुमशक्य त्वात् त्वदुक्तं अयुक्तं स्वव्याहतं इति । यदि च भाविबाधनिविश्चयात् इदानीं प्रत्यक्षस्य प्रामाण्यं परित्यज्यते तर्हि व्यावहा-रिकप्रामाण्यं अपि व्याहन्येत इति । प्रस्तरादिवाक्य इव अद्वैतवाक्येऽपि गौणार्थता दुष्परिहरैव स्यात् । तथा च अद्वैतवाक्यस्य प्रत्यक्षाविरोधित्वं वा बाधकत्वं वा अन्यतरदेव अद्वैतिभिरङ्गीकार्यं स्यात् न तु सकृदुभयमपि इति सिद्धम् ।

**सिद्धान्तः व्यावहारिकसत्यत्वं आगमेनेतित्वद्वचः ।**
**घटो नास्तीति वाक्येनघटे नैल्यं न बाध्यते ॥ ११५ ॥**
**अतस्त्वदर्थं संत्यज्य श्रुतेरन्यार्थमाश्रय ॥**

ननु प्रत्यक्षं व्यावहारिकसत्यत्वं (मानत्वं) गृह्णाति श्रुतिस्तु प्रत्यक्षे तात्विकसत्यविषयकत्वमात्रं बाधते अतो न तयोर्विरोधः तात्विकसत्त्वनिषेधेन श्रुतेः बाधकता चोपपद्यते इत्यत आह **व्यावहारिकेति** । त्वद्वचः न युक्तिम-दिति पूर्वेणान्वयः ।"यथा" इति इति वचः इति च अध्याहृत्य योज्यम् ।

तथा च "व्यावहारिकसत्यत्वं आगमेन न बाध्यते" इति त्वद्वचः न युक्तिमत् । यथा घटो नास्तीति वाक्येन घटे नैल्यं न बाध्यते इति वचः न युक्तिमत् तथा इत्यन्वयः । अयं भावः । घटोऽस्ति इति प्रतीत्यनन्तरं घटो नास्तीति वाक्ये प्रयुक्ते च तत्र तयो विरोधे प्राप्ते, वाक्येन घटे नैल्यं न बाध्यते किंतु सत्तामात्रं इति अविरोधः निषेधवाक्यत्वेन तेन बाधः चेति वदन् यथा श्लाघनीयप्रज्ञः तथा भवानपि इति अप्रसक्तस्य निषेधायोगात्, यथा हि घटोऽस्ति इत्यत्र नैल्यं न प्रसक्तं यदुत्तरवाक्येन न बाध्यते इत्युच्यते, तथा सन्घटः इति प्रत्यक्षेऽपि व्याव-हारिकसत्वस्य प्रसक्ति र्नास्ति यन्न निषिध्यते इत्यविरोधसंपत्तिः युज्यते । प्रसक्तस्य च अस्तित्वस्य, तात्विकसत्त्वस्य वा उत्तरवाक्येन श्रुत्या वा निषेधे

विरोधः सुस्थ एव इलि । नन्वेवं तर्हि मया किं कार्यं इत्यत आह **अत इति** । अतः एवं दोषपरंपरासद्भावात् इत्यर्थः ।

**॥ प्रत्यक्षस्यानुमानागमाबाध्यत्वे बाधकविवरणं ॥**

**। इति समाप्तोयं प्रथमो भागः ।**

**॥ श्रीमध्वेशार्पणमस्तु ॥**

श्रीनिवासगुरोर्दिव्या चरणांभोरुहस्मृतिः
माता कृतेर्भवत्यस्याः केवलं लेखका वयम् ॥



श्री विश्वप्रियमध्वनाथश्रीपादाः पूर्वाश्रमे ताम्रपर्णी मध्वाचार्या इति ख्याताः कावेरीतीरे भूवैकुण्ठायमाने श्रीश्रीरङ्गक्षेत्रे श्रीमदाचार्यशास्त्रपाठप्रवचनादिभिः कुलभूषणायमानाः अवात्सुः । परमतनिरसनचणा इमे 'न्यायामृतकलाधर' नामकं ग्रन्थरत्नं तथा अनेकानपि वादग्रन्थान् प्रणिनिन्युः । चतुःशास्त्रकोविदास्तपोनिष्ठा अमी आचार्याः अप्रतिग्रहवृत्त्या श्रीद्रोणाचार्यान्स्मारयन्तः कठिनमपि संसारभारं वरमिव भगवतः परमात्मनं इति वहन्तः स्वायुः सार्थकीचक्रुः निजतनुजन्मनि सुकीर्तिमनि गीतार्थविभूषणशिरोमणिनि सि एम् श्रीपद्मनाभाचार्ये भवभरं न्यस्य क्रैस्त 1910 तमे, सन्न्यासं स्वीकृत्येतोप्यतिशयनीं श्रीभगवत्सेवां व्यदाधधुः क्रैस्त 1931 तमे परमपवित्रश्रीङ्गक्षेत्रे वृन्दावनं प्रविविशुः । स्वग्रन्थैरद्यापि अस्मन्मनसि लसमानाः इमे श्रीचरणाः स्वाशीराशिभिः अस्मानुद्धरन्तु ।